# ॥ विज्ञापना ॥



पाणिनीय व्याकरणव्याख्याभूतानि काशिकादीनि ग्रन्थानि अतिवृहन्ती असारांशवहुलानीत्यभिमन्य मानैः श्रीभट्टोजिदीक्षितैः प्राचीनोक्तिखण्डन पुरस्सरं सिद्धान्तकौमुदी निरमायि साच विस्तृतत्वाह्वालानां समीचीनोपकारं नकरिष्यती त्यभिमत्य तच्छ्रिष्य श्री वरदराजकृतिना सिद्धान्तकौमुदीतः सारांशमात्रमादाय मिताक्षरा ऽमितार्थ प्रकाशिका मध्यसिद्धान्तकौमुदी निर्मिता सा चेदानीं पुस्तकानुपलब्ध्या पठनपाठनेषु विरलप्रचारा जाता इतिसकलविद्वज्जनविद्यार्थिजनोपकाराय नेपालदेशीय पण्डित देवराजशर्मणा । द्वित्राणि पुस्तकानि महता प्रबन्धेन सम्पाद्य अञ्जुमलाकूयन्त्रालये मुद्रणायसमर्पिता अदादिपर्यन्तं मुद्रिताच तद्यन्त्रालयाध्यक्ष विहारिसिंहस्य दौःशील्याद्बहुशः स्थलेसंस्कृतापि अशुद्धाजाता इति तत आनीय जैनप्रभाकरनाम्नि यन्त्रालये मुद्रयितुमारब्धा तत्प्रभृति पण्डित श्री विश्वनाथ शर्मणा संशोधिता साचैषाकौमुदी वालानामती वोपकारिका इति विद्वद्भिर्दर्शनीया इति शम ॥ ॥ ॥

# ॥ मध्यकौमुदी ॥

श्री पशुपतिनाथ शरण

श्रीगणेशायनमः ॥नत्वा वरदराजः श्रीगुरून् भट्टोजिदीक्षितान् ॥ करोति पाणिनीयानां मध्यसिद्धान्तकौमुदीम् ॥१॥ अइउण् १ ऋलृक् २। एओङ् ३ ऐऔच् ४ हयवरट् ५ लण् ६ ञमङणनम् ७ झभञ् ८ घढधष् ९। जबगडदश् १०। खफछठथचटतव् ११ कपय् १२ शषसर् १३। हल् १४ ॥ इतिसूत्राण्यणादि संज्ञार्थानि ॥ हकारादि ष्वकार उच्चारणार्थः लणमध्ये त्वि,त्संज्ञकः ॥ हकरोद्विरूपात्ते। यमटि शल्प पि वांछता ॥ अर्हं णा धुक्षदि त्यत्रद्वयं सिद्धं भविष्यति ॥ २॥ हलन्त्यम् १।३।३ उपदेशेऽन्त्यं हलित् स्यात् ॥ उपदेश आद्योच्चारणम् ॥ सूत्रे ष्वदृष्टं पदं सूत्रान्तरा- दनुवर्त्तनीयंसर्वत्र ॥ अदर्शनं लोपः ॥ १।१।६० प्रसक्तस्यादर्शनं लोपसंज्ञस्यात् ४६ कृत्तद्धितान्तास... लोपःस्यात् ॥ णादयोऽणाभिस ङेभ्यांभ्यस् ङसिभ्यांभ्यसमौ ... ४।१।७ अन्त्ये नेतासः सुऔजसितिप्रथमा ॥ अमौट् शसांद्वे ... ॥ यथाऽणिति-

अइउवर्णानांसंज्ञा एवमचूहल् अलूइत्यादयः ॥ ऊकालो-ज्झ्रस्वदीर्घप्लुतः ।१।२।२७। उश्चऊश्चऊ३श्चवः वांकालइ-वकालोयस्यसोऽच्क्रमाज्झ्रस्वदीर्घप्लुतसंज्ञः स्यात् ॥ स-प्रत्येकमुदात्तादिभेदेनत्रिधा ॥ उच्चैरुदात्तः १।२।२९ नी-चैरनुदात्तः ॥ १।२।३० समाहारः स्वरितः ॥ १।२।३१ सनवविधोऽपिप्रत्येकमनुनासिकाननुनासिकत्वाभ्यांद्वि-धा ॥ मुखना- सिकावचनोनुनासिकः १।१।८ मुखसहि-तनासिकयोच्चार्यमाणोवर्णोनुनासिकः संज्ञंस्यात् ॥ त-दित्थं ॥ अइउऋएषांप्रत्येकमष्टादशभेदाः॥ लृवर्णस्य-द्वादश ॥ तस्यदीर्घाभावात् ॥ ए- चामपिद्वादश ॥ तेषांह्रस्वाभावात् ॥ तुल्या- स्यप्रयत्नंसवर्णं ॥ १।१।९ ता लवादिस्थानमाभ्यंतरप्रयत्नश्चे त्येतद्वयंयस्ययेनतुल्यंत-न्मि थः सव र्णसंज्ञःस्यात् ऋलृवर्णयोर्मिथः सावर्ण्यं-वाच्यम् ॥ अकुहविसर्जनीयानांकण्ठः॥ इचुयशानांतालु ॥ ऋटुरषाणांमुर्द्धा ॥ लृतुलसानांदंता ॥ उपूपध्मानी-यानामोष्ठौ। ञमङणनानांनासिकाच॥ एदैतोः कण्ठ-तालु ॥ ओ दौतोःकण्ठोष्ठं ॥ वकारस्यदंतोष्ठम् ॥ जिव्हामूलीयस्यजिह्वामूलम् ॥ नासिकानुस्वा- रस्य य-त्नो द्विधा॥ आभ्यंतरोवाह्यश्च । आ द्यः पंचधा । स्पृ-ष्टेषत्पृष्टेषद्विवृतविवृतसंवृत भेदात् तत्रस्पृष्टं प्रयत्नं-स्पर्शानां ईषत्स्पृ ष्टमं न्तस्थानां ॥ [illegible]

णां विवृतं स्वराणां ॥ [illegible]

प्रकृयादशायांतुविव[illegible]

धा विवारः सं[illegible]

णोमाहाप्राणउदात्तोऽनुदात्तः स्वरितश्चेति ॥ खरोविवाराः श्वासाश्च घोपाश्च ॥ हशः संवारानादाघोपाश्च । वर्गाणांप्रथमतृतीयपञ्चमायरलवाश्चाल्प प्राणाः । वर्गाणांद्वितीयचतुर्थौ शलश्चमाहा प्राणाः । कादयोमावसानाः स्पर्शाः । यणोंतस्थाःशपसहाउष्माणः ।अचःस्वराः ।ᳲकᳲखइति कखाभ्यांप्रागर्धविसर्गसदृशोजिह्वामूलीयः । ᳲपᳲफइतिपफाभ्यांप्रागर्धविसर्गसदृशउपध्मानीयः । अंअः इत्यचः परावनुस्वारविसर्गौ। अणुदित्सवर्ण स्पचाप्र त्ययः । १ । १ । ६९ अविधीयमानोऽणुदिच्चसवर्ण स्पसंज्ञास्यात् । अत्रैवाण् परेणणकारेण । कुचुटुतुपुएतेउदितः । तदेवमइत्यष्टादशानां संज्ञा । तथेकारोकारौ । ऋकारस्त्रिंशतः । एवंलृकारोपि । एचोद्वादशानां । अनुनासिकाऽननुनासिकभेदेनयवलाद्विधा । तेनानुनासिकास्तेद्वयोर्द्वयोः संज्ञा परःसन्नि कर्षः संहिता । १ ।१ ।१० वर्णानामतिशयितः सन्निधिः संहितासंज्ञः स्यात् ॥ हलोनन्त राःसंयोगः१ । १ ।७ अज्भिरव्यवहिताहलः संयोगसंज्ञाः स्युः ॥ सुप्तिङं १ ४ । १४ तंपदं सुबंतंतिङंतंचपदसंज्ञं स्यात् ॥ इतिसंध्युप योगिसंज्ञाप्रकारणम् ॥ १ ॥ इको यणचि ६ १ ७७इकःस्थानेयणस्यादचिसंहितायांविपये सुधीउपा- ... तस्मिन्निति नि र्दिष्टे पूर्वस्य १ १ ६६ ४६ कृत्तद्धितान्ता... कार्यंवर्णा तरेणाव्यवहित- भिस् ङेभ्यांभ्यस् ङसिभ्यांभ्यसु... १ १ ५० प्रसंगे- सुऔजसितिप्रथमा ॥ अमौट् शसाद्धे... इतिजाते-

॥ अन । चिच ८ ४ ४७॥ अचः प रस्ययरोर्द्वेवास्तो-
नत्वचि । इतिधस्यद्वित्वम् झ लांजश्झशि ८ ४ ५३।
झलांजश स्यात्झशिपरे । इतिपूर्वधस्यदः ।
संयो गा न्तस्यलोपः ८ । २ । २३ । संयोगांतंयत्पदं-
तस्यलोपः स्या त् । अलों त्यस्य १ । ११ ५२ षष्ठिनि-
दिष्टान्त्य स्या देशः स्यात् । इतिप्राप्ते । यणःप्रतिषेधोवा-
च्यः । सुध्युपास्य मद्ध्वरिः । धात्रंशः । लाकृतिः।एचो
यवायावः ६।१।७८। एचः क्रमात्अय्अव्आय् आ-
व्एतेस्युरचि । यथासं ख्यम नुदेशः समा नाम् । १।
३। १० समसंबंधीविधिर्यथासं ख्यंस्यात् । हरये । वि-
ष्णवे । नायकः । पावकः वान्तोयिप्रत्यये । ६ १।७७ या-
दौप्रत्ययेपरेओदौतोरवावौस्तः । गव्यम् । नाव्यम् ।
अध्वपरिमाणेच । गव्यूतिः। धातोस्तन्निमित्तस्यैव।६
१।८० यादौप्रत्ययेपरेधातोरेचश्चेद्वान्तादेशस्तर्हितन्नि-
मित्तस्यैवनान्यस्य । लव्यम् । अवश्यलाव्यम् । तन्नि-
मित्तस्यकिम् ओयते । औयत ।। क्षय्यजय्यौ शक्यर्थे
६ १ ८१ । यांतादेशनिपातनार्थमिदम् क्षय्य
म् । जय्यम् । शक्यार्थेकिम् । क्षेतुंजेतुंयोग्यंक्षेयंपापं-
जेयंमनः क्रय्यस्तदर्थे ६।१।८२॥ क्रेतारः क्रिणियुरिति
बुद्ध्याआपणेप्रसारितंक्रय्यम् । क्रेयमन्यत् । क्रयणार्ह-
मित्यर्थः १। ।१ ।२ अदेङ्गुणः अदेङ्चगुण
तपरस्तत्कालस्य१।१।७०।
णोवर्णः समकालस्यैव
अवर्णादचिपरे

पेन्द्रः । रमेशः गङ्गोदकम् उपदेशेजनुनासिकइत् १।
३।२ उपदेशेनुनासिकोऽजित्संज्ञः स्यात् । प्रतिज्ञानुनासि-
क्याः पाणिनियाः । लण्सूत्रस्थावर्णेनसहोच्चार्यमाणोरे-
फोरलयोः संज्ञा उरण्रपरः ।१।१।५१ ऋइतित्रिंशतःसं-
ज्ञत्युक्तंतस्थानेयोण्सरपरःसंनेवप्रवर्तते । कृष्णर्द्धिः ।
तवल्कारः लोपः शाकल्यस्य । ८।३।१९ । अवर्णपूर्वयोः
पदान्तयोर्यवयोर्वालोपोशिपरे । पूर्वत्रासिद्धम् । ८।२।१
सपादसप्ताध्यायींप्रति त्रिपाद्यसिध्या त्रिपाद्यामपिपूर्वं-
प्रतिपरंशास्त्रमसिद्धम् । हरइह विष्णइह । हरयिह । विष्ण
विह वृद्धिरादैच्१।१।१आदैच्चवृद्धिसंज्ञंस्यात् । वृद्धिरेचि
६।१ ८८आदेचिपरेवृद्धिरेकादेशः । गुणापवादः । कृष्णै
कत्वम् । गंगौघः । देवैश्वर्यंकृष्णौत्कण्ठयम् । एत्येधत्यूठ्सु
६ १ ८९। अवर्णादेजाद्योरेत्येधत्योरूठिचपरेवृद्धिरेकादे-
शः स्यात् । पररूपगुणापवादः उपैति । उपैधते प्रष्ठौ-
हः । एजाद्योःकिम् ॥उपेतः माभवान्प्रेदिधत् । स्वादि-
रेरिणोः । स्वैरं । स्वैरी स्वैरीणि । अक्षादूहिन्यामुप-
संख्यानम् । अक्षौहिणीसेना । प्रादूहोढोढ्येषैष्येषु।प्रौ
हः प्रौढः । प्रौढिः । प्रैषः । प्रैष्यः । ऋतेचतृतीयासमा
से।सुखेनऋतः । सुखार्तः । तृतीयेतिकिम् । परमर्तः ।प्र-
वत्सतरकंबलवसनार्णदशानामृणे । प्रार्णमित्यादि ।
[illegible]योगे । १।४।५९ प्रादयः क्रियायोगेउ-
४८ कृत्तद्धितान्तास[illegible] अप । सं । अनु । अव ।
भिस् ङेभ्यांभ्यस् ङसिभ्यांभ्यसु[illegible] आङ् । नि अधि।
सुऔजसमौट्प्रथमा ॥ अमौट्शसोद्वि[illegible] । परि । उप।

एतेप्रादयः भूवादयोधातवः १।३।१। क्रियावाचिनो-
भ्वादयोधातुसंज्ञाःस्युः उपसर्गादृति धातौ ६।१।९१।
अवर्णान्तादुपसर्गादृकारादौधातौपरेवृद्धिरेकादेशः स्या-
त्। प्रार्छति वासुप्यापिसलेः ।६।१।९२ आदुपसर्गा-
दृकारादौसुब्धातौपरे वृद्धिर्वा। आपिशलिग्रहणंपूजार्थम्
अचोरहाभ्यांद्वे ८।४।४। अचः पराभ्यांरेफहकारा भ्यांप
रस्ययरोद्वे वास्तः। इतिप्राप्ते। शरोचि ।८।४।४९द्वे न
प्रार्षभीयति। प्रर्षभीयति एङिपररूपम्। ।६।१।९४
आदुपसर्गादेङादौधातौपरेपररूपमेकादेशः। प्रेजते।
उपोषति। अचोन्त्यादिटि। १।१।६४ अचांमध्येयोन्त्यः
सआदिर्यस्यतट्टिसंज्ञःस्यात्सकन्ध्वादिषुपररूपंवाच्यम्
तच्चटेः। शकंधुः। कर्कन्धुः। कुलटा॥ सीमंतः॥
केशवेशे। सीमान्तोन्यः। मनीषा। हलीषा। लांगली
षा। पतञ्जलीः। सारङ्गः पशुपक्षिणोः। सारंगोन्यः।
आकृतिगणोयम्। एवेचानियोगे। क्वेवभोक्ष्यसे। अनि
योगेकिम्। तवैव ओत्वोष्ठयोः समासेवा। स्थूलोतुः
स्थूलौतुः। बिंबोष्ठः। बिंबौष्ठः। समासेकिम्। तवौष्ठः।
ओमाङोश्च ॥६।१।९५॥ ओमीआङीचपरे। शिवायो-
न्नमः। शिवआइहि। इतिस्थिते। शिवएहि। शिवे-
हि। अकः सवर्णेदीर्घः६।१।१०१एकादेशः स्यात् दैत्या-
रिः। श्रीशः विष्णूदयः। होतृकारः। [illegible]
६।१।१०६ पदांतादेङो[illegible]
हरेव। विष्णोव। [illegible]
वेदेचैङतस्यगोर[illegible]

गोग्रम् ॥ एङंतस्यकिम् ॥ चित्रग्वग्रम् ॥पदान्तस्य किम् गोः ॥ अनेकाल्-शित् सर्वस्य १।१।५५ ॥ इतिप्राप्ते ङिच्च १।१।५३ । ङिदनेकालप्यन्तस्यैव- स्यात्।अवङ् स्फोटायनस्य ६।१।१२३। पदांतेएङंतस्यगोरवङ्वास्या दचि ॥ गवाग्रम् ॥ पदांतेकिम् गवि ॥ इन्द्रे च ॥ ६।१ १२४ ॥ गोरवङिन्द्रे ॥ गवेन्द्रः ॥ व्यवस्थितविभाषया ॥ गवाक्षः ॥ दूराद्धूतेच ८।२।८४ दूरात्संबोधनेवाक्यस्यटेः प्लुतोवा ॥ अथप्रकृतिभावः ॥ प्लुतप्रगृह्याअचिनित्यम् ॥ एतेचिप्रकृत्याः स्युः ॥ आगच्छकृष्ण३अत्रगौश्चरति ॥ ह्रस्वंलघु ॥ १।४।१० संयोगेगुरु १।४।११ संयोगेपरेह्रस्वं- गुरुसञ्ज्ञंस्यात् ॥ दीर्घंच १।४।१२ गुरुःस्यात् ॥ गुरोरनृ- तोनन्त्यस्याप्येकैकस्यप्राचाम् ८।२।८६ प्लुतोवा ॥ दे३ वदत्त ॥ देवद-३त्त ॥ देवदत्ता ३ ॥ गुरोकिम् ॥ वकारा- दकारस्यमाभूत् ॥ अनृतःकिम् ॥ कृष्ण३एकैकग्रहणंप र्यायार्थम् ॥ ईदूदेद्द्विवचनंप्रगृह्यम् ॥ १।१।११ ईदूदे दन्तंप्रगृह्यंस्यात् हरीएतौ ॥ विष्णूइमौ॥गंगेअमू॥मणी वोष्ट्रस्यलंबेतेप्रियौवत्सतरौमम ॥ इत्यत्रइवार्थेव-शब्दोवाशब्दोवाबोध्यः अदसो मात् ॥ १।१।१२ अस्मात्परावीदूतौप्रगृह्यौस्तःअमी- ईशा ॥ रामकृष्णावमूआसाते॥मात्किम् ॥ अमुकेत्र॥अ- सतिमाद्ग्रहणेएकारोऽप्यनुवर्तेत॥चादयोऽसत्वे॥ १।४।५७अ- द्रव्यार्थाःचादयोनिपातसञ्ज्ञास्युः॥प्रादयः॥ १।४।५८एतेपि

४६ कृत्तद्धितान्तासमासाश्चैतेयाम्प्रयुज्यते
भिस् ङेभ्यांभ्यस् ङसिभ्यांभ्यसङ्सोसाम्ङ्योस्सुपः ॥ लिंगसंख्या-
सुऔजसितिप्रथमा ॥ अमौट् शसांद्वे १।१।१४ एकोऽ

ज् निपातआङ् वर्जः प्रगृह्यः ॥ इइन्द्रः ॥ उउमेशः ॥ वाक्यस्मरणयोरङित् ॥ आएवंनुमन्न्यसे ॥ आएवंकिलतत् ॥ अन्यत्राङित् ॥ ईषदुष्णम् ॥ ओष्णम् ॥ ओत् ॥ १।१।१५ ओदन्तोनिपातःप्रगृह्यः ॥ अहोईशाः ॥ संवुद्धौशाकल्यस्येतावनार्षे ॥ १।१।१६ संवुद्धिनिमित्तकओकारोवाप्रगृह्यो वैदिकेइतौपरे ॥ विष्णोइति ॥ विष्णइति ॥ विष्णइति ॥ मयउञोवोवा ॥ ८।३।३३ मयःपरस्यउञोवोवास्यादचि ॥ किमुउक्तम् । किम्वुक्तम् । इकोऽसवर्णेशाकल्यस्यह्रस्वश्च । ६।१।१२६ पदान्ताइकोह्रस्वावास्युरसवर्णे वि ह्रस्वविधिसामर्थ्यान्नस्वरसन्धिः ॥ चक्रिअत्र चक्र्यत्र ॥ पदान्ताः किम् ॥ गौर्यौ ॥ नसमासे ॥ वाप्यश्वः ॥ ऋत्यकः ॥ ६।१।१२८ ऋतिपरेपदान्ताअकःप्राग्वत्वा ॥ ब्रह्मऋषिः ॥ ब्रह्मर्षिः ॥ पदान्ताः किम् । आर्छत् । इतिस्वरसन्धिः । स्तोश्चुनाश्चुः । ८।४।४० स्तोः सकारतवर्गयोः शकारचवर्गाभ्यांयोगेशकारचवर्गौ स्तः ॥ हरिश्शेते । रामश्चिनोति । सच्चित् । शार्ङ्गिञ्जय । शात् ८।४।४४ शात्परस्योक्तंनस्यात् विश्नः । प्रश्नः । ष्टुनाष्टुः ।८।४।४१ स्तोष्टुनायोगेष्टुः । रामष्षीकते । पेष्टा । तट्टीका । चक्रिण्ढौकसे।नपदान्ताट्टोरनाम् ८ ४ ४२पदान्ताट्टवर्गात् परस्यस्तोष्टुन । षट्सन्तः । षट्ते ...
स ईट्टे । टोःकिम् । सर्पि...
र्णीणामुपसंख्यानम्...
तोःषि ८ ४।४३...

॥ पदान्तेझलांजशःस्युः ॥ वा गीशः ॥ चिद्रूपम् ॥ यरोनुनासिकेनुनासिकोवा ॥ ८।४ ४५ यरःपदान्तस्याऽनुनासिकेपरेऽनुनासिकोवा ॥ एतन्मुरारिः एतद्मुरारिः॥ स्थानप्रयत्नाभ्यामंतरतमेस्पर्शेचरितार्थोविधिरयंरेफेन प्रवर्त्तते॥चतुर्म्मुखः॥प्रत्ययेभाषायांनित्यम्॥ तन्मात्रम् ॥ चिन्मयम् ॥ तोर्लि ॥ ८ ४ ६० परसवर्णः ॥तल्लयः॥ विद्वाँल्लिखति ॥ नस्याऽनुनासिकोलः ॥उदःस्थास्तंभोः पूर्वस्य ८॥४॥६१ ॥ उदः परयोः स्थास्तम्भोः पूर्वसवर्णः॥तस्मादित्युत्तरस्य॥ पञ्चमीनिर्देशेनक्रियमाणङ्कार्यं वर्णान्तरेणाव्यवहितस्यपरस्यज्ञेयम् ॥ आदेःपरस्य ॥ १॥१॥५४ परस्ययद्विहितं तत्तस्यादेर्बोध्यम् ॥अघोषस्यमहाप्राणस्यविवारस्य श्वासस्यसस्यतादृशएवथकारः झरोझरिसवर्णे ८॥४॥६५हलःपरस्यझरोलोपोवासवर्णेझरि ॥खरिच॥८॥४॥५५ झलांचरः स्युः॥इत्युदोदस्यतः ॥ उत्थानम् ॥ उत्तंभनम् ॥ झयोहोन्यतरस्याम् ।८।४। ६२ झयः परस्यहस्यवापूर्वसवर्णः ।संवारस्य नादस्यघोषस्यमहाप्राणस्यहस्यतादृशो वर्गचतुर्थः ॥ वाग्घरिः वाग्हरिः शश्छोटि । ८। ४।६३।पदान्ताझयः परस्यशस्य छोवास्यादटि तच्छिवः । तच्शिवः । पदान्तात्किम् । विरप्शम् । छत्वममीति वाच्यम् । तच्छ्लोकेन । मोनुस्वारः ८।३।२३ मान्तस्यपदस्यानुस्वारोहलि हरिंवंदे । ४६ कृत्तद्धितान्तास्त्र्च्छ्रनश्चापदान्तस्यझलि । ८।३।२४ भिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यसुस्वारःयशांसि । आक्रं- सुप्रौजसितिप्रथमा ॥ अमौट्शसुङेरस्यययिपरसवर्णः

८।४।५८। शान्तः। अङ्कितः। वापदान्तस्य। ८।४।५९ त्वङ्करोषि। त्वंकरोषि। मोराजिसमःक्वौ। ८।३।२६ क्वि वन्तेराजतौपरेसमोमस्यमएवस्यात्। सम्राट्। हेमप रेवा। ८।३।२६ मपरेहकारेमस्यमोवा। किम्ह्मलयति। किंह्मलयति। यवलपरेयवलावा। किंह्यः किंह्यः। किँह्वलयति। किंह्वलयति। किँह्लादयति। किंह्लादयति नपरेनः। ८।३।२७ नपरेहकारेमस्यनोवा। किँन्ह्नुते। किन्ह्नुते। ङः सिधुट्। ८।३।२१ ङात्परस्यसस्यधुड्वा आद्यन्तौटकितौ १।१।४६। टितिकतौयस्योक्तौतस्यक्रमा दाद्यन्तावयवौस्तः। षट्त्सन्तः। षट्सन्तः। ङ्णोः कुक्टु क्शरि।८।३।२८ वास्तः।प्राङ्क्षष्ठः। प्राङ्क्षष्ठः।सुगण्ट्षष्ठः। सुगण्षष्ठः। नश्च। ८।३।३०नान्तात्परस्यसस्यधुड्वा। सन्त्सः सन्सः।शितुक्। ८।३।३१ नस्यपदान्तस्यशेतुक्वा सञ्छंभुः। सञ्च्छम्भुः। सञ्च्शंभुः। शञ्शंभुः। ञ्छौञचञ्छाञचशाञशावितिचतुष्टयम्। रूपाणामिहतु क्छत्वचलोपानांविकल्पनात्। ङमोह्रस्वादचिङमुण्नि त्यम्। ८।३।३२ ह्रस्वात्परोयोङंतदन्तंयत्पदंतस्मात्पर स्याअचोनित्यंङमुट्। प्रत्यङ्ङात्मा। सुगण्णीशः। सन्न च्युतः॥ समःसुटि॥ ८।३।५ समोरुः सुटि॥ अत्रानु नासिकः पूर्वस्यतुवा ८।३।२। अत्ररुप्रकरणेरोः पूर्वस्या नुनासिकोवा। अनुनासिकात्परोनस्वारः॥ ८।३।... नासिकम्विहायरोः पूर्वस्मात्परो... नयोर्विसर्जनीयः८।३।१५... विसर्गः।संपुंकानां...

परे॥८।३।६अम्परेखयिपुमोरुः॥पुँस्कोकिलः॥पुंस्कोकिलः नछव्यप्रशान् ॥ ८।३।७ अम्परे छविनतस्यपदस्यरुः विसर्जनीयस्यसः ॥ ८।३।३४ खरि ॥ चक्रीँस्त्रायस्व ॥च क्रींस्त्रायस्व॥अप्रशान्किम्॥प्रशान्तनोति ॥पदस्यकिम् ॥हन्ति॥अम्परे किम् ॥ सन्त्सरुः॥खड्गमुष्टिः॥न्हन्पे ॥८। ३।१० न्हनित्यस्यरुर्वापे ॥ कुप्वो ><क ><पौ च ॥ ८।३। ३७ कवर्गेपवर्गेचपरे विसर्गस्य ><क >< पौस्तः चाद्वि सर्गः ॥ न्हँ >< पाहि ॥ न्हं >< पाहिः ॥ न्हँःपाहि ॥ न्हंःपाहि ॥ न्हन्पाहि ॥ सोपदादौ ॥ ८।३।३८ विसर्गस्यसः स्यादपदाद्योः कुप्वोः ॥ पयस्पासम् ॥ पयस्कल्पम् ॥ यशस्कम् ॥ यशस्काम्यति ॥अनव्ययस्येतिवाच्यम् । प्रातः कल्पम् । काम्ये रोरेवे तिवाच्यम् । नेह गोः काम्यति । इणःपः ।८।३।३९ इणः परस्यविसर्गस्य पस्यात्पूर्वविषये।सर्पिष्पाशम्।सर्पिष्कल्पम्।सर्पिष्कम्। सर्पिस्काम्यति।करकादिपुच।८।३।४८एष्विणउत्तरस्यविसर्गस्यप :स्यादन्यस्यतुसः । कस्कः।कौतस्कुतः । सर्पिष्कुण्डिका । धनुष्कपालमित्यादि।आकृतिगणोयम्।तस्यपरमाम्रेडितम्।८।१।२द्विरुक्तस्यपरमाम्रेडितंस्यात्कानाम्रेडिते।८।३।१२।कान्नकारस्यरुराम्रेडिते।काँस्कान्।कांस्कान्।छेच।६।१।७३।ह्रस्वस्यछेतुक्।अच्छ।।आङ्माङोश्च। ६।१।७४। तकछे । आच्छादयति । माच्छिदत् । दीर्घात्। ६।१।७५ कृत्तद्धितान्तास्त्रीच्छतिः । पदान्ताद्वा । ६।१।७६ भिस ङेभ्यांभ्यस् ङसिभ्यांभ्यस्त्रीच्छाया । लक्ष्मीछाया सुऔजसितिप्रथमा ॥ अमौट् शसौद्वि८।३।३४ खरि ।

विश्नुस्त्राता । शर्परेविसर्जनीयः । ८।३।३५ शर्परेखरि-
विसर्गस्यविसर्गोनत्वन्यत् । कः त्सरुः । घनाघनः क्षो-
भणः । वाशरि । ८।३।३६ शरिविसर्गस्यविसर्गोवा ।
हरिः शेते । हरिश्शेते । खर्परेशरिविसर्गस्यलोपोवाव-
क्तव्यः।हरिस्फुरति।हरिःस्फुरति।ससजुषोरुः ८।२।६६पदा
न्तस्यसस्यसजुषशब्दस्यचरुः स्यात्।अतोरोरप्लुतादप्लु
ते ६।१।११३ अप्लुतादतः परस्यरोरुःस्यादप्लुतेति । शि
वोऽर्च्यः अतः किम् । देवाअत्र । अतीतिकिम् ।श्वआ-
गन्ता । अप्लुतात्किम् । ऐहिसुस्रोत ३ अत्रस्नाहि।प्लु
तस्याऽसिद्धत्वादतः परोयम् ।अप्लुतादितिविशेषणेतुत-
त्सामर्थ्यान्नासिद्धत्वम् । तपरकरणस्यतुनसामर्थ्यम्।दी-
र्घनिवृत्याचरितार्थत्वात् । अप्लुतेतिकिम् । तिष्ठतु
पयअ ३ ग्निदत्त । हशिच । ६।१।११४ तथा।शिवोव
न्द्यः। भोभगोअघोअपूर्वस्ययोऽशि ॥ ८।३।१७ एतत्पूर्व-
स्यरोर्यादेशोऽशि।देवाइह। देवायिह।भोस्भगोस्अघोस्
इतिसान्तानिपाताः तेषांरुत्वेयत्वेकृते॥ व्योर्लघुप्रयत्न
तरः शाकटायनस्य ८।३।१८॥ अशिपदान्ते ॥ ओतो-
गार्ग्यस्य ८।३।२० ओकारात्परस्यपदान्तस्यालघुप्रयत्न
स्ययस्यनित्यंलोपः॥ भोअच्युतलघुप्रयत्नपक्षे॥भोयच्युत
पदान्तस्यकिम्॥तोयम् हलिसर्वेषाम् ८।३।२२। भोभगो
अघोअपूर्वस्ययस्यनित्यं लोप :स्याद्धलि।भोदेवाः॥भोल-
मस्ते।अघोयाहि।देवायान्ति॥ रोऽसुपि [illegible]
फादेशोनतुसुपि ॥अहरहः [illegible]
म् अत्राहन्निति [illegible]

ग्रहोरूपम् ॥ गतमहोरात्रिरेपा ॥ एकदेशविकृतन्या-
येनाहोरात्रः ॥ अहोरथन्तरम् ॥ अहरादिनांपत्योदि-
पुवारेफः ॥ विसर्गापवादः ॥ अहर्पतिः ॥ गीर्पतिः ॥
धूर्पतिः ॥ पक्षेविसर्गोपध्मानीयौ ॥ रोरि ॥ ८।३।१४।
रेफस्यरेफेपरेलोपः ॥ ढ्लोपेपूर्वस्यदीर्घोणः ॥ ६।३।१११।
ढरेफयोर्लोपनिमित्तयोः पूर्वस्याणोदीर्घः ॥ पुनारमते
हरीरम्यः ॥ शंभूराजते ॥ ढोढेलोपः ॥ ८।३।१३ लीढः ।
अणः किम् ॥ तृढः ॥ वृढः ॥ मनस्रथइत्यत्ररुत्वेकृ-
तेहशिचेत्युत्वेरोरितिलोपेचप्राप्ते ॥ विप्रतिपेधेपरंका-
र्यम् ॥ १।४।२। तुल्य बलविरोधेपरंकार्यंस्यात् ॥ इति-
लोपेप्राप्ते ॥ पूर्वत्रासिद्धमितिरोरित्यस्यासिद्धत्वादुत्व-
मेव ॥ मनोरथः ॥ एतत्तदोः सुलोपोकोरनञ्समासेह-
लि ६।१।१३२। ॥ अककारयोरेतत्तदोर्यः सुस्तस्यलोपो
हलिनतुनञ्समासे ॥ एपविष्णुः ॥ सशंभुः ॥ अकोःकि
म् ॥ एपकोरुद्रः ॥ अनञ्समासेकिम् ॥ असः शिवः ॥
हलिकिम् ॥ एपोत्र ॥ सोचिलोपेचेत्पादपूर्णम् ६।१।१३२
इत्यस्यसोल्लोपः स्यादचिपादश्चेल्लोपेसत्येवपूर्येत ।
सेमामविढ्ढिप्रभृतिम् ॥ सैपदाशरथीरामः ॥ ४ ॥ इति
विसर्गसन्धिः ॥ अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ।
१।२।४५ धातुंप्रत्ययंप्रत्ययान्तंचवर्जयित्वाअर्थवच्छब्दस्व
रूपंप्रातिपदिकसंज्ञंस्यात् ॥ कृत्तद्धितसमासाश्च ॥ १।२।
४६ कृत्तद्धितान्तौसमासाश्चतथास्युः॥स्वौजसमौट्छष्टाभ्यां
भिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यस्ङसोसांङ्योस्सुप् ॥ ४।१।२।
सुप्रौजसितिप्रथमा ॥ अमौट्शसूद्वितीया ॥ टाभ्यां

भिस् तृतीया ॥ ङेभ्यांभ्यस् चतुर्थी ॥ ङसिभ्यांभ्यस् पंचमी ॥ ङसोसाम्षष्ठी ॥ ड्योस्सुप्सप्तमी ॥ ड्याप्प्रातिपदिकात् ॥ ४।१।१। ड्यन्तादावन्तात्प्रातिपदिकाच्चपरे स्वादयः प्रत्ययास्युः ॥ सुपः ॥ १।४।१०३। सुपस्त्रीणित्रीणिवचनान्येकशएकवचनद्विवचनवहुवचनसंज्ञानिस्युः । द्व्येकयोर्द्विवचनैकवचने ॥ १।४।२२। द्वित्वैकत्वयोरेतेस्तः विरामोवसानम् ॥ १।४।११० वर्णानामभावोवसानसंज्ञस्यात् ॥ रुत्वविसर्गौ ॥ रामः ॥ अयोगवाहानामस्योपरिशषु चेतिवाच्यम् ॥ यमानुस्वारविसर्गजिह्वामूलीयोपध्मानीयाअयोगवाहाः ॥ तेनेहविसर्गस्ययत्र्वाद्यनचिचेतिद्वित्वपक्षेरामः॥ सरूपाणामेकशेषएकविभक्तौ १।२।६४ एकविभक्तौयानिसरूपाण्येवदृष्टानितेषामेक एवशिष्यते ॥ प्रथमयोः पूर्वसवर्णः॥६।१।१०२।अकः प्रथमाद्वितीययोरचिपरे पूर्वसवर्णदीर्घएकादेशः स्यात् ॥ इतिप्राप्ते ॥ नादिचि ॥ ६।१।१०४। आदिचिनपूर्वसवर्णदीर्घः ॥ वृद्धिरेचि ॥ रामौ ॥ वहुषुवहुवचनम् १।४।२२। चुटू॥ १।३।७। प्रत्ययाद्यौचुटूइतौस्तः । विभक्तिश्च । १।४।१०४। सुप्तिङौविभक्तिसंज्ञौस्तः । नविभक्तौतुस्माः १।३।४।विभक्तिस्थास्तुसमानेतः।इतिसस्यनेत्वम्।रामाःएकवचनंसम्बुद्धिः। २।३।४९सम्बोधनेप्रथमायाएकवचनंसम्बुद्धिसंज्ञःस्यात् यस्मात्प्रत्ययविधिस्तदादिप्रत्ययेङ्गम् १।४।१३।यःप्रत्ययोयस्मात्क्रियतेतदादिशब्दस्वरुपंतस्मिनङ्गं स्यात्॥एङ्ह्रस्वात्सम्बुद्धेः॥६।१।६९। एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यतेसम्बुद्धेश्चेत् ॥ हेराम ॥हेरामौ ॥ हेरा

माः ॥ अमिपूर्वः ॥ ७।१।१०७। अकोम्यचिपूर्वरूपमेकादेशः स्यात् ॥ रामम् ॥ रामौ ॥ लशक्वतद्धिते ॥ १।३।८। तद्धितवर्जप्रत्ययाद्यालशकवर्गाइतस्युः तस्माच्छसोनः पुंसि ॥ ६।१।११३। पूर्वसवर्णदीर्घात्परोयः शसः सस्तस्य नःस्यात्पुंसि ॥ अट्कुप्वाङ्नुम्व्यवायेपि॥ ८।४।२।अट् कवर्गपवर्गआङ्नुम् एतैर्व्यस्तैर्यथासंभवमिलितैश्चव्यवधानेपिरषाभ्यांपरस्यनस्यणःस्यात्समानपदे॥ इतिप्राप्ते ॥ पदान्तस्य । ८।४।१३७।नस्यणोन । रामान् । टाङसिङसामिनात्स्याः । ७।१।१२। अदन्ताट्टादीनामिनादयःस्युः। णत्वं । रामेण । सुपिच । ७।३।१०२। यञादौसुप्यतोङ्गस्य दीर्घः । रामाभ्याम् ॥ अतोभिसऐस् ॥ ७।१।९। अनेकाल्शित्सर्वस्य ॥ रामैः ॥ ङेर्यः ॥ ७।१।१३। अतोङ्गात्परस्यङेर्यादेशःस्यात्॥स्थानिवदादेशोनल्विधौ॥१॥१।५६।आदेशःस्थानिवत्स्यान्नतुस्थान्यलाश्रयविधौ ॥ इतिस्थानिवत्वात्सुपिचेतिदीर्घः ॥ रामाय ॥रामाभ्याम्॥बहुवचने झल्येत् ७।३।१०३।झलादौबहुवचनेसुप्यतोङ्गस्यैकारः॥रामेभ्यः॥वावसाने ८ ४॥५६ अवसानेझलांचरोवा रामात् रामाद्॥रामाभ्यां॥रामेभ्यः॥रामस्य॥ओसिच ७।३।१०४ ॥ अतोङ्गस्यैकारः॥रामयोः॥ह्रस्वनद्यापोनुट्।७।१५४। ह्रस्वान्तान्नद्यन्तादावन्ताच्चाङ्गात्परस्यामोनुडागमः ॥ नामि ६।४।३।अजन्ताङ्गस्यदीर्घः॥रामाणाम्॥रामे ॥ रामयोः ॥ एत्वेकृते।आदेशप्रत्यययोः ।८।३।५९ इण्कुभ्यांपरस्यापदान्तस्यादेशः प्रत्ययावयवश्चयः सस्तस्यमूर्द्धन्यादेशः॥ ईषद्विवृतस्यसस्यताहृशएवषः ॥ रामेषु ॥ एवंकृष्णमुकु

न्दादयः ॥ सर्वादीनिसर्वनामानिः ॥ १।१।२७ सर्वादीनि शब्दरूपाणिसर्वनामसंज्ञानिस्युः ॥ सर्व । विश्व । उभ । उभय ।डतर । डतम । अन्य । अन्यतर । इतर । त्वत् । त्व । नेम । सम । सिम । पूर्वपरावरदक्षिणोत्तरापराधराणिव्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अंतरंवहिर्योगोपसंव्यानयोः । त्यद् । तद् एतद् । इदम् । अदस् । एक । द्वि । युष्मद् । अस्मद् । भवतु । किम्।एतेपंचत्रिंशच्छब्दाःशर्वादयः ।जसश्शी७।१।१७अदन्तात्सर्वनाम्नोजसःशीस्यात् ॥अनेकाल्त्वात्सर्वादेशः।सर्वे।सर्वनाम्नःस्मै । ७।१।१४ अतः सर्वनाम्नोङेस्स्मै । ङसिङ्योः स्मात्स्मिनौ । ७।१।१५ अतः सर्वनाम्नएतयोरेतौस्तः । सर्वस्मात् । सर्वस्माद् । आमिसर्वनाम्नःसुट् ।७।१।५२ अवर्णान्तात्परस्यसर्वनाम्नोविहितस्याम :सुडागम :स्यात् । एत्वे षत्वे। सर्वेषाम् । सर्वस्मिन् ॥ शेषंरामवत् ॥एवंविश्वपादयोप्यदन्ताः ॥ उभशब्दोनित्यंद्विवचनान्तः ॥ उभौ २ ॥ उभाभ्याम्३। उभयोः २। तस्येहपाठो॥ कजर्थः । डतरडतमौप्रत्ययौ।प्रत्ययग्रहणेतदन्तग्रहणमितितदंताग्राह्याः। नेमइत्यर्द्धे समःसर्वपर्यायः तुल्यपर्य्यायस्तुन ॥ समानामितिज्ञापकात् ॥ पूर्वपरावरदक्षिणोत्तरापराधराणिव्यवस्थायामसंज्ञायाम् १।१।३४ एषांव्यवस्थायामसंज्ञायां सर्वनामसंज्ञागणसूत्रात्सर्वत्रयाप्राप्तासाजसिवास्यात्॥पूर्वे पूर्वाः स्वाभिधेयापेक्षावधिनियमोव्यवस्था व्यवस्थायांकिम् दक्षिणागाथका :कुशलाइत्यर्थः ॥

असंज्ञायांकिम् । उत्तराः कुरवः । स्वमज्ञातिधनाख्या
याम् । १।१।३५ ज्ञातिधनान्यवाचिनः स्वशब्दस्यप्राप्ता-
संज्ञाजसिवा । स्वे । स्वाः ॥ आत्मीयाआत्मानइतिवा॥
ज्ञातिधनवाचिनस्तुस्वाः । ज्ञातयोर्थावा । अन्तरम्बहि-
र्योगोपसंव्यानयोः । १।१।३६ वाह्यपरिधानीयेचार्थेऽ
न्तरशब्दस्यप्राप्तासंज्ञाजसिवा । अन्तरे अन्तरावागृहाः
वाह्याइत्यर्थः । अंतरेअन्तरावाशाटकाः परिधानी-
याइत्यर्थः । पूर्वादिभ्योनवभ्योवा । ७।१।१६ एभ्योङ
सिङ्योःस्मात्स्मिनौवास्तः । पूर्वस्मात् २पूर्वात् २पूर्व-
स्मिन् । पूर्वे । एवंपरादीनामपि । शेषंसर्ववत् ।
संज्ञोपसर्जनीभूतास्तुनसर्वादयः । सर्वोनामकश्चित्तस्मै-
सर्वायदेहि । अतिक्रान्तः सर्वमतिसर्वस्तस्मैअतिसर्वा
य । अंतरमितिगणसूत्रेऽपुरीतिवक्तव्यम् । अन्तरायां
पुरि॥तृतीयासमासे । १।१।३० सर्वनामतान। मासपूर्वा
य । * तृतीयासमासार्थवाक्येऽपिन । मासेनपूर्वाय ।
द्वन्द्वे च । १।१।३१ उक्तासंज्ञान । वर्णाश्रमेतराणाम्
विभाषाजसि । १।१।३२ वर्णाश्रमेतरे ।वर्णाश्रमेतराः ।
प्रथमचरमतयाल्पार्द्धकतिपयनेमाश्च । १।१।३३ एतेज-
स्युक्तसंज्ञावास्युः । प्रथमे । प्रथमाः । तयप्रत्ययः ।
द्वितये । द्वितयाः । शेषंरामवत् । नेमे । नेमाः । शेषं-
सर्ववत् । तीयस्यङित्सुवा । द्वितीयस्मै । द्वितीयाये-
त्यादि । एवंतृतीयः । निर्जरः । जरायाजरसन्यतरस्या
म् । ७।२।१०१ जरायाजरस्वाऽजादौविभक्तौ ।पदाङ्गा

*विभाषादिक्समासइत्यतःसमासपदानुवृत्यासिद्धे पुनःसमासग्रहणमधिकम-
धिकार्थमितिविषयात्टतीयासमासार्थवोधकवाक्यपरमित्याशयः ॥

धिकारैंतस्यतदन्तस्यच। निर्दिश्यमानस्यादेशाभवन्ति॥ एकदेशविकृतस्यानन्यत्वाज्जरशब्दस्यजरस्। निर्जरसौ। निर्जरसः। उपजीव्यविरोधान्नजरस्। निर्जरैः। पक्षेहलादौचरामवत्। पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकनुदन्नासञ्छस्प्रभृतिषु। ६।१।६३ पाददन्तनासिकामासहृदय निशाअसृज्यूष्दोष्यकृच्छकृदुदकआस्यएषांपदादयआदेशाः स्युः शसादौवा। यत्तुआसनशब्दस्यासन्नादेशइतिकाशिकायामुक्तम् * तत्प्रामादिकमेव।पादः।पादौ। पादाः पादम्।पादौ।पदः पादान्। पदा। पादेनइत्यादि। विश्वपाः। दीर्घाज्जसिच। ६।१।१०५ दीर्घाज्जसिइचिचनपूर्वसवर्णदीर्घः। वृद्धिः।विश्वपौ।विश्वपाः।हेविश्वपाः हेविश्वपौ।हेविश्वपाः। सुडनपुंसकस्य।१।१।४३ स्वादिपञ्चवचनानिसर्वनामस्थानसंज्ञानिस्युरक्लीबस्य। स्वादिष्वसर्व नामस्थाने। १।४।१७कप्प्रत्ययावधिषुस्वादिष्वसर्वनामस्थानेषुपरतः पूर्वपदंस्यात्। यचिभम् १।४।१८ यकारादिष्वजादिषु चकप्प्रत्ययावधिषुस्वादिष्वसर्वनामस्थानेषुपूर्वम्भंस्यात्।आकडारादेकासंज्ञा।१।४।१इतउर्द्ध कडाराःकर्मधारयइत्यतः प्रागेकस्यैकैवसंज्ञाज्ञेया। यापरानवकाशाच। तेनशसादावचिभसंज्ञैवनपदत्वम्॥ आतोधातोः॥ ६।४।१४७ आकारान्तोयोधातुस्तदन्तस्यभस्याङ्गस्यलोपः॥ अलोन्त्यस्य विश्वपः॥विश्वपा॥विश्वपाभ्यामित्यादि॥एवं शङ्खध्मादयः॥ धातोः किम्॥ हाहान्॥ आतइतियो

*आस्नोवृकस्यवर्त्तिकामितिमन्त्रभाष्ये आसनइत्यस्यमुखादित्यर्थकरणादासन्नादेशस्यानौआस्यएवभवतीतिकाशिकोक्तं प्रामादिकम् * * * * *

गविभागादधातोरपिक्कचित् ॥ रुः॥ स्त्रः ॥ हरिः॥ हरी जसिच ॥ ७।३।१०९ ह्रस्वान्तस्यांगस्यगुणः ॥ हरयः ॥ ह्रस्वस्यगुणः ॥ ७।३।१०८ सम्बुद्धौ ॥ हेहरे ॥ हरिम् ॥ हरीन् ॥ ॥ शेषोघ्यसखि ॥ १।४।७शेषइतिस्पष्टार्थम् ॥ अनदिसंज्ञौ ह्रस्वौयाविदुतौतदन्तंसखिवर्जंघिसंज्ञंस्यात् आङोनास्त्रियाम् ॥ ७।३।१२० घेःपरस्याङोनास्यादस्त्रियाम् ॥ आङितिटासंज्ञाप्राचाम् ॥ हरिणा ॥ हरिभ्याम् ३॥हरिभिः।घेर्ङिति॥७।३।१११घिसंज्ञस्यङितिसुपिगुणः हरये ॥ हरिभ्यः २। गुणेकृते। ङसिङसोश्च। ६।१।११० एङोङसिङसोरतिपरेपूर्वरूपमेकादेशः॥हरेः॥हर्योः । हरिणाम् ।॥ अच्चघेः ।७।३।११९इदुद्भ्यांपरस्यङेरौत्घेरत् हरौ। हरिषु । एवंकव्यादयः। अनङ्सौ। ७।१।९३ सख्युरङ्गस्यानङादेशोऽसंबुद्धौसौ। अलोन्त्यात्पूर्वउपधा। १।१।६५ अन्त्यादलः पूर्वोवर्णउपधासंज्ञास्यात् । सर्वनामस्थानेचासम्बुद्धौ ॥ ६।४।८ नान्तस्योपधायादीर्घासंबुद्धौसर्वनामस्थाने ॥ अपृक्तएकाल्प्रत्ययः१।२।४१। ॥ हल्ङ्याब्भ्योदीर्घात्सुतिस्यपृक्तंहल् ॥६।१।६८हलंतात्परं दीर्घौयौङ्यापौतदन्ताच्चपरंसुतिसीत्येतदपृक्तंहल्लुप्यते॥प्रत्ययलोपेप्रत्ययलक्षणम् १।१।६२।प्रत्ययेलुप्तेपितदाश्रितंकार्यंस्यात्॥नलोपः प्रातिपदिकान्तस्य ॥ ८।२।७ प्रातिपदिकसंज्ञकंयत्पदंतदन्तस्यनस्यलोपः॥ सखा॥ सख्युरसम्बुद्धौ ॥ ७।१।९२ सख्युरङ्गात्परंसंबुद्धिवर्जंसर्वनामस्थानंणिद्वत्स्यात् ॥ अचोञ्णिति ॥ ७।२।११५ अजं-

---

ईषिडा वितिनसूश्चितमूविर्यतियञ्ञतिविंयतीडि तीतितिलोपापत्तः ॥ * ॥ * ॥

ताङ्गस्यवृद्धिर्णितिणितिच ॥ सखायौ ॥ सखायः हेस
खे॥ सखायौ सखायं॥ सखीन्॥ सख्या॥ सखिभ्याम्॥ स
खिभिः । सख्ये । ख्यत्यात्परस्य । ६।१।११२ खितिशब्दा
भ्यांखीतीशब्दाभ्यांकृतयणादेशाभ्यांपरस्यङसिङसोरत
उः॥सख्युः २ औत् ११३।११८ इतःपरस्यङेरौत्।सख्यौ ॥
शेषंहरिवत्।पतिःसमासएव।१।४।८।घिसंज्ञः।पत्या।पत्युः२।
पत्यौ॥शेषं हरिवत्॥समासेतुभूपतये।कतिशब्दोनित्यंवहु
वचनान्तः।वहुगणवतुडतिसंख्या ।१।१।२३डतिच।१।१।२२
।डत्यन्तासंख्याषट्संज्ञास्यात् । षड्भ्योलुक् । ७।१।२५
जश्शसोः प्रत्ययस्यलुक्श्लुलुपः। १।१।६१ लुक्श्लुलुप्
शब्दैःकृतंप्रत्ययादर्शनंक्रमात्तत्तत्संज्ञंस्यात्।जसिचेतिगु
णेप्राप्ते।नलुमतांगस्य।१।१६३ लुमताशब्देनलुप्ते तन्निमि
त्तमंगकार्य्यंनस्यात् । कति २ । कतिभिः । कतिभ्यः ।
कतिभ्यः । कतीनाम् । कतिषु ॥ अस्मद्युष्मत्षट्संज्ञ
कास्त्रिषुसरूपाः। *त्रिशब्दोनित्यंवहुवचनान्तः । त्रयः ।
त्रीन् । त्रिभिः । त्रिभ्यः ॥ त्रेस्त्रयः । ७।१।५३ आमि ।
त्रयाणाम् ॥ त्रिषु । गौणत्वेपि । प्रियत्रयाणाम् । द्वि-
शब्दोनित्यंद्विवचनान्तः । त्यदादीनामः । ७।२।१०२
एषामकारोविभक्तौ ॥ द्विपर्यंतानामेवेष्टिः ॥ द्वौ २ ॥
द्वाभ्याम् ३ ॥ द्वयोः २ ॥ द्विपर्यानानाम् किम्॥ भवा
न् ॥ भवन्तौ । पातिलोकमितिपपीःसूर्यः।पप्यौ ।पप्यः॥
हेपपीः पपीम्। पपीन् । पप्या । पपीभ्याम् ३ । पपी-
भिः । पप्ये। पपिभ्यः २।पप्यः ।पप्योः पप्याम् ।पपी।प

*त्वसंख्याविशिष्टेर्थेएकत्वद्वित्वयोरनन्वयादनन्वितार्थकविभक्तिकल्पनापेक्ष
याऽनुवादविभक्तिकल्पनस्यलाघवाद्बहुवचनमेवेतिभावः॥ * ॥ * ॥ * ॥

पीपु । एवंवातप्रम्यादयः । वह्वः श्रेयस्योयस्यसवहु-श्रेयसी । यूस्त्र्याख्यौनदी । १।४।३ ईदूदन्तौनित्यस्त्री लिङ्गौनदीसंज्ञौस्तः । प्रथमलिङ्गग्रहणंचापूर्वस्त्र्याख्यस्यो पसर्जनत्वेपिनदीत्वंवक्तव्यमित्यर्थः अंवार्थ नद्योर्हस्वः । ७।३।१०७ अम्वार्थानांनद्यंतानांचह्रस्वःस्यात्संवुद्धौ । *हेवहुश्रेयसि॥ आग्नद्याः ॥ ७।३।११२ नद्यन्तात्परेषां ङितामाडागमः ॥ आटश्च ॥ ६।१।९० आटीचिपरेवृद्धि-रेकादेशः स्यात् ॥ वहुश्रेयस्यै ॥ वहुश्रेयस्याः ॥ वहु-श्रेयसीनाम् ङेराम्नद्याम्नीभ्यः७।३।११६नद्यन्तादावन्तान्नी शब्दाच्चपरस्यङेरामादेशः स्यात् ॥ इहपरत्वादाटानुट्-वाध्यते ॥ वहुश्रेयस्याम् ॥ शेषंपपीवत् ॥ अतिलक्ष्मीः । शेषंवहुश्रेयसीवत् ॥ प्रधीः ॥ अचिश्नुधातुभ्रुवांय्वोरिय-ङुवङौ ॥ ६।४।७७श्नुप्रत्ययान्तस्येवर्णोवर्णांतस्यधातोर्भ्रू इत्येतस्यचांगस्येयङुवङौस्तोऽजादौप्रत्ययेपरे ॥ इतिप्रा प्ते ॥ एरनेकाचोऽसंयोगपूर्वस्य ॥ ६।४।८२ धात्ववयव संयोगपूर्वोनभवतियइवर्णस्तदन्तोयोधातुस्तदन्तस्या नेकाचोङ्गस्ययण्ऽजादौप्रत्ययेपरे ॥ प्रध्यौ ॥ प्रध्यः । प्रध्यम् ॥ प्रध्यः ॥ प्रध्यि ॥ शेषंपपीवत् ॥ एवंग्रामणी । ङौतुग्रामण्याम् ॥ गतिश्च ॥ १।४।६० प्रादयःक्रियायो-गेगतिसंज्ञास्स्यात् गतिकारकेतरपूर्वपदस्ययणनेष्यते ॥ ॥ शुद्धधियौ ॥ शुद्धधियः ॥ नभूसुधियोः ॥ ६।४।८५ ए तयोरचिसुपियणन ॥ सुधीः ॥ सुधियौ ॥ सुधियः ॥ इत्यादि ॥ सुखमिच्छतीतिसुखीः ॥ सुतीः ॥ सुख्युः २।

*अंवार्थानांह्रस्वः ह्रस्वनद्योर्गुणइतिन्यासेनसिद्धे नद्यन्तस्यह्रस्वविधानसाम र्थ्यान्नगुणः सन्निपातपरिभाषायाअनित्यत्वात्संवुद्धिलोपः ॥ * ॥ * ॥ * ॥ *

सुख्युः २ ॥ शेषंप्रधीवत् ॥ शंभुर्हरिवत् ॥ एवंभान्वा-
दयः ॥ तृज्वत्क्रोष्टुः ॥ ७।१।९५ असंबुद्धौसर्वनामस्थाने
॥ क्रोष्टु इत्यस्यक्रोष्टृप्रयोक्तव्यइत्यर्थः ॥ ऋतोङिसर्व-
नामस्थानयोः ॥ ७।३।११० गुणः ॥ इतिप्राप्ते ॥ ऋदुशन-
स् पुरुदंसोनेहसाञ्च ॥ ७।१।९४। ऋदन्तानामुशनसादीनां
चानङ्स्यादसंबुद्धौसौ ॥ अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृ
क्षत्तृहोतृपोतृप्रशास्तॄणाम् ॥ ६।४।११। अबादिनामुप-
धायादीर्घः संबुद्धौसर्वनामस्थाने ॥ क्रोष्टा ॥ क्रोष्टारौ।
क्रोष्टारः ॥ क्रोष्टारम् ॥ क्रोष्टारौ ॥ क्रोष्टून् ॥ विभा
षातृतीयादिष्वचि ॥७।१।९७ तृतीयादिष्वजादिषुक्रोष्टु
र्वातृज्वत् ।क्रोष्ट्रा क्रोष्टुना क्रोष्ट्रे क्रोष्टवे ऋतउत् ६।१।१११
ऋतोङसिङसोरतिपरेपूर्वपरयोरुदेकादेशः रपरः ॥ रा-
त्सस्य ॥ ८।२।२४। रेफात्संयोगांतस्यसस्यैवलोपोनान्य-
स्य ॥ रेफस्यविसर्गः ॥ क्रोष्टुः २ ॥ क्रोष्टोः २ क्रोष्ट्रोः ।
नुमचिरतृज्वद्भावेभ्योनुट्पूर्वविप्रतिषेधेन ॥ क्रोष्टूनाम्
क्रोष्टरि पक्षेहलादौचशंभूवत् हूहूः ॥ हूह्वावित्यादि ॥
अतिचमूशब्दे तुनदीकार्यंविशेषः ॥ हेअतिचमु ॥ अति
चम्वै ॥ अतिचम्वाः२॥ अतिचमूनाम् ॥ अतिचम्वाम् ।
खलपूः ॥ ओःसुपि ॥ ६।४।८३। धात्ववयवसंयोगपूर्वो-
नभवतियउवर्णस्तदन्तोयोधातुस्तदन्तस्यानेकाचोङ्गस्यय
ण्स्यादचिसुपि ॥ खलप्वौ ॥ खलप्वः ॥ एवंसुल्वादयः ।
स्वयंभूः ॥ स्वयंभुवौ । स्वयंभुवः ॥ एवंस्वभूः ॥ वर्षा-
भूः ॥ वर्षाभ्वश्च ६।४।८४। अस्ययण्स्यादचिसुपि ॥ व-
र्षाभ्वावित्यादि॥ दृन्भूः ॥ दृन्करपुनः पूर्वस्यभुवोयणव

त्तव्यः ॥ हृन्भ्वौ ॥हृन्भ्वः॥ एवंकरभूः पुनर्भूः दृम्भूकारा भूशब्दैःस्वयंभूवत्॥ धाता ॥ धातारौ ॥ धातारः॥ हेधातः॥ ऋवर्णान्नस्यणत्वंवाच्यं। धातृणां। एवंनप्त्रादय नप्त्रादिग्रहणंव्युत्पत्तिपक्षेनियमार्थम्। तेनेहनः। पिता॥ पितरौ। पितरः। पितरम्। शेषंधातृवत्। एवंजामात्रा दयः। ना। नरौ। नरः नृचा६।४।६ अस्यनामित्रादीर्घः नृणाम्। नृणाम्। गोतोणित् ७।१।९०। ओकाराद्विहितंसर्वनामस्थानंणिद्वत्। गौः। गावौ। गावः। औतोंशसोः ६।१।९३ ओकारादंशसोरचिआकारएकादेशः। गाम्। गावौ। गाः। गवा। गवे। गोः २। रायोहलि। ७। २।८५। रैशब्दस्याकारादेशोहलिविभक्तौ। राः। रायौ। रायः। राभ्यामित्यादि। ग्लौः। ग्लावौ। ग्लावः॥ ग्लौभ्यामित्यादि। # । # । इत्यजन्ताः पुंल्लिङ्गाः। # रमा। औङआपः। ७।१।१८ आवन्तादौङः शीस्यात्। औङित्यौकारविभक्तेःसंज्ञा। रमे। रमाः। सम्बुद्धौच। ७।३।१०६। आपएकारः। हेरमे। हेरमे। हेरमाः। रमां। रमाः। आङिचापः॥ ७।३।१०५। आङिओसिचाप एकारः। रमया। रमाभ्यां। रमाभिः। याडापः॥ ७।३। ११३॥ आपोङित्तोयाट्। वृद्धिः। रमायै। रमाभ्यः। रमायाः। रमयोः रमाणाम् रमायाम्॥ रमासु। एवं दुर्गादयः॥ सर्वनाम्नः स्याड्ढ्रस्वश्च॥ ७।३।११४। आवन्तात्सर्वनाम्नोङितःस्याडापश्चह्रस्वः। सर्वस्याः२ ॥ सर्वासां। सर्वस्याम्। शेषंरमावत्। एवं विश्वादयोप्यावन्ताः। विभाषा दिक्समासेबहुव्रीहौ १।१।२८॥ सर्वनाम्

तावास्यात् उत्तरपूर्वस्यै उत्तरपूर्वायै ।इत्यादि । अ न्तरस्यै।शालायै। अपुरीत्त्युक्तेर्नेह अन्तरायैनगर्य्यै । तीयस्येतिवा । द्वितीयस्यै । द्वितीयायै । एवं तृतीया । अंबार्थनद्योर्हस्वः । हेअम्ब । हेअक्क । हेअल्ल । असं- युक्तायेडलकास्तद्वतांह्रस्वोन हेअम्बाडे । हेअंबाले । हेअंबिके । जरा । जरसौ । जरे । इत्यादि । पक्षेहला दौचरमावत् । गोपाविश्वपावत् । मतीः । मत्या । ङितिह्रस्वश्च ।१।४।६।। इयङुवङ्स्थानौस्त्रीशब्दभिन्नौ- नित्यस्त्रीलिङ्गावीदूतौह्रस्वौचइउवर्णौ स्त्रीयांवानदीसं ज्ञौस्तोङिति। मत्यै । मतये मत्याः। मतेः परत्वात्औत्- इतिप्राप्ते ।इदुद्भ्याम् ॥ ७।३।११७॥ न दीसंज्ञ काभ्याभि दुद्भ्यांपरस्यङेराम् । मत्यांमतौ । शेषंहरिवत्॥एवं बुद्ध्या दयः॥त्रिचतुरोःस्त्रियांतिसृचतसृ । ७।२।९९॥त्रिलिंगयोरेतौ स्तोविभक्तौ। अचिरऋतः ॥ ७।२।१००। तिसृ चतसृत्रोऋृ- तो रादेशोचि । गुणदीर्घोत्वानामपवादः ॥ तिस्रः२। तिसृभिः तिसृभ्यः। आमिनुट् । नतिसृच तसृ ॥ ६।४।४॥ एतयोर्नामिदीर्घोन ॥ तिसृणां तिसृषु। द्वे २। द्वाभ्याम् ३॥ द्वयोः २॥ गौरी ॥ गौर्य्यौ ।गौर्यः हेगौरिम् गौर्यावित्या दि एवं नद्यादयः। लक्ष्मीः । शेषंगौरिवत् एवंतरितं त्र्यादयः। स्त्री। हेस्त्रि । स्त्रीयाः ६।४।७९ अरयेय ङजादौ प्रत्यये। स्त्रियौ । स्त्रियः । वाम्शसोः। ६।४।८० अमि शसिचस्त्रियाइयङ्वा । स्त्रियम् स्त्रीम् । स्त्रियः स्त्रीः स्त्रिया। स्त्रियै । स्त्रियाः२॥ परत्वान्नुट् स्त्रीणाम्।स्त्रीयाम् स्त्रीषु । श्री। श्रियै।। श्रियः।नेयङुवङ्स्थानावस्त्री१।४।४

इयङुवङोःस्थितिर्ययोस्तावीदूतौनदीसंज्ञौनस्तोनतुस्त्री
हेस्त्रीः स्त्रियै । स्त्रिये स्त्रियाः २ ॥ स्त्रियः२ ॥ वा-
मि २।१।५ इयङुवङ्स्थानौस्त्र्याख्यौयूआमिवानदीसं
ज्ञौस्तोनतुस्त्री । स्त्रीणां॥ स्त्रियाम्२। स्त्रियि। धेनुर्मतिवत्
स्त्रियांच७।१।२६स्त्रीवाचिक्रोष्टुशब्दस्तृजन्तवद्रूपंलभते॥
ऋन्नेभ्योङीप् ४।१।५।ऋदंतेभ्योनान्तेभ्यश्चस्त्रियांङीप्।
क्रोष्ट्री।गौरीवत् । वधूः । शेषंनदीवत् । भ्रूः स्त्रीवत् ॥
स्वयंभूः पुंवत्॥नषट्स्वस्रादिभ्यः।४।१।१२एभ्योङीप्टापौ
नस्तः।स्वसातिस्त्रश्चतस्त्रश्चननान्दादुहितातथा । याता-
मातेतिसप्तैतेस्वस्रादयउदाहृताः । स्वसा। स्वसारौ।
मातापितृवत् । शसिमातॄः । द्यौर्गौवत् । राः पुंवत् ।
नौर्ग्लौवत्।इत्यजन्ताःस्त्रीलिङ्गाः।अतोम्।७।१।२४ अतो-
ङ्गात्क्लीवात्स्वमोरम् ।ज्ञानं ।एङ्ह्रस्वादितिसम्बुद्धिलो
पः।हेज्ञान।नपुंसकाच्च७।१।१९।क्लीवादौङःशी ।भसंज्ञाया
म् ।यस्येतिच ६।४।१४८ ईकारेतद्धितेचपरेभस्येवर्णावर्णयो
र्लोपः । इत्यकारलोपेप्राप्ते। औङः श्यांप्रतिषेधः।ज्ञाने ॥
जश्शसोः शिः । ७।१।२० क्लीवात् । शिसर्वनामस्थानम्
। १।१।४२।नपुंसकस्यझलचः । ७।१।७२। झलन्तस्याजंत
स्यचक्लीवस्यनुमागमः स्यात्सर्वनामस्थाने।मिदचोन्त्यात्प
रः १।१।४७अचांमध्येयोन्त्यस्तस्मात्परस्तस्यैवान्तावय-
वोमित्स्यात् ।उपधादीर्घः।ज्ञानानि । पुनस्तद्वत् ।शेषं
पुंवत् । एवंधनवनफलादयः ।अद्ड्डतरादिभ्यःपञ्चभ्यः
७।१।२५ एभ्यःक्लीवेभ्यः स्वमोरदडादेशः । टेः ।६।४।
१४३ डितिभस्यटेर्लोपः । कतरत् । कतरद् । कतरे ॥

कतराणि । हेकतरत् । शेषंपुंवत् । कतमद् । इतरत् । अन्यत् २ । अन्यतरत् २ ॥ अन्यतमशब्दस्यतुअन्यतममित्येव । एकतरात्प्रतिषेधः ॥ एकतरम् । ह्रस्वोनपुंसकेप्रातिपदिकस्य । १।२।४७ अजंतस्येत्येव । श्रीपज्ञानवत् । स्वमोर्नपुंसकात् । ७।१।२३ लुक् । वारि । इकोचिविभक्तौ । ७।१।७३ इगंतस्यक्लीबस्यनुमचिविभक्तौ वारिणी । वारीणि । नलुमतेत्यस्यानित्यत्वात्पक्षेसंबुद्धिनिमित्तोगुणः । हेवारे । हेवारि । घेर्ङितीतिगुणेप्राप्ते । वृद्ध्यौत्वतृज्वद्भावगुणेभ्योनुम् पूर्वविप्रतिषेधेन । वारिणे । वारिणः ॥ वारिणोः ॥ नुमचिरेतिनुट् । वारीणाम् । वारिणि ॥ हलादौहरिवत् ॥ तृतियादिषुभाषितपुंस्कंपुंवद्गालवस्य ॥ ७।१।७५ प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कमिगंतंक्लीबंपुंवद्वाटादावचि ॥ अनादये ॥ अनादिनेइत्यादि शेषंवारिवत् ॥ यन्निमित्तमुपादायपुंसिशब्दः प्रवर्त्तते ॥ क्लीबवृत्तिस्तदेवस्यादुक्तपुंस्कंतदुच्यते ॥ पीलुर्वृक्षस्तत्फलंपीलु पीलुनेनहिपीलवे॥ वृक्षेनिमित्तं पीलुत्वंतज्जत्वंतत्फलेपुनः॥ तस्मैपीलुने ॥ नपुंवत् ॥ प्रवृत्तिनिमित्तभेदात् ॥ अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ७।१।७५ ॥ टादावचि ॥ अल्लोपोनः ॥ ६।४।१३४ अंगावयवोऽसर्वनामस्थानयजादिस्वादिप्रत्ययपरोयोन्तस्याकारस्यलोपः ॥ दध्ना ॥ दध्ने ॥ दध्नः २ ॥ दध्नोः २ ॥ विभाषाङिश्योः ॥ ६।४।१३५ अंगावयवोऽसर्वनामस्थानयजादिस्वादिप्रत्ययपरोयोन्तस्याकारस्यलोपोवाङिश्योः ॥ दध्नि ॥ दधनि ॥ शेषंवारिवत् ॥ एवमस्थिसक्थ्यक्षि

सुधि ॥ सुधिनी ॥ सुधीनि॥हेसुधे॥हेसुधि॥सुधिने॥इत्या दि । मधु । मधुनी । मधूनि । हेमधो । हेमधु ।ए वमम्वादयः॥सुलु ।सुलुनी । सुलुने । इत्यादि॥धातृ । धा तृणी । धातॄणि । हेधातः । हेधातृ। धातॄणाम् ॥ ए-वंज्ञातृकर्त्रादयः । एचइग्घ्रस्वादेशे । १।१।४८ आदिश्य-मानेषुह्रस्वेषुमद्धयेएचइगेवस्यात् प्रद्यु ॥ प्रद्युनी ॥ प्र-द्यूनि । प्रद्युना । इत्यादि ॥ प्ररि ॥ प्ररिणी ॥प्ररीणि॥ प्ररिणा ॥ एकदेशविकृतमनन्यवत् ॥ प्रराभ्यां ॥ प्ररी णाम् ॥ सुनु ॥ सुनुनि ॥ सुनूनी ॥ सुनुने त्यादि ॥इत्यजंताःनपुंसकलिंगाः ॥ होढः ॥ ८।२।३१ झलिपदान्तेच ॥ लिट् ॥ लिड् ॥ लिहौ २ ॥ लिहः ॥ लिड्भ्याम् ॥ लिट्सु ॥ लिट्त्सु॥दादेर्धातोर्घः ॥ ८। २।३२ ॥ झलिपदांतेचोपदेशेदादेर्धातोर्हस्यघः ॥ एका चो वशोभष्झषंतस्यस्ध्वोः॥ ८।२।३७॥ धात्ववयवस्यै काचोझषंतस्यवशोभष्सेध्वे पदांतेच ॥ इहव्यपदेशिवद्ध भावेनधात्ववयवत्वाद्भष्भावः ॥ धुक् ॥ धुग् ॥ दु-हौ ॥ दुहः दुहा ॥धुग्भ्यां ॥ धुक्षु ॥ वाद्रुहमुहष्णुहष्णि हाम्८।३।३३॥एषांहस्यवाघोझलिपदान्तेच ॥ध्रुक् ॥ध्रुग्॥ ध्रुट् । ध्रुड् । द्रुहौः । द्रुहः । ध्रुग्भ्यां ध्रुड्भ्यां । ध्रुक्षु । ध्रुट्सु ध्रुट्त्सु १ एवंमुहः॥धात्वादेपः सः॥६।१ ६४॥ष्णुक् ष्णुग् । ष्णुट् । २ । एवंष्णिहः॥ इग्यणः संप्रसार णं। १।१।४५ यणःस्थानेप्रयुज्यमानोयइक्ससंप्रसारणसंज्ञः स्यात् । वाहऊठ् । ६।४।१३२ भस्यवाहःसंप्रसारणमूठ्। सं प्रसारणाच्च। ६।१।१०८ संप्रसारणादचिपूर्वरूपमेकादेशः

वृद्धिः । विश्वौहः । इत्यादि ।चतुरनडुहोरामुदात्तः।७।
१।९८ सर्वनामस्थाने । सावनडुहः । ७।१।८२ नुम् । आ
च्छीनद्यो रितिसूत्रादादित्यधिकारादवर्णात्परो यनुम्।अ
तोविशेषविहितेनापिनुमाआम्नबाध्यते।अमाचनुम्न -
बाध्यते । सुलोपः । संयोगांतलोपः। नुं विधिसामर्थ्या-
द्वसुस्रं स्वितिदत्वंन।संयोगान्तलोपस्यासिद्धत्वान्नलोपो
न । अनड्वान् ॥ अम्सबुद्धौ । ७।१।९६ चतुरनडुहोः ॥
हेऽनड्वन् । अनड्वाहौ । अनडुहः ।वसुस्रं सुध्वं स्वनडु-
हांदः । ८।२।७२ सांतवस्वं तस्यस्रंसादेश्चदः स्यात्पदांते ।
अनडुद्भ्यामित्यादि । पदांतेकिम् ॥ स्रस्तम् ।ध्वस्तम्॥
सहेःसाडःसः ।८।३।५६ साडूपस्यसहेःसस्यमूर्द्धन्यादेशः॥
तुराषाट् । तुराषाड् । तुरासाहौ । तुराषाड्भ्यामित्या
दिवऔत् । ७।१।८४ दिवितिप्रातिपदिकस्यौत्स्यात्सौ ॥
सुद्यौः । सुदिवौ॥दिवउत् । ६।१।८४ पदान्ते ।सुद्युभ्या
मित्यादि।चत्वारः । चतुरः । चतुर्भिः । चतुर्भ्यः २ ॥ ष-
ट्चतुर्भ्यश्च । ७।१।५५ एभ्यआमोनुडागमः स्यात् ।
रषाभ्यांनोणः समानपदे ८।४।१ ॥ चतुर्णाम् । रोः
सुपि । ८।३।१६ रोरेवविसर्जनीयःसुपि ।चतुर्षु ।मोनो-
धातोः । ८।२।६४ पदान्ते । प्रशान् । प्रशामौ । किमः
कः । ७।२।१०३ विभक्तौ ।कः कौ । के । इत्यादि । इद
मोमः ।७।२।१०८ सौ । त्यदाद्यत्वापवादः । इदोय्पुंसि ।
७।२।१११ इदमइदोय्सौपुंसि । अयं । त्यदाद्यत्वे । अ
तोगुणे ६।१।९७ अपदांतादतोगुणेपररूपमेकादेशः । द-
श्च । ७।२।१०९ इदमोदस्यमः स्योद्विभक्तौ । इमौ । इमे

॥ त्यदादेः संबोधनंनास्तीत्युत्सर्गः। अनाप्यकः । ७।
२।११२ अककारस्यइदमइद्रोनापिविभक्तौ । आवितिप्र-
त्याहारः। अनेन हलिलोपः७।२।११३ अककारस्यइदमइदो
लोपआपिहलादौ नानर्थकेलोन्त्यविधिरनभ्यासविकारे।
आद्यंतवदेकस्मिन् ।१।१।२१ एकस्मिन्क्रियमाणंकार्यमा
दाविवांतइवस्यात् । सुपिचेतिदीर्घः । आभ्याम् । नेद
मदसोरकोः । ७।१।११अककारयोरिदमदसोर्भिसऐस्न-
स्यात्। एभिः॥ अस्मै । एभ्यः २ ॥ अस्मात्२। अस्य ।
अनयोः। एषां । अस्मिन् । एषु । द्वितीयाटौस्स्वेनः ॥
२।४।३४ इदमेतदोरन्वादेशे । किंचित्कार्यंविधातुमुपात्त
स्यकार्य्यान्तरंविधातुंपुनरुपादानमन्वादेशः यथानेन-
व्याकरणमधीतंएनंछंदोध्यापयेति । अनयोः पवित्रंकुलं
एनयोः प्रभूतंस्वमिति । एनम् एनौ॥एनान्। एनेन।
एनयोः२। राजा। नङिसंवुद्ध्योः। ८।२।८ नस्यलोपोन
ङौसंवुद्धौच । हेराजन् । ङावुत्तरपदेप्रतिषेधः। ब्रह्मनि-
ष्ठः । राजानौ । राजानः । राजानं । राजानौ । जञो
ज्ञः ॥ राज्ञः ॥ नलोपःसुप्स्वरसंज्ञातुग्विधिषुकृति ८।२।२
सुब्विधौस्वरविधौसंज्ञाविधौकृतितुग्विधौचनलोपोऽसिद्धो
नान्यत्र॥ राजाश्वइत्यादौ ॥ इत्यसिद्धत्वादात्वमेत्वमै-
स्त्वंञ्चन राजभ्याम् ॥ राजभिः ॥ राजभ्यः ॥ राज्ञि ॥
राजनि ॥ यज्वा ॥ यज्वानौ ॥ यज्वानः ॥ नसंयोगा-
द्वमंतात् । ६।४।१३७ वमांतसंयोगादनोकारस्यलोपोन ।
यज्वनः । यज्वना । यज्वभ्याम् । ब्रह्मणः । इन्हन्पू-
षार्यम्णां शौ । ६।४।१२ एषांशावेवोपधायादीर्घः। सौ-

च ॥ ६।४।१३ इन्नादीनामुपधायादीर्घः स वृद्धौसौ ॥ वृत्रहा ॥ हेवृत्रहन् ॥ एकाजुत्तरपदेणः ॥ ८।४।१८ एकाजुत्तरपदं यस्यतस्मिन्समासेपूर्वपदस्थान्निमित्तात्परस्यप्रातिपदिकांतनुम्विभक्तिस्थस्यनस्यणत्वंस्यात् ॥ वृत्रहणौ ॥वृत्रहणः ॥ होहन्तेर्ञ्णिन्नेषु ॥ ७।३।५४ ञितिणितिप्रत्ययेनेचपरेहन्तेर्हस्यकुत्वंस्यात्॥हन्तेः८ ४ २२उपसर्गस्थान्निमित्ताद्धं तेर्नस्यणः॥प्रहण्यात्॥अत्पूर्वस्य॥८।४।२२ हंतेरत्पूर्वस्यैवनस्यणोनान्यस्य ॥ प्रघ्नंति ॥ योगविभागसामर्थ्यादनंतरस्यविधिर्वाभवतिप्रतिषेधोवेतिन्यायंबाधित्वाकुमतिचेतिणोपिनिषत्यते ॥ वृत्रघ्नः ॥ इत्यादि ॥ एवंशार्ङ्गिन्यशस्विन्अर्यमन्पूषन् ॥ मघवावहुलं॥ ६।४।१२८ मघवन्शब्दस्यवातृइत्यन्तादेशः ॥ ऋइत् ॥ उगिदचांसर्वनामस्थानेऽधातोः॥७।१।७० अधातोरुगितोनलोपिनोंचतेश्चनुम्स्यात्सर्वनामस्थाने ॥ मघवान् ॥ इहउपधादीर्घेकर्त्तव्येसंयोगांतलोपस्यासिद्धत्वंनवति ॥ ॥ वहुलग्रहणात्मघवन्तौ ॥ मघवतः ॥ मघवता ॥ तृत्वाभावेसुटिराजवत् ॥ श्वयुवमघोनामतद्धिते ॥ ६।४।१३३ अन्नन्तानामेषामतद्धितेपरेसंप्रसारणंस्यात् ॥ मघोनः । मघवभ्यामित्यादि एवं श्वन्युवन् नसंप्रसारणेसंप्रसारणम् । १।३७ यूनः । युवभ्यामित्यादि ॥ अर्वा । हेअर्वन् । अर्वणस्त्रसावनञः । ६।४।१२७ नञारहितस्यार्वन्नित्यस्यतृइत्यंतादेशोनतुसौ । अर्वंतौ ॥ अर्वतः । अर्वद्भ्याम् पथिमथ्यृभुक्षामात् ७।१।८५ सौ । इतोऽत्सर्वनामस्थाने७।१।८६पथ्यादेः। थोन्थः । ७।१।८७

पथिमथोस्थस्यन्यादेशः सर्वनामस्थाने। पन्थाः। हे पन्था. पंथानौ। पन्थानः। भस्यटेर्लोपः। ७।१।९९ पथ्यादेः पथः। पथिभ्याम्। पथिभ्यः। एवम्मन्थाः। ऋभुक्षाः। ष्नान्ताःषट् १,१।२४ ष्नान्तानाताचसंख्यापट्संज्ञास्यात्। पञ्च २। पञ्चभिः। पञ्चभ्यः २। षट्चतुर्भ्यश्चेतिनुट्। नोपधायाः। ६।४।७ नान्तस्योपधायादीर्घोनामि, पञ्चानां। पञ्चसु। अष्टनआविभक्तौ, ७।२।८४ हलादौवास्यात्। अष्टाभ्यऔश् ७,१,२१ कृताकारादष्टनोजश्शसोरौश्। अष्टभ्यइतिवक्तव्येकृतात्वनिर्देशोजश्शसोर्विषयेआत्वंज्ञापयति। अष्टौ २ अष्टाभिः। अष्टाभ्यः २॥ अष्टानां। अष्टासु॥ आत्वाभावेअष्टपंचवत्। ऋत्विग्दधृक्स्रग्दिगुष्णिगंचुयुजिक्रुंचांच॥ ३,२,५९ एभ्यः क्विन्। अंचेःसुप्युपपदे॥ युजिक्रुंचोकेवलयोः। क्रुञ्चेर्नलोपाभावश्चनिपात्यते कनावितौ कृदतिङ् ३,१,९३ अत्रधात्वधिकारेतिङ्भिन्नप्रत्ययः कृत्संज्ञः वेरपृक्तस्य६।१।६७ लोपः। क्विन्प्रत्ययस्यकुः। ८।२।६२ क्विन्प्रत्ययोयस्मात्तस्यकवर्गोन्तादेशःपदान्ते। ऋत्विक्। ऋत्विग्। ऋत्विग्भ्यान्. युजेरसमासे। ७।१।७१। सर्वनामस्थाने नुम्. सुलोपः संयोगान्तस्यलोपः. कुत्वेननस्यङः, युङ्। युञ्जौ. युञ्जः युग्भ्याम् असमासेकिम् सुयुग् चोः कुः ८।२।३० चवर्गस्यकवर्गःस्याज्झलिपदान्ते सुयुक् सुयुजौ सुयुजः सुयुग्भ्यां खन् खञ्जौ खञ्जः खन्भ्याम् व्रश्चभ्रस्ज सृज मृजयजराजभ्राजछशांषः झलिपदान्तेच जस्त्वचर्त्वे राट् राड् राजौ राजः राड्भ्याम् विभ्राट् देवेट् विश्व-

सृट् । परिमृट् । परौव्रजेष पदान्ते । परा-
वुपपदेव्रजेः क्विप्दीर्घश्चपदान्तेषत्वमपि । परित्यज्यसर्वंव्र
जतीतिपरिव्राट् । परिव्राजौ ॥ विश्वस्यवसुराटोः ६।३।
१२८विश्वस्यदीर्घस्याद्वसौराट्शब्दे चपरे ॥ राडितिपदा
न्तोपलक्षणार्थम् । विश्वाराट् । विश्वराजौ । विश्वाराड्-
भ्याम् । स्कोः संयोगाद्योरन्तेच । ८।२।२९ पदान्तेभलि
चपरेयः संयोगस्तदाद्योः सकारककारयोर्लोपः । भृट्
२ । सस्यश्चुत्वेनशः । झलांजश्झशीतिशस्यजः ॥ भृज्जौ
भृज्जः । भृड्भ्याम् त्यदाद्यत्वंपररूपत्वम् । तदोःसः सावन
न्त्ययोः ७।२।१०६ त्यदादीनांतकारदकारयोःस स्यात्सौ।
स्य । त्यौ । त्ये । स । तौते । यः । यौ । ये । ए-
षः । एतौ । एते । एनं । एनौ । एनान् । एनेन । ए
नयोः । ङेप्रथमयोरम् । ७।१।२८ युष्मदस्मद्भ्यांपरस्यङे
इत्येतस्यप्रथमाद्वितीययोश्चामादेशः । त्वाहौसौ । ७।
२।९४ अनयोर्मपर्यन्तस्य । शेषेलोपः ७।२।९०अनयोष्टिलो
पः । त्वं । अहम् । युवावौद्विवचने । ७।२।९२ द्वयोरुक्ता
वनयोर्मपर्यंतस्ययुवावौस्तोविभक्तौ ॥ प्रथमायाश्चद्विवच
नेभाषायाम् ॥ ७।२।८८ औङ्येतयोरात्वंलोके युवा.
म् । आवाम् । यूयवयौजसि । ७।२।९३ अनयोर्मपर्यंत-
स्य । यूयम् । वयम् । त्वमावेकवचने । ७।२।९७ ए-
कस्योक्तावनयोर्मपर्यंतस्यत्वमौस्तोविभक्तौ । द्वितीया-
यांच । ७।२।८७ अनयोरात्स्यात् । त्वाम् । माम् । श
सोनः । ७।१।२९ आभ्यांशसोनः । अयोपवादः । आदेः
परस्य । संयोगान्तलोपः । युष्मान् । अस्मान् । यो-

चि ७।२।८९ अनयोर्यादेशोऽनादेशे ऽजादौ विभक्तौ । त्वया । मया । युष्मदस्मदोरनादेशे ७।२।८६ अनयोरात्स्यादनादेशेहलादौविभक्तौ । युवाभ्याम् । आवाभ्याम् । युष्माभिः । अस्माभिः । तुभ्यमह्यौङयि । ७।२।९५ अनयोर्मपर्य्यन्तस्य । टिलोपः । तुभ्यम् । मह्यम् । भ्यसोऽभ्यम् । ७।१।३० आभ्यांपरस्य । युष्मभ्यम् । अस्मभ्यम् । एकवचनस्यच । ७।१।३२ आभ्यांङसेरत् । त्वत् । मत् । पंचम्याअत् ।७।१।३१आभ्यांभ्यसः । युष्मत् । अस्मत् । तवममौङसि । ७।२।९६ अनयोर्मपर्यन्तस्य ॥ युष्मदस्मद्भ्यांङसोऽश् ।७।२।९६ तव । मम । युवयोः २। आवयोः । सामआकं । ७।२।३३ आभ्यांसामआकं । युष्माकम् । अस्माकम् । त्वयि । मयि युष्मासु । अस्मासु । युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ ।८।१।२० पदात्परयोरपादादौस्थितयोः षष्ठ्यादिविशिष्टयोर्वान्नावौ । बहुवचनस्यवस्नसौ । ८।१।२१ उक्तविधयोरनयोः षष्ठ्यादिबहुवचनान्तयोर्वस्नसौस्तः । तेमयावेकवचनस्य । ८।१।२२ उक्तविधयोरनयोः षष्ठीचतुर्थ्येकवचनान्तयोस्तेमेएतौस्तः । त्वामौद्वितीयायाः । ८।१।२३ उक्तविधयोर्द्वितीयैकवचनान्तयोस्त्वामौस्तः । श्रीशस्त्वावतुमापीहदत्तात्तेमेपिशर्मसः । स्वामीतेमेपिसहरिःपातुवामपिनौविभुः सुखंवा नौददात्वीशः पतिर्वामपिनौहरिः । सोव्याद्वो नः शिवंवोनोदद्यात्सेव्योऽत्र वः सनः । २ । एकवाक्यनिघातयुष्मदस्मदादेशावक्तव्याः । एकतिङ्वाक्यम् । तेनेह न । ओदनं पचतवभ

विष्यति । इहतुसपादेवशालीनांतेओदनं दास्पामि ए-
तेवान्नावादयआदेशाअनन्वादेशेवावक्तव्याः । अन्वादे-
शेतुनित्यंस्युः । धातातेभक्तोस्ति । तवभक्तोस्तीति-
वा । तस्मैतेनमइत्येव । नचवाहाहैवयुक्ते ८।१।२४
। चादिपंचकयोगेनैतेआदेशास्युः । हरिस्त्वांमांचरक्षतु
। कथंत्वांमांवानरक्षेदित्यादि । पश्यार्थैश्चानालोचने
।८।१।२५ अचाक्षुषज्ञानार्थैर्धातुभिर्योगेनैतेआदेशाः स्युः।
चेतसात्वांसमीक्षते । आलोचनेतुभक्तस्त्वापश्यतिचक्षु-
षा । सपूर्वायाः प्रथमायाविभाषा । ८।१।२६ विद्यमान
पूर्वात्प्रथमान्तादन्वादेशेप्येतेआदेशास्युः।भक्तस्त्वमप्यहं-
तेनहरिस्त्वांत्रायतेसमां । त्वामेतिवा । सामंत्रितम् । २।
३।४८ संबोधनेयाप्रथमातदंतमामंत्रितसंज्ञंस्यात् ॥
आमंत्रितंपूर्वमविद्यमानवत् ८।१।२४॥ अग्नेतव ॥
देवास्मान्पाहि ॥ नामंत्रितेसमानाधिकरणेसामान्यव-
चनम् ८।१।७३ विशेष्यंसमानाधिकरणेविशेषणेआमंत्रि
तेपरेनाविद्यमानवत् ॥ हेहरेदयालोनःपाहि ॥ सुपात् ॥
सुपाद् ॥ सुपादौ ॥ पादःपत् ॥ ६।४।१३० । पाच्छब्दां
तंयदंगंभंतदवयवस्यपाच्छब्दस्यपदादेशः । सुपदः । सु
पाद्भ्याम् । अग्निमत् ।अग्निमद्।अग्निमथौ।अग्निमद्भ्या
म् ।अनिदितांहलउपधायाः क्ङिति ६।४।२४हलन्तानामनि
दितामङ्गानामुपधायानस्यलोपः किति ङिति च उगिदचा
मितिनुम् संयोगांतस्यलोपः। नस्यकुत्वेनङः।प्राङ्।प्राञ्चौ।
प्राञ्चः अचः।६।४।१३८लुप्तनकारस्यांचतेर्भस्याकारस्यलो
पः।चौ । ६।३।१३८ लुप्ताकारनकारेञ्चतौपरेपूर्वस्याणो

दीर्घः । प्राचः । प्राचा । प्राग्भ्याम् । प्रत्यङ् । प्रत्यञ्चौ । प्रतीचः । प्रत्यग्भ्याम् । उदङ् । उदञ्चौ । उद्ईत् ।६।४।१२९ उच्छब्दात्परस्यलुप्तनकारस्याञ्चतेर्भस्याकारस्यईत् । उदीचः । उदीचा । उदग्भ्याम् । समः समिः ।६।३।९३ वप्रत्ययान्ते ञ्चतौपरे । सम्यङ् । सम्यञ्चौ । समीचः । सम्यग्भ्याम् । सहस्यसध्रिः ।६।३।९५ तथा । सध्र्यङ् । सध्र्यञ्चौ । सध्रीचः । सध्र्यग्भ्याम् । तिरसस्तिर्यलोपे ।६।३।९४ अलुप्ताकारेञ्चतौवप्रत्ययान्तेतिरसस्तिर्यादेशः । तिर्यङ् । तिर्यञ्चौ । तिरश्चः ॥ तिरश्चा ॥ तिर्यग्भ्याम् । नाञ्चेःपूजायाम् ।६।४।३० पूजार्थस्याञ्चतेरुपधायानस्यलोपोन । प्राङ् । प्राञ्चौ । नलोपाभावादल्लोपोन ॥ प्राञ्चः ॥ प्राङ्भ्याम् । प्राङ्क्षु ॥ प्राङ्षु ॥ एवंपूजार्थे प्रत्यङादयः । क्रुङ् । क्रुञ्चौ ॥ क्रुञ्चः ॥ क्रुङ्भ्याम् । पयोमुक् ॥ पयोमुग् । पयोमुचौ । पयोमुचः ॥ पयोमुग्भ्याम् ॥ महपूजायाम् वर्त्तमानेपृषन्महद्बृहज्जगच्छतृवच्च।एतेनिपात्यंते शतृवच्चैषांकार्यंस्यात् ॥ उगित्वान्नुम् ॥ सान्तमहतः संयोगस्य ॥ ६।४।१० सांतसंयोगस्यमहतश्चयोनकारस्तस्योपधायादीर्घोऽसंबुद्धौसर्वनामस्थाने ॥ महान् । महान्तौ ॥ महान्तः ॥ हेमहन् ॥ महतः ॥ महद्भ्याम् ॥ अत्वसंतस्यचाधातोः । अत्वंतस्योपधायादीर्घोधातुभिन्नासन्तस्यचासंबुद्धौसौ ॥ धीमान् ॥ धीमन्तौ ॥ धीमन्तः । हेधीमन् ॥ शसादौमहद्वत् ॥ भातेर्डवतुः ॥ डित्वसामर्थ्यादभस्यापिटेर्लोपः ॥ भवान् ॥ भवन्तौ ॥ शत्रंतस्य

तुभवन् ॥ उभेऽभ्यस्तम् ॥ ६।१।५ षाष्ठद्वित्वप्रकरणेयै-
द्वे विहितेतेउभेसमुदितेऽभ्यस्तसंज्ञेस्तः । नाभ्यस्ताच्छ-
तुः॥ ७।१।७८ नुम्न ॥ ददत् ॥ ददतौ । जक्षित्यादयः
षट् । ६।१।६ षड्धातवोन्येजक्षितिश्चसप्तमएतेऽभ्यस्तसं
ज्ञास्युः ॥ जक्षत् ॥ जक्षतौ ॥ जक्षतः ॥ एवंजाग्रत् । द
रिद्रत् ॥ शासत् । चकासत् ॥ दीधीङ्दीप्तिदेवनयोः।
। वेविङ्वेतिनातुल्ये ॥ एतौछांदसौ । दिध्यत् । वे-
व्यत् । जक्षिजागृदरिद्राशास्दिधिङ्वेविङ्चकास्त्या-
स्था ॥ अभ्यस्तसंज्ञाविज्ञेयाधातवोमुनिभाषिताः ॥ १॥
गुप् ।गुब् । गुपौ।।गुपः गुब्भ्याम् त्यदादिषुदशोनालोच
नेकञ्च ३।२।६० त्यदादिषूपपदेष्वज्ञानार्थाद्दृशेर्धातोः
कञ्स्यात्चात्क्विन् आसर्वनाम्नः ६।३।९१द्दृग्दृशवतुषु तादृ
क्रताहृशौ ।ताहृशः ताहृग्भ्याम् व्रश्चेतिषः जस्त्वचर्त्वे
विट्।२।विशौ।विशः। विड्भ्याम् । नशेर्वाः ८।२।६३।नशेः
कवर्गोन्तादेशोवापदांतेनक्रनशौ।नशः।नड्भ्याम नग्भ्या-
म् स्पृशोनुदकेक्विन् ।३।२।५८ अनुदकेसुप्युपपदे स्पृशेः
क्विन् । घृतस्पृक् २ घृतस्पृशौ। घृतस्पृशः दधृक् २ द-
धृषौ।दधृषः दधृग्भ्याम्रत्नमुट् २ रत्नमुषौ।रत्नमुषः रत्नमु
ड्भ्याम् षट्।२।षड्भिःषड्भ्यः।षण्णाम् षट्त्सु।षट्सु यत्तु प्रा
चाषण्णांषड्णामित्युदाहृतंतत्प्रामादिकमेव। प्रत्ययेनि
त्यवचनात्।र्वोरुपधायादीर्घइकः।८।२।७६। रेफवांतस्यधा
तोरुपधायाइकोदीर्घःपदान्ते।पिपठीः।पिपठिषौ।पिपठिषः
पिपठीर्भ्याम् नुम्विसर्जनीयशर्व्यवायेऽपि।८।३।५८।एतैः
प्रत्येकंव्यवधानेपीण् कुभ्याम् परस्यसस्यमूर्द्धन्यादेशः

नपूर्वस्यपः॥पिपटीष्षु॥ पिपटीःपु चिकीः।चिकीर्षौ ः॥चिकीर्षु।विद्वान्।विद्वान्सौहे विद्वन्।वसोःस प्रसारणम्६।४।१३१व स्वन्तस्यभस्यसंप्रसारणम्।विदुषःवसुस्र स्वितिदत्वम्॥विद्वद्भ्याम्।पुसोऽसुङ्७।१।८९॥सर्वनामस्थाने॥पुमान्॥हेपुमन्॥पुमान्सौ॥पुम्सः।पुंभ्याम्॥पुंसु॥ ऋदुशनेस्यनङ्॥उशना उशनसौ अस्यस वृद्धौवा॥नङ्नलोपश्चवावाच्यः हेउशन। हेशनन् हेउशनःउ शनोभ्याम् अनेहा अनेहसौः अनेहसः हेअनेहः वेधाः वेधसौ वेधसः वेधोभ्याम् ॥ अदसऔसुलोपश्च। ७।२।१०७॥सौपरे। तदोरितिसः असौ औत्वप्रतिषेधःसाकच्कस्यवावक्तव्यः सादुत्वंच। असकौ असुकः त्यदाद्यत्वम्पररूपत्वम्।वृद्धिःअदसोसेर्दादुदोमः ॥ ८।२।८०। अदसोऽसान्तस्यदात्परस्यउदूतौस्तोदस्यमश्च आन्तरतम्याद्ध्रस्वस्यउःदीर्घस्यऊः।अमू जसशीः एतईद्बहुवचने८।३।८०अदसोदात्परस्यैतईद्दूस्यचमोवह्वर्थोक्तौअमी पूर्वत्रासिद्धमितिविभक्तिकार्यं प्राक्पश्चादुत्वमत्वे अमु ॥ अमू अमून् मुत्वेकृतेघिस ज्ञायांनाभावः॥नमुने॥८।२।३॥नाभावेकर्त्तव्येकृतेचमुभावोनासिद्धः अमुनाअमूभ्याम् अमीभिः। अमुष्मै। अमीभ्यः। अमुष्मात् अमुष्य अमुयोः अमीषां। अमुष्मिन् अमुयोः। अमीषु॥इतिहलन्ताःपुल्लिङ्गाः॥ नहोधः ८।२।३४। झलिपदांतेच नहिवृतिवृषिव्यधिरुचिसहितनिपुक्वौ। ॥ ६।३।११६॥ क्विबंतेष्वेषुपूर्वस्याणोदीर्घः उपानत्। उपानहौ॥ उपानहःउपानद्भ्याम् उपानत्सु क्विबन्तत्वात्कुत्वे नहस्यधः उष्णिक् २उष्णिहौ उष्णिहः।उष्णिग्भ्याम् ॥ द्यौः।दिवौ।दिवः द्युभ्याम् गौःगि

रै । गिरः । एवंपूः । चतस्रः । चतसृभिः । चतसृभ्यः । चतसृणाम् । चतसृषु । का । के । काः । सर्वावत् । यः सो । ७।२।११० इदमोदस्य । इदमोमः । इयं । त्यदाद्यत्वं । टाप् । दश्चेतिमः । इमे । इमाः । इमां । इमे । इमाः । अनया । हलिलोपः । आभ्याम् । आभिः । अस्यै । अस्याः २ । अनयोः २ । आसां । अस्यां । आसु स्रक् २ । स्रजौ । स्रजः । स्रग्भ्यां । त्यदाद्यत्वेटाप् ॥ स्या । त्ये । त्याः । एवंतद् । यद् । एतद् । वाक् २ । वाचौ । वाचः । वाग्भ्यां ३। अप्शब्दोनित्यंवहुवचनांतः ।अप्नृन्नितिदीर्घः।आपः । अपः। अपोभिः ॥ ७।४।४८ अपस्तकारोभादौप्रत्यये - अद्भिः - अद्भ्यः - अपां - अप्सु - दिक् - दिशौ - दिशः - दिग्भ्यां - त्यदादिष्विति दृशेः क्विन्विधानादन्यत्रापिकुत्वम् - दृक् - दृशौ - दृशः - दृग्भ्यां - त्विट् - त्विषौ । त्विषः - त्विड्भ्याम् ससजुषोरितिरुत्वं । सजूः- सजुषौ सजूर्भ्यां । आशीः आशिषौ - आशीर्भ्यांमे - असौ । उत्वमत्वे । अमू । अमूः । अमुया । अमूभ्याम् । अमूभिः ॥ अमुष्यै ॥ अमूभ्यः ॥ अमुष्याः २॥ अमुयोः ॥२॥ अमूषाम् ॥ अमुष्यां ॥ अमूषु- ॥ स्त्री ॥ इतिहलन्ताः स्त्रीलिंगाः । स्त्रीः ॥ स्वमोर्लुक् ॥ दत्वम् । स्वनडुत् ॥ स्वनडुही । चतुरनडुहोरित्याः।स्वनड्वांहि॥पुनस्तद्वत् ।शेषंपुंवत्। वाः वारी ॥ वारि । वारा ॥ वार्भ्याम् ॥ चत्वारी ॥ किं ॥ के ॥ कानि ॥ इदं ॥ इमे । इमानि - अन्वादेशेनपुंसकेएनद्वक्तव्यः - एनत् - एने ॥ एनानि - एनेन । एन

योः -२- व्योम - व्योम्नी ॥ व्योमनी - व्योमानि ॥ ब्रह्म - संबुद्धौनपुंसकानांनलोपोवाच्यःपि - हेब्रह्म-हेब्रह्मन् ॥ हे ब्रह्मणी - हेब्रह्माणि - गेःसुपि - अहः ॥ विभाषाङिश्योः - अह्नी - अहनी - अहानि ॥ अहन् ८।२। अहन्नित्यस्यरुः पदान्ते ॥ अहोभ्याम् - दण्डि दण्डिनी - दण्डीनि - सुपथिटिलोपः ॥ सुपथी - सुपंथानि ॥ ऊर्क् - ऊर्जी ऊर्न्जि ॥ नरजानांसंयोगः । त्यत् ॥ त्यं - त्यानि ॥ तत् । ते - तानि - यत् - ये यानि । एतत - एते - एतानि । अग्रह् स्फोटायनस्येतिअग्रह् । गवाक्शब्दस्यरूपाणिक्लीवेऽर्चागतिभेदतः । असंध्यवङ्पूर्वरूपैनवाधिकशतंमतम् ॥ स्वम्सुप्सुनवषड्भादौषटकेस्युस्त्रीणिजश्शसोः ॥ चत्वारिशेषेद्वेकरूपाणीतिविज्ञावय । २।१०९ । गवाक् -२- गोची गवाञ्चि - पुनस्तद्वत् - गोचा ॥ गवाग्भ्यां । शकृत् ॥ शकृती शकृंती॥शकृद्भ्यां॥ददत् - ददती ॥ वानपुंसकस्य - ७।१।७९ अभ्यस्तात्परोयः शतुरवयवस्तदंतस्यक्लीवस्यनुम्वास्यात्सर्वनामस्थाने । ददंति ॥ ददति । तुदत् - आच्छीनद्योर्नुम्७।१८० अवर्णान्तादंगात्परोयः शतुरवयवस्तदंतस्यनुंवाशीनद्योः ॥ तुदंती - तुदती - भात् - भांती ॥ भाती । भांति ॥ पचत् - शप्श्यनोर्नित्यम् ७।२।८१ शप्श्यनोरात्परोयः शतुरवयवस्तदंतस्यनुंशिनद्योःपचंती-पचंतिदीव्यत्दीव्यंती॥धनुः॥धनुषीसांतेतिदीर्घःनुंविसर्जनीयेतिपः॥धनूंषि॥धनुर्भ्यां एवंचक्षुर्हविरादयः पयः पयसी पयांसि॥पयोभ्याम्॥सु

पुन् ॥ सुपुंसो ॥ सुपुमांसि ॥ अदः विभक्तिकार्यं ॥ उत्वमत्वे ॥ अमू ॥ अमू निशेषंपुम्वत् ॥ स्त्री ॥ इतिहलन्ताः नपुंसकलिंगाः ॥ स्वरादिनिपातमव्ययम् ।७।१।३७॥ स्वर् । अन्तर् ॥ प्रातर् । पुनर् सनुतर् । उच्चैस् । नीचैस् । शनैस् । ऋधक् । ऋते । युगपत् ॥ आरात् ॥ पृथक् । ह्यस् । श्वस् दिवा । रात्रौ । सायं । चिरं ॥ मनाक् । ईषत् । जोषं । तूष्णीं । वहिस् । अवस् । समया ॥ निकषा स्वयं । वृथा । नक्तं । नञ् हेतौ । इद्धा । अद्धा । सामि । वत् ॥ ब्राह्मणवत् क्षत्रियवत् सना ॥ उपधा ॥ सनत् सनात् तिरस् अंतरा ॥ अंतरेण । ज्योक् । कं । शं सहसा । विना । नाना स्वस्ति स्वाहा ॥ स्वधा अलं । वषट् श्रौषट् वौषट् । अन्यत् । अस्ति । उपांशु क्षमा । विहायसा । दोषा ॥ मृषा । मिथ्या । मुधा । पुरा । मिथो मिथस् प्रायस् मुहुस् । प्रवाहुकं । प्रवाहिका । आर्यहलं । अभीक्ष्णं । साकं । साद्धं नमस् । हिरुक् । धिक् अथ । अम् । आम् ॥ प्रताम् । प्रशान् ॥ मा ॥ माङ् । आकृतिगणोयम् ॥ च ॥ वा । ह । अह एव एवं । नूनं शश्वत् । युगपत् ॥ भूयस् । कूपत् कुवित् । नेत् चेत् चण् यत्र कच्चित् । नह । हंत माकिः माकीं नकिः । नकीं आकीं । माङ् । नञ् । यावत् । तावत् । त्वै । द्वै न्वै । रै श्रौषट् । वौषट् स्वाहा स्वधा अलं षट् तुं तथा हि । खलु । किल । अथ । सुष्ठु स्म । आदह. उपसर्गविभक्तिस्वरप्रतिरूपकाश्च । अवदत्तं । अहंयुः । अ

स्ति क्षीरा। अ। आ। इ। ई। उ। ऊ। ए। ऐ। ओ। औ। पशु। शुकम्। यथा। कथाच। पाट्प्याट्। अंग। है। हे। भोः अये द्य। विषु। एकपदे। युत्। आतः। चादिरप्याकृतिगणः। तद्धितश्चासर्वविभक्तिः। १।१।३८ यस्मात्सर्वाविभक्तिर्नोत्पद्यतेसतद्धितांतोऽव्ययंस्यात्। परिगणनंकर्त्तव्यं। तसिलादयः प्राक् पाशपः। शस्प्रभृतयः प्राक्समासांतेभ्यः। अम्। आं॥ कृत्वोर्थाः। तसिवती। नाना ञौ। इति। एतदंतमव्ययम्। अत इत्यादि॥ कृन्मेजंतः। १।१।३९ कृद्योमांतएजन्तश्चतदंतमव्ययम्। स्मारमं स्मारम्। जीवसे पिबध्यै। क्त्वातोसुन्कसुन॥१।१।४० एतदंतमव्ययम्॥ कृत्वा उदेतोः॥ विसृपः॥अव्ययीभावश्च१।१।४१अधिहरि। अव्ययादाप्सुपः२।४।८२। अव्ययाद्विहितस्यापःसुपश्चलुक्। तत्रशालायाम्। अथविहितविशेषणान्नेह। अत्युच्चैसौ॥ अव्ययसंज्ञायांयद्यपिनदंनविधिरस्तितथापिनगौणे। आपृग्रहणंव्यर्थम्॥ अव्ययस्यालिंगत्वात्॥ तथाचश्रुतिः। सदृशंत्रिषुलिङ्गेषुसर्वासुचविभक्तिषु। वचनेषुचसर्वेषुयन्नव्येतितदव्ययम्॥१। वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः। आपंचैवहलंतानांयथावाचानिशादिशा। २। अवगाहः। वगाहः। अपिधानम्। पिधानम्॥इत्यव्ययानि। इतिसुबंतासमाप्तम्॥६३॥श्रीगणेशायनमः॥लट्-लिट्-लुट् ऌट्। लेट्। लोट् लङ्। लिङ्। लुङ्। ऌङ् एषुपंचमोलकारश्छन्दोमात्रगोचरः लः कर्मणिचभावेचाकर्मकेभ्यः ३।४।६९। लकाराः सकर्मकेभ्यः कर्मणिकर्त्तरिचस्युरकर्मके

ध्येभावेकर्त्तरिच - वर्त्तमानेलट् - ३।२।१२३। वर्त्तमान क्रियावृत्तेर्धातोर्लट्स्यात् अटावितौ उच्चारणसामर्थ्या ल्लस्यनेत्वम् भूसत्तायाम् कर्त्तृविवक्षायांभूल्इतिस्थिते। तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्- वहिमहिङ् ३।४।७८॥ एतेष्टादशलादेशास्युः लःपरस्मैपद म्। १।४।९९। लादेशाःपरस्मैपदसंज्ञाःस्युः तङानावात्म नेपदम् १।४।१०० तङ्प्रत्याहारः शानच्कानचौचैतत्स ज्ञाःस्युः पूर्वसंज्ञापवादः अनुदात्तङित आत्मनेपदम् १।३।१२। अनुदात्तेतउपदेशेयोङित्तदन्ताच्चधातोर्लस्य स्थानेआत्मनेपदंस्यात् स्वरितञितः कर्त्रभिप्रायेक्रिया फले १।३।७२। स्वरितेतोञितश्चधातोरात्मनेपदंस्यात्। कर्त्तृगामिनिक्रियाफले। शेषात्कर्त्तरिपरस्मैपदं १।३। ७८। आत्मनेपदनिमित्तहीनाद्धातोः कर्त्तरिलस्यपरस्मै पदंस्यात् तिङस्त्रीणित्रीणिप्रथममध्यमोत्तमाः। १।४। १०१ तिङउभयोःपदयोस्त्रयस्त्रिकाः क्रमादेतत्संज्ञास्युः। तान्येकवचनद्विवचनबहुवचनान्येकशः १।४।१०२ ल- ब्धप्रथमादिसंज्ञानितिङस्त्रीणित्री - णिप्रत्येकमेकवच नादिसंज्ञानिस्युः युष्मद्युपपदेसमानाधिकरणेस्थानिन्य पिमध्यमः १।४।१०५ तिङ्वाच्यकारकवाचिनियुष्मदि प्रयुज्यमानेऽप्रयुज्यमानेचमध्यमः अस्मद्युत्तमः १।४।१० ७ तथाभूतेस्मद्युत्तमः शेषेप्रथमः १।४।१०८। मध्यमोत्तम योरविषयेप्रथमः स्यात् भूति। इतिजाते-। तिङ् शित्सार्वधातुकम्। १।४।११३। तिङःशितश्चधात्वधिका रोक्ताएतत्संज्ञास्युः कर्त्तरिशप्। ३।१।६८।कर्त्रर्थेसार्वधा

तुकेपरेधातोः शप् - सार्वधातुकार्द्धधातुकयोः ७।३।८४ अनयोः परयोरिगंताङ्गस्यगुणःस्यात् । अवादेशः भवति भवतः झोन्तः ७।१।३। प्रत्ययावयवस्यझस्यान्तादेशः अतोगुणे- भवन्ति - भवसि । भवथः भवथ - अतो दीर्घोयञि - ७।३।१०१ अतोङ्ग स्यदीर्घोयञादौसार्व धातुके - भवामि - भवावः : भवामः सभवति - तौभ वतः तेभवन्ति - त्वंभवसि - युवांभवथः यूयंभवथ ॥ अहंभवामि - आवांभवावः वयंभवामः शेषेविभाषा । कखादावषान्तउपदेशे । १।४।१८ उपदेशेकादिखादिषा न्तवर्जे गदनदादेरन्यस्मिं धातौ वुपसर्गस्थान्निमित्तात्पर स्यनेर्णत्वंवास्यात् - प्रणिभवति - प्रनिभवति-परोक्षेलि ट् - ३।४।११५ भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट्स्या त् - लस्यतिवादयः । परस्मैपदानांणल तुसुस्थलथुस णलवमाः ३।४।८२। लिटस्तिवादीनांणलादयःस्युः भुअइ तिस्थिते- भुवोवुग्लुङ्लिटोः ६।४।८८। भुवोवुगागमः स्यात्लुङ्लिटोरचि । लिटिधातोरनभ्यासस्य६।१।८ लिठिपरे नभ्यासस्यधात्ववयवस्यैकाचः प्रथमस्य द्वेस्त आदिभूतादचः परस्यतुद्वितीयस्य - भूव्भूव्अइति जाते - पूर्वोभ्यासः ६।१।४। अत्रयेद्वे तयोः हलादिःशेषः ॥ ७।४।६० अभ्यासस्यादिर्हल्शिष्यते। न्येहलोलुप्यन्ते ह्रस्वः ७।४।५९।अभ्यासस्याचः भवतेरः ७।४।७३ भवतेरभ्या सोकारस्यअः स्याल्लिटि - अभ्यासेचर्च । ८।४।५४। अ भ्यासेझलांचरःस्युः जशश्च । झशांजशः खयांचरइतिवि वेकः वभूव । वभूवतुः वभूवुः लिङ्च - ३।४।११५ लिङो

देशस्तिङार्द्धधातुकसंज्ञः स्यात् आर्द्धधातुकस्येड्वलादेः ७।
२।३५। वभूविथ- वभूवथु: वभूव - वभूव - व
भूविव - वभूविम - अनद्यतनेलुट् - ३।३।१५ भविष्य
त्यनद्यतनेर्थे धातोर्लुट् - स्यतासीलृलुटोः ३।१।३३ धाता
रेतौस्तोलृलुटोःपरतः शवाद्यपवादः लृइतिलृङ्लृटो
र्ग्रहणं - आर्द्धधातुकंशेषः ३।४।११४। तिङ्शिद्भ्योन्यो
धातोरितिविहितः प्रत्ययएतत्संज्ञः स्यात् - इट् - लुटः
प्रथमस्यडारौरसः२।४।८५ डित्वसामर्थ्यादभस्यापिटेर्लोपः
भविता - तासस्त्योर्लोपः ७।४।५०। सादौप्रत्यये। रिच७।४।
५१रादौप्रत्ययेनथा।भवितारौ-भवितारःभवितासि भविता
स्थःभवितास्थ-भवितास्मि- भवितास्वः भवितास्मः लृट्
शेषेच३।३।१३भविष्यदर्थाद्धातोर्लृट् क्रियार्थायांक्रियायां
सत्यामसत्यांचइट्भविष्यति- भविष्यतःभविष्यंति-भवि
ष्यसि-भविष्यथः भविष्यथ-भविष्यामि- भविष्यावःभवि
ष्यामः।लोट्च३।३।१६२विध्यादिष्वर्थेषुधातोर्लोट्-आशिषि
लिङ्लोटौ ।३।३।१७३।एरुः।३।४।८६ लोटइकारस्यउःभवतु
रतातङ्वातुह्योस्तातङाशिष्यन्यतरस्याम्-७।१।३५आशि
षितुह्योपरत्वात्सर्वादेशःननुङिच्चेत्यस्यक्कावकाशइतिचे
च्छृणुअनन्यार्थङकारयुक्तानङादिष्वितिगृहाणःभवतात्
लोटोलङ्वत् १४।८५ - लोटस्तामादयः सलोपश्च त-
स्थस्थमिपातान्तन्तामः ३।४।१०१। ङित्तश्चतुर्णां तामाद
यस्युः भवताम् भवन्तु सेह्यपिच्च ३।४।८७। लोटः से-
र्हिःसोपिच्च अतोहेः ६।४।१०५ लुक् भव भवतात् भव
त भवत मेर्निः ३।४।८९ लोटःआडुत्तमस्यपिच्च ३।४।९२

त्तमस्याट्सपिच्च ह्निन्योरुन्न इकारोच्चारणसामर्थ्यात् भवानितिप्राग्धातोः १।४।८० तेगत्युपसर्गसंज्ञकाःधातोःप्रागे वप्रयोक्तव्याःआनिलोट् ८।४।१६उपसर्गस्थान्निमित्तात्पर-स्यलोडादेशस्यानीत्यस्यनस्यणःस्यात्प्रभवाणिदुरःपत्वण त्वयोरुपसर्गत्वप्रतिषेधःवक्तव्यः॥ दुःस्थितिःदुर्भवानिअ न्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम् अन्तर्भवाणि नित्यङ्ङितः३।४।९९ सकारान्तस्यङिदुत्तमस्यनित्यंलोपः। अलोन्त्यस्येतिसलोपः भव भवाव भवाम अनद्यतनेलङ् ३।२।१११। अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् लुङ्लङ्लृङ् क्ष्वडुदात्तः ३।४।७१। एष्वंगस्याट् - इतश्च । ३।४।१०० ङि तोलस्यपरस्मैपदमिकारान्तंयत्तस्यलोपः अभवत् - अ भवतां । अभवन् । अभवः अभवतं ॥ अभवत । अभ वम्।अभवाव।अभवाम। विधिनिमन्त्रणामन्त्रणाधीष्टसंप्र श्नप्रार्थनेषुलिङ्३।३।१६१एष्वर्थेषुधातोर्लिङ् यासुट्पर-स्मैपदेषूदात्तोङिच्च-३।४।१०३।लिङः परस्मैपदानांयासुडा गमोङिच्च । ङित्वोक्तेर्ज्ञायतेक्वचिदनुबन्धकार्येष्वनल् विधावितिप्रतिषेधइति - तेनवक्ष्यमाणेस्यत्राहिम्न लि ङः सलोपोनन्त्यस्य । ७।२।७९। सार्वधातुकलिङोनन्त्य स्यसस्यलोपः इतिप्राप्ते - अतोयेयः ७।२।८० अतः प रस्यसार्वधातुकावयवस्ययास्इत्यस्यइय् - गुणः लोपो व्योर्वलि - भवेत् । भवेतां - झेर्जुस् ३।४।१०८लिङः भवे युः भवेः भवेतम् - भवेत - भवेयम् - भवेव - भवेम। लिङाशिषि । ३।४।११६। आशिषिलिङस्तिङार्द्धधातुकसं ज्ञःस्यात् - किदाशिषि - ३।४।१०४। आशिषिलिङोयासु

टूकित् ॥सकोरितिसलोपः क्ङितिच ॥ १।१।४। गित्कित्
ङि न्निमित्ता इग्लक्षणेगुणवृद्धीनस्तः भूयात् - भूया
स्ता - भूयासुः भूयाः भूयास्तं - भूयास्त - भूयासं -
भूयास्व। भूयास्म - लुङ् - ३।२।११०। भूतार्थेधातोर्लु
ङ् माङिलुङ् - ३।२।१७५। सर्वलकारा पवादः स्मो
त्तरेलङ्च ३।३।१७६ स्मोत्तरमाङिलङ्स्याल्लुङ्च च्लिलु
ङि३।१।४३। शवाद्यपवादः च्लेःसिच् गातिस्थाघुपाभू
भ्यः सिचः परस्मैपदेषु लुक् गापाविहेणादेशपिवतीगृ
ह्यते भूसुवोस्तिङि ७।३।८८। भूसूएतयोः सार्वधातुकेति
ङिगुणोन - अभूत् - अभूताम् - अभूवन् - अभूः अ
भूत - अभूत - अभूवम् अभूव अभूम नमाङ्योगे
६।४।७४। अडाटौनस्तः। माभवान्भूत् मास्मभवत् मास्म
भूत् लिङ्निमित्ते लृङ्क्रियातिपत्तौ ॥ ३।३।१३९। हेतु
हेतुमद्भावादिलिङ् निमित्तं तत्रभविष्यदर्थाद्धातोर्लृङ्
क्रियायाअनिष्पत्तौगम्यमानायां। अभविष्यत् अभवि
ष्यताम्। अभविष्यन् अभविष्यः अभविष्यतम् - अ
भविष्यत - अभविष्यम् -अ भविष्याव। अभविष्याम
सुवृष्टिश्चेदभविष्यत्तदासुभिक्षमभविष्यत् - इत्यादिज्ञे
यम् - प्रभवतीत्यादौउपसर्गाणामसमस्तत्वेपिसंहि -
तानित्या।तदुक्तं-संहितैकपदेनित्यानित्याधातूपसर्गयोः
नित्यासमासेवाक्ये तुसाविवक्षामपेक्षते इति सत्ताद्य
र्थनिर्देशश्चोपलक्षणम् - यागात्स्वर्गोभवतीत्यादौउत्प
द्यते इत्याद्यर्थात् उपसर्गास्त्वर्थविशेषस्यद्योतकाःप्र
भवति - पराभवति संभवति - अनुभवति - अभि

भवति - उद्भवति - परिभवतो । इतीत्यादै विलक्षणा
र्थावगतेः - उक्तंच - उपसर्गेणधात्वर्थोवलादन्यत्रनी
यते - प्रहारोहारसंहारविहारपरिहारवत् - इति - अ
अतथत्यगमने - अतति - अततः अतन्ति - अतसि -
तसातः अतथ - अतामि - अतात्र; अताम; अतआदेः
७।४।७० अभ्यासस्यादेरतोदीर्घः स्यात् परऋपापवाद
आत - आततु; आतुः आतिथ - आतथुः - आत -
आत - आतिव - आतिम - आतिता - आतिष्यति -
अततु - आडजादिनां - ३।४।७३ अजादेरंगस्याड् लुङ्
लङ् लृङ् क्षु - आतत् - अतेत् अत्यात् - लुङिसि
चिइडागमेकृते - अस्तिसिचोऽपृक्ते ७।३।९६ विद्यमाना
त्सिचोस्तेश्चपरस्यापृक्तस्यहलईडागमः ।इटईटि। ८।२।२८
इट;परस्यसस्यलोपःस्यादोटि सिजलोप
एकादेशेसिद्धोवाच्यः - आतित् - आतिष्टाम्- सिजभ्य
स्तविदिभ्यश्च । ३।४।१०९ सिजोभ्यस्ताद्विदेश्चपरस्यङि
त्संवधिनोभ्रेर्जुस -आतिषुः आतीः - आतिष्ट- आति
ष्ट - आतिषं आतिष्व - आतिष्म - आतिष्यत् एवम
वरक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थ्य
याचनक्रीयेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु
अवतीत्यादि । पिधगत्यां । पुगन्तलघूपधस्यच ॥ ७।३।
८६ पुगन्तस्यलघूपधस्यचाङ्गस्येकोगुणः सार्वधातुकार्द्ध
धातुकयोः धात्वादेरितिसः सेधति । षत्वं ॥ सिषेध ।
सेकसृपसृस्तृसृजस्तृ स्त्यान्येदन्त्याजन्तसादयः एका
चः षोपदेशाः स्युः ष्वष्कास्विदस्वदस्वंजस्वप्स्मिङ; द

न्त्यः केवलदन्त्यः नतु दन्त्योष्ठजोऽपि । ष्वष्कादीनांपृथ
गुग्रहणात् । असंयोगाल्लिट्कित् । १।२।५ असंयोगात्प
रो।पित्लिट्कित्स्यात् सिषिधतुः सिषिधुः सिषेधिथ।
सिषिधथुः सिषिध। सिषेध।सिषिधिव । सिषिधिम ॥ से
धिता ॥ सेधिष्यति ॥ सेधतु असेधत् ॥ सेधेत् ।
सिध्यात् ।असेधित ।असेधिष्यत् । सात्पदाद्योः ८।३।२१
सातेः पदादेश्चसस्यषोन - इतिनिषेधेप्राप्ते - उपसर्गा
त्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसं
जस्वंजाम्८।३।६५उपसर्गस्थान्निमित्तादेषांसस्यषः।सदिरप्रतेः
८।३।६६प्रतिभिन्नादुपसर्गात्सदेःसस्यषः।स्तंभेः८।३।६७सौ
त्रस्यसस्यषः।अवाच्चालंबनाविदूर्ययोः८।३।६८अवात्स्त
म्भेरेतयोरर्थयोः सस्यषः वेश्चस्वनोभोजने - ८।३।६९।
व्यवाभ्यांस्वनतेः सस्यषः परिनिविभ्यःसेवसितसयसि
वुसहसुट्स्तुस्वंजाम् ।८।३।७०।परिनिविभ्यःपरेषामेषांसस्यषः
निषेधति प्राक्सितादड्व्यवायेपि ८।३।६३। सेवसितेत्य
त्रसितशब्दात् प्राग्येसुनोत्यादयस्तेषामड्व्यवायेपिसस्य
षः।न्यषेधत्।न्यषेधीत्।न्यषेधिष्यत्।स्थादिष्वभ्यासेनचाभ्य
सस्य ।८।३।६४। प्राक्सितात्स्थादिष्वभ्यासेनव्यवायेपिष
त्वं स्यात् । एषामेवचाभ्यासस्यनतुसुनोत्यादीनाम् ।
निषिषेध । निषिषिधतुः । सेधतेर्गतौ ८।३।११३ । ग
त्यर्थस्यसेधतेः सस्यषोन - गं गांविसेधति । एवंचि
तीसंज्ञाने । शुचशोके। गदव्यक्तायांवाचि । गदति ।
नेर्गदनदपतपदघुमास्यतिहंतियातिवातिद्रातिप्सातिव
पतिवहतिशाम्यतिचिनोतिदेग्धिषुच ॥ ८।३।१७ उपस

र्गस्यान्निमितात्परस्यनेर्णत्वंस्यात् गदनदादिषुपरेषु ॥ प्रणिगदति । कुहोश्चुः ७।४।६२। अभ्यासकवर्गहकारयो श्चवर्गादेशः अतउपधायाः ७।२।११६ वृद्धिः स्यात् । ञि तिणितिचप्रत्यये । जगाद - जगदतुः जगदुः जगदिथ। जगदथुः जगद । णलुत्तमोवा । ७।१।९१। णित्स्यात् । जगाद । जगद । गदिता । गदिष्यति । गदतु । अगद त् । गदेत् । गद्यात् । अतोहलादेर्लघोः ७।२।७। हलादे र्लघोरंतोवृद्धिर्वेडादौसिचिपरस्मैपदेषु । अगादीत् । अ गदीत् । अगदिष्यत् ।णदअव्यक्तेशद्बे ।णोनः६।१।६५धा त्वादेर्णस्यनः ६।१।६५। णोपदेशास्त्वनर्दनाटिनाथ्नाध् नन्दनक्कन्हनृतः उपसर्गादसमासेपिणोपदेशस्य । ८।४। १४। उपर्गस्थान्निमित्तात्परस्यणोपदेशस्यधातोर्नस्यणः स्यात्समासेऽसमासेपि । प्रणदति । नदति । ननाद । अतएकहल्मध्येनादेशादेर्लिटि । ६।४।१२०। लिटिनिमित्ता देशादिकंनभवतियदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्या तएत्वमभ्यासलोपश्चकितिलिटि । नेदतुः नेदुः थलिच सेटि । ६।४।१२१। इद्गतिथलिप्रागुक्तंस्यात् । नेदिथ ॥ नेदथुः नेद । ननाद । ननद । नेदिव । नेदिम । नदि ता । नदिष्यति । नदतु । अनदत् । नदेत् । नद्यात् अनादीत् । अनदीत् । अनदिष्यत् श्च्युतिक्षरणे । इरइत्संज्ञावाच्याः शर्पूर्वाःखयः। ७।४।६१। शिष्यन्तेअभ्यो स स्य हलादिशेषापवादः चुश्च्योत । इरितोवा । ३ । १।५७। इरितोधातोश्च्लेरङ्वापरस्मैपदेषु अश्चुतत् अशुश्चोतीत् । यकाररहितोप्ययम् । श्चोतति । चुश्चो

त । अश्नोतत् अश्नोतीत् । च्युतिर् आसेचने । चयोतति । टुनदिसमृद्धौ । आदिर्ञिटुडवः १।३।५। उपदेशेधातोराद्याएतेइतः स्युः इदितोनुंधातोः ७।१।५८। नन्दति ननन्द । नंदिता । नंदिष्यति । नन्दतु । अनंदत् । नंदेत् इदित्वान्नलोपोन । नंद्यात् । अनंदीत् । अनंदिष्यत् । एवंकुथिपुथिलुथिमथिमन्थहिंसासंक्लेशनयोः विदिअवयवे । विन्दति । भिदीतिपाठान्तरं ॥ भिन्दति । गडिवदनैकदेशे । गण्डति ॥ चदिआह्लादने ॥ चन्दति ॥ त्रदिचेष्टायां ॥ त्रंदति ॥ कदिक्रदिक्लदिआह्वानेरोदनेच ॥ क्लिदिपरिदेवने । तकिकृच्छ्रजीवने ।युगिजुगिवुगिवर्जने।मघिमण्डने॥ शिघिआघ्राणे ॥ मंथविलोडने ॥ मंथतिममन्थ । कित्वान्नलोपः मथ्यात् । अर्चपूजायां ॥ अर्चति ॥ तस्मान्नुड्द्विहलः ७।४।७१। द्विहलोधातोर्दीर्घिभूतादकारात्परस्यनुट् ॥ आनर्च । आनर्चतुः आनर्चुः अर्चिता ॥ अर्चिष्यति अर्चतु ॥ आर्चत् ॥ अर्चेत् । अर्च्यात् । आर्चीत् ॥ आर्चिष्यत् । एवंअर्दगतौयाचनेच । अतिअदिबन्धने । वनषणसंभक्तौ । वनति । ववान । नशसददवादिगुणानाम् । ६।४।१२४। शसेर्ददेर्वकारादीनांगुणशब्देनभावितोयोऽत्तस्यचएत्वाभ्यासलोपोन । ववनतुः ववनुः सनति । ससान ॥ सेनतुः सेनुः येविभाषा । ६।४।४३। जनसनखनामात्वंवायादौक्ङिति। सायात् । सन्यात् । वदव्रजगतौ ॥ व्रजति। वव्राज । व्रजिता । व्रजिष्यति । व्रजतु । अव्रजत् ॥ व्रजेत् । व्रज्यात् ॥ वदव्रजहलन्तस्याचः ७।२।३।

एषामचोवृद्धिः परस्मैपदेसिचि । अव्राजीत् । अव्रजिष्य
त् । कटेवर्षावरणयोः कटति ॥ चकाट । कटिता । क
टिष्यति । कटतु । अकटत् । कटेत् कट्यात् । ह्म
न्तक्षणश्वसजागृणिश्व्येदिताम्॥ ७।२।५।हंमयांतस्यक्षणा
देरायंतस्यश्वयतेरेदितश्चवृद्धिर्नेडादौसिचि । अकटीत् ।
अकटिष्यत् । गुपूरक्षणे॥ गुपूधूपविच्छिपणिपनिभ्यआ
यः ३।१।२८ स्वार्थे । संनाद्यन्ताधातवः ३।१।३२। सनाद्
यःकमेर्णिङन्ताःप्रत्ययाअन्तेयेषान्तं धातुसंज्ञाःस्युःसन्क्य
च्काम्यच्क्यङ्क्यषोथाचारक्विब्णिज्यङौतथा ॥ यगाय
इयङ् णिङ् चेतिद्वादशामीसनादयः सनाद्यन्ताधातवइ
त्यस्यानन्तरंभूवादयइत्येवसूत्रयितुं युक्तम् । धातुत्वाल्ल
डादयः गोपायति । आयादयआर्द्धधातुकेवा । ३।१।३१।
आर्द्धधातुकविवक्षायामायेयङ् णिङोवास्युः कास्यनेका
चोआंवक्तव्योलिटि कासआम्विधानात्मस्यनेत्वम् ।
अतोलोपः ६।४।४१। अर्द्धधातुकोपदेशेयदद्तंतस्यातो
लोपआर्द्धधातुके ॥ आमः २।४।८१। आमःपरस्यलुक् ।
कृञ्चानुप्रयुज्यतेलिटि॥ ३।१।४० आमन्ताल्लिट्पराः कृ
ञ्भ्वस्तयोऽनुप्रयुज्यते तेषांद्वित्वादि॥उरत् ॥७।४।६६ अ
भ्यासस्यऋतोऽत्स्यात्प्रत्यये॥ वृद्धिः गोपायांचकार । द्वि
त्वात्परत्वाद्यणिप्राप्ते ॥ द्विर्वचनेचि १।१।५९। द्वित्वनि
मित्तेचिपरेअचआदेशोनद्वित्वेकर्त्तव्ये॥ गोपायांचक्रतुः
गोपायांचक्रुः एकाचउपदेशेनुदात्तात् ॥ ७।२।१० उ
पदेशेयोधातुरेकाजनुदात्तश्चततः परस्यार्द्धधातुकस्येण्
न ऊहदन्तैर्यौतिरुक्ष्णुशीस्नुनुक्षुश्विडीङ् श्रीभिः वृङ्

वृञ्भ्याञ्चविनैकाचोजन्तेषुनिहताः स्मृताः १ कान्तेषु शक्लृकः चान्तेषुपच् ॥ मुच् ॥ रिच् ॥ बच् ॥ विच् । सिचः । षट् ।छान्तेषुप्रछ्येकः जान्तेषु । त्यज् । निजिर् ॥ भज् ॥ भंज् । भुज् ॥ भ्रस्ज् ॥ मस्ज् ॥ यज् युज् रुज् ॥ रंज् ॥ विजिर् ॥ संज् ॥ स्वंज् ॥ सृजः पञ्चदश ॥ दान्तेषु ॥ अद् ॥ क्षद् ॥ खिद् ॥ छिद् ॥ तुद् ॥ नुद् ॥ पद्य ॥ भिद्॥विद्य विनद् ॥ विन्द ॥ शद् ॥ सद् ॥ स्विद्य ॥ स्कंद् ॥ हद् ॥ षोडश ॥ धान्तेषु क्रुध् ॥ क्षुध् ॥ वुध्य ॥ बंध् युध् रुध् ॥ राध् ॥ व्यध् शुध् ॥ साध् । सिध्य॥ एकादश । नान्तेषु ॥ मन्यहनौ द्वौ । पान्तेषु । आप् । क्षिप् - छुप् । तप् । तिप् । तृप्य ॥ दृप्य । लिप् । लुप् । वप् । शप् ॥ स्वप् । सृपस्त्रयोदश ॥ भान्तेषु ॥ यभ् ॥ रभ् लभस्त्रयः मान्तेषुगम् । नम् । रम् । यमश्चत्वारः शान्तेषु । क्रुश् ॥ दंश् ॥ दिश् । दृश् ॥ मृश् । रिश् । रुश् । लिश् । विश् ॥ स्पृशो दश ॥ षान्तेषु ॥ कृष् । त्विष् तुष् । द्विष् ॥ दुष् ॥ पुष्य ॥ पिष् ॥ विष् ॥ शिष् ॥ श्लिष्याएकादश ॥ सान्तेषु ॥ घस्वसतीद्वौ ॥ हान्तेषु ॥ दह् ॥ दुह् ॥ दिह् ॥ नह् ॥ मिह् ॥ रुह् लिह ॥ वहोष्टौ ॥ अनुदात्ताहलन्तेषुधातवस्त्र्यधिकंशतं ॥ गोपायांचकर्थ २ गोपायांचक्रथुः गोपायांचक्र ॥ गोपायांचकार ॥ गोपयांचकृव गोपायांचकृम ॥ गोपायांवभूव ॥ गोपायामास । जुगोप । जुगुपतुः जुगुपुः स्वरतिसूतिसूयतिधूञूदितोवा॥ ७।२।४४ स्वरत्यादेरूदितश्चपरस्यवलादेराद्धधातुकस्ये

हुत्रा॥ जुगोपिथ॥ जुगोपथ।गोपायिता गोपिता॥गोप्ता
गोपायिष्यति।गोपिष्यति।गोप्स्यति।गोपायतु-अगोपा-
यत्।गोपायेत्।गोपाय्यात्।गुप्यात्।अगोपायीत्।नेटि- ।७
।२।४ इडादौसिचिहलन्त लक्षणावृद्धिर्न। अगोपीत्।अ
गौप्सीत्-झलोझलि-८।२।२६झलःपरस्यसस्यलोपःस्या
ज्झलि-अगौप्ताम्-अगौप्सुः॥अगौप्सीः॥अगौप्तम्-अगौ
प्त।अगौप्सं-अगौप्स्व-अगौप्स्म-॥अगोपायिष्यत्- अ
-गोपिष्यत् - अगोप्स्यत्-क्षिक्षये-क्षयति-चिक्षाय-चिक्षि
यतुः चिक्षियुःएकाचइतिनिषेधेप्राप्ते-कृसृभृवृस्तुद्रुस्रुश्रु
वोलिटि- ७।२।१३ क्रादिभ्यएवलिटइरान्नस्यादन्यस्मा
दनिटोपिस्यात्-अचस्तास्वत्थल्यनिटोनित्यम्७।२।६१।उप
देशेजन्तोयोधातुस्तासौनित्यानिट्ततः परस्यथलइ-
रान-उपदेशेत्वतः ७।२।६२ उपदेशेकारवतस्तासौनित्या
निटः परस्यथल-इरान- ऋतोभारद्वाजस्य - ७।२।६३
तासौनित्यानिटृऋदन्तादेवथ लोनेट्भारद्वाजस्यमतेन-ते
नान्यस्यतुस्यादेव-अयमत्रसंग्रहः-अजन्तोकारवान्वायस्ता
स्यनिट्थलिवेडयम्॥ऋदन्तइदृङ्नित्यानिट्क्राद्यन्यो लि
टिसेड्भवेत् - चिक्षयिथ चिक्षेथ - चिक्षियथुःचिक्षिय
चिक्षाय। चिक्षय- चिक्षयिथ - चिक्षियिम - क्षेता- क्षे-
ष्यति- क्षयतु- अक्षयत्-क्षयेत्- अकृत्सार्वधातुकयोर्दी
र्घः ७।४।२५ अजन्ताङ्गस्यदीर्घः स्याद्यादौप्रत्ययेनतुकृत्सा
र्वधातुकयोः क्षीयात् - सिचिवृद्धिः परस्मैपदेषु- इगंतां
गस्यवृद्धिःपरस्मैपदपरेसिचि- अक्षैषीत्॥अक्षेष्यत्-तपस
न्तापे- तपति- तताप- तेपतुः तेपुः तेपिथ ततप्थ-

तपता- तपस्यति- तपतु- अतपत्- तपेत्- तप्यात्- अ-
ताप्सीत्- अताप्ताम् अतप्स्यत्- निसस्तपतावनासे व
ने- ८।३।१०२षःस्यात्-आसेवन पौनःपुन्यतत्तोन्यस्मि-
न्विषये-निष्टपति-क्रमुपादविक्षेपे वाभ्राशभ्लाशभ्रमुक्रमु-
क्लमुत्रसित्रुटिलषः ३।१।७०। एभ्यःश्यन्वाकर्तरिसार्व
धातुके- पक्षेशप् क्रमःपरस्मैपदेषु७।३।७८क्रमेःदीर्घः पर
स्मैपदेशिति- क्राम्यति- क्रामति- चक्राम स्नुक्रमोरना
त्मने पदनिमित्ते -७।२।३६अत्रैवेट्-क्रमिता क्रमिष्यति-
क्राम्यतु-क्रामतु -अक्राम्यत् -अक्रामत्-काम्येत् । का
मेत् । क्रम्यात् । अक्रमीत् । अक्रमिष्यत्
चमुछमुजमुझमुअदने । ष्ठिवुक्लमुचमांशिति । ७।३।७५
अचोदीर्घः आङिचमइति वक्तव्यम् । आचामति । आ
ङिकिम् । चमति । विचमति । अचमीत् । स्खलसं
चलने । स्खलति । चस्खाल । अतोलान्तस्य । ७।२।२।
अतः समीपौयौलौतदन्तस्यांगस्यातोवृद्धिः परस्मै पदे
सिचि । अस्खालीत् । अस्खलिष्यत् ।त्सरछद्मगतौ ।
अत्सारीत् । पापाने पाघ्राध्मास्थाम्नादाणदृश्यर्त्ति
सर्त्तिश दसदांपिबजिघ्रधमतिष्ठमनयच्छपश्यच्छर्धौशी
यसीदाः ७।३।७८। पादीनांपिबादयस्पुरित्संज्ञ कशादौप्र
त्यये । पिबादेशोऽदन्तस्तेननगुणः पिबति। आतऔण
लः । ७।१।३४ पपौ आतोलोपइटिच । ६।४। अजादौ
राद्धधातुकयोः क्ङिदिटोः परयोरातोलोपःपपतुः प
पुः पपिथ । पपाथ । पपथुः पप । पपौ । पपिव ।
पपिम । पाता । पास्यति । पिबतु । अपिबत् । पिबे

त् । एलिंङि ६।४।६१ घुसंज्ञा नांमास्थागैपिबतिजहा तिस्यतीनांचातएत्वमार्द्धधातुकेकितिलिङि पेयात् । गातिस्थेतिसिचोलुक् । अपात् अपाताम्॥आतः।३।४। ११० सिच्लुकि आदन्तादेवझेर्जुस् । उस्यपदान्तात् ६।१।९६।अपदान्तादवर्णादुसिपररूपमेकादेशः अपुः॥ अ- पास्यत् । ग्लैम्लैहर्षक्षये ग्लायति । आदेचउपदेशेशिति ६।१।४५ उपदेशेएजंतस्यधातोरात्वंनतुशिति । जग्लौ । ग्लाता । ग्लास्यति । ग्लायतु । अग्लायत् । ग्लायेत् वान्य स्यसंयोगादेः । ६।४।६८ घुमास्थादेरन्यस्यसंयोगादेर्धा तोरातएत्वं वाआर्द्धधातुकेकितिलिङि ग्लेयात् ग्लायात् यमरमनमातांसक्च । ७।२।७३।एषांसक्स्यादेभ्यः सिचइ टपरस्मैपदेषु । अग्लासीत् । अग्लास्यत् । एवंम्लायति । धेट्पाने । धयति दधौ॥दाधाघ्वदाप् ।१।१।२०।दारूपाधा रूपाश्चधातवोघुसंज्ञास्युर्दाप्दैपौविना ।धेयात् । वि भाषाधेट्श्व्योः ३।१।४९अाभ्यांच्लेश्चङ्वा । चङि६।१।११। अनभ्यासस्यधात्ववयवस्यप्रथमस्यैकाचोद्वेस्तो जादेर्द्वि तीयस्य । अदधत् अदधताम् विभाषाघ्राधेट्शाच्छासः २।४।७८ एभ्यः सिचोलुग्वापरस्मैपदेषु । अधात् अधा ताम्।अधुःपक्षेइटसकौ॥अधासीत॥अधासिष्टाम्।अधासि षुः ॥ दैन्यक्करणेध्यायति दैस्वप्नेद्रायति। ध्रैतृप्तौ ध्रायति।ध्यैचिन्तायाम्।ध्यायति॥रैशब्दे।रायति।स्त्यैष्ट्यै शब्दसंघातयोः।स्त्यायति।षोपदेशस्यापिसत्वेकृतेरूपंतुल्य म्॥षोपदेशफलंतुतिष्ठ्यासतो।दैभविष्यति।खैखदने। खायति। क्षैजैषैक्षये। क्षायति । जायति । सायति ।

घुमास्थेत्यत्रविभाषाघाधेट् इत्यत्रचस्यतेरेवग्रहणंनत्व स्य। तेनएत्वसिज्लुकौन। सायात्। असासीत्। कै गैशब्दे। शैस्रैपाके। पैओवैशोषणे। पायात्। अ पासीत्। घुमास्थेतीत्वं तदपवाद एलिङीत्येत्वंगाति स्थेतिसिज्लुकौन। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्त स्यैवग्रहणमितिपारूपस्यालक्षणिकत्वात्। ष्टै वेष्टने। स्तायात्। स्नै वेष्टने शोभायांचेत्ये के। स्नायात्। दैप् शोधने। दायति अघुत्वादेत्वसिज्लुकौन। दायात् अदासीत्- घ्रागंधोपादाने- जिघ्रति। घ्रायात्। घ्रे यात्। अघ्रात्। अघ्रासीत्। अघ्रास्यत्। ध्माश ब्दाग्निसंयोगयोः धमति। ष्ठागतिनिवृत्तौ। तिष्ठति। स्थादिष्वितिषत्वम्। अधितष्ठौ। उपसर्गादितिषत्व म्। अधिष्ठाता। स्थेयात्। सत्वे कृते प्रकृतिस्त वर्गः स्यात्। नकारजावनुस्वारपञ्चमौझलिधातुषु। सकारजःशकारश्चेषाट्टवर्गस्तवर्गजः गातिस्थेतिसिचोलु का अस्थात्। म्नाअभ्यासे। मनति। दाण् दाने। प्रणियच्छति ह्वृकौटिल्ये। ह्वरति। ऋतश्चसंयोगादेर्गुणः ७।४।१० ऋद न्तस्यसंयोगादेरंगस्यगुणोलिटि। उपधायावृद्धिः जह्वा र जह्वरतुः जह्वरुः जह्वर्थ। जह्वरथुः जह्वर। जह्वार। जह्वर। जह्वरिव। जह्वरिम। ह्वर्ता ऋद्धनोस्ये ७।२।७० ऋतोहन्तेश्चस्यइट्। ह्वरिष्यति ह्वरतु। अह्वरत्। ह्वरेत्। गुणोर्तिसंयोगाद्योः ७।४।२९ अर्तेः संयोगादे ऋदन्तस्यचगुणोयकियादावार्द्धधातुकेलिङिच - ह्वर्यात् अह्वार्षीत्। अह्वरिष्यत्। स्वृशब्दोपतापयोः स्वरति।

स्वरतीतिवेट्। सस्वरिथ। सस्वर्थ। वमयोस्तुस्वरत्यादि विकल्पंवाधित्वापुरस्तात्प्रतिषेधकाराद्दारंभसामर्थ्याच्छ्रयुकः किती तिनिषेधेप्राप्ते क्रादिनियमान्नित्यमिट्। सस्वरिव। सस्वरिम। परत्वादृद्धनोरितिनित्यमिट्। स्वरिष्यति। स्मृ चिन्तायां। स्मरति। हृ संवरणे। ह्वरति। सृ गतौ। क्रादित्वान्नेट्। ससर्थ। ससृव। ससृम। रिङ्शयग्लिङ्क्षु ७।४।२८ शेयकियाद्यावार्द्धधातुकेलिङिच ऋतोरिङ्। रीङ्प्रकृतेरिङ्विधिसामर्थ्यान्नदीर्घः स्रियात्। असार्षीत् शिधगतौ तुपाघ्रेतिशितिधौरादेशः धावति। गृघृसेचने। ध्वृ हूर्छने। ध्वरति। दृशिर्प्रेक्षणे। पश्यति। विभाषासृजि दृशीः ७।२।६५ आभ्यांथलइड्वा। सृजिदृशोर्झल्यमकिति अनयोरमागमः स्याज्झलादावकिति। दद्रष्ठ। ददर्शिथ। ददृष्ठ। पढोः कःसि ८।२।४१ द्रक्ष्यति दृश्यात्। इरित्वोदङ् वा। ऋदृशोङि गुणः ७।४।१६। अदर्शत् न दृशः ३।१।४७ च्लेर्वक्ष्यमाणःक्सोन अद्राक्षीत् अद्रक्ष्यत्। श्रुश्रवणे। श्रुवःशृच ३।१।७४ श्रुवःशृ आदेशः श्नुप्रत्ययश्चकर्त्तरिसार्वधातुके। शृणोति। सार्वधातुकमपित् १।२।४ अपित्सार्वधातुकंङिद्धत्स्यात् शृणुतः हुश्नुवोः सार्वधातुके ६।४।८७। जुहोतेः श्नुप्रत्ययान्तस्यानेकाचोऽङ्गस्यासंयोगपूर्वस्योवर्णस्ययणस्यादचिसार्वधातुके। शृण्वन्ति। शृणोषि। शृणुथः शृणोमि। लोपश्चास्यान्यतरस्याम्वोः ६।४।१०७ असंयोगपूर्वस्यप्रत्ययोकारस्यलोपोवाम्वोःपरयोः शृण्वः शृण्मः शृणुवः शृणुमः शुश्राव। शुश्रुवतुः शुश्रुवुः शुश्रोथ। शुश्रुविथ। शुश्रुवथुः

शुश्रुव । शुश्राव । शुश्रव शुश्रुव । शुश्रुम । श्रोता । श्रोष्यति शृणोतु । शृणुतात् शृणुताम् शृण्वन्तु उतश्चप्रत्ययादसंयोगपूर्वात् ॥ असंयोगपूर्वात्प्रत्यये।हेर्लुक् शृणु।शृणुत शृणुत।गुणावादेशौ।शृणवानि शृणवाव ।शृणवाम । अशृणोत् अशृणुताम् । अशृण्वन् अशृणोः अशृणुत अशृणुत । अशृणवम् अशृण्व । अशृणुव । अशृण्म । अशृणुम । शृणुयात्।शृणुयातां । उस्य पदान्तात् । शृणुयुः शृणुयाःशृणुयातं । शृणुयात । शृणुयाम् । शृणुयाव । शृणुयाम । श्रूयात् । अश्रौषीत् । अश्रोष्यत् । गम्लृसृप्लृगतौ । इषगमियमां छः ७।३।७७ शिति। गच्छति । जगाम । गमहनजनखनघसांलोपः क्ङित्यनङि ६।४।९८। एषामुपधायालोपः स्यादजादौक्ङितिनत्वङि ॥ जग्मतुःजग्मुःजगमिथ । जगंथ । जग्मथुः जग्म । जगाम । जगम । जग्मिव जग्मिम।गंता।गमेरिट्परस्मैपदेषु।७।२।५८।गमेःसादेरार्द्धधातुकस्येट्परस्मैपदेषु । गमिष्यति । गच्छतु अगच्छत् । गम्यात् । पुषादिद्युताद्युलृदितः परस्मैपदेषु ।३।१।५५। श्यन्विकरणपुषादेर्द्युतादेर्लृदितश्चपरस्यच्लेरङ्परस्मैपदेषु । अगमत् । अगमिष्यत् । सर्पति। अनुदात्तस्यचर्दुपधस्यान्यतरस्याम् ६।१।५९। उपदेशेनुदात्तोयत्रऋदुपधस्तस्यांवाम्झलादावकिति । सृप्ता । सर्प्ता असृपत् । ञिक्ष्विदाअव्यक्ते शब्दे ।क्ष्वेदति । यभमैथुने । यभति वेट् । यभिथ । झषस्तथोर्धोधः ८।२।४०। झषः परयोस्तथयोर्धःस्यानतुदधातेः ययब्ध यब्धा ण

संप्रहृत्वे शब्दे नेमिथ । ननंथ । नंता नंष्यति । अनसीत् । अनंसिष्टां । त्यजहानौ । त्यजति । तत्याज । तत्यजिथ । तत्यक्थ । त्यक्ता । अत्याक्षीत् ॥ अत्याक्ताम् । अत्यक्ष्यत् अक्षव्याप्तौ । अक्षोन्यतरस्याम् ३।१।७५। श्नुर्वास्यात्कर्त्तरिसार्वधातुके । पक्षे शप् । अक्ष्णोति । अक्षति । आनक्ष ।आ नक्षिथ । आनष्ठ । अक्षिता । अष्टा । अक्षिष्यति ।स्कोरितिकलोपः । षढोः कःसिः८।२।४१अक्ष्यति । अक्ष्णोतु । अक्ष्णुहि अक्ष्णवानि । आक्ष्णोत् । आक्ष्णवम् । अक्ष्णुयात्।अक्ष्णुयाताम् अक्ष्णुयुःअक्ष्यात्।आक्षीत्।आक्षीष्टां। तक्षत्वक्षतनूकरणे । तनूकरणे तक्षः श्नुर्वाशब्विषये । तक्ष्णोति । तक्षतिवाकाष्ठम् । ततक्ष । ततक्षिथ । ततष्ठ । अतक्षीत् । अतक्षिष्टां । अताक्षीत् । अताष्टां तनूकरणं किम् वाग्भिःसंतक्षति । भर्त्संयतीत्यर्थः रक्ष पालने । रक्षति । णिक्षचुम्बने । प्रणिक्षति । वक्षरोषसंघातइत्येके । वक्षति । मृक्षसंघाते । मक्षइत्यके । तक्षत्वचने । त्वचनं संवरणम् । त्वचोग्रहणं च । पक्षपरिग्रहइत्येके । सूर्क्षआदरे । सुसूर्क्ष । काक्षिवाक्षिमाक्षिकांक्षायाम् । द्राक्षिध्राक्षिध्वाक्षिघोरवासितेच । चूषपाने । तूषतुष्टौ । पूषवृद्धौ । मूषस्तेये । लूषरूषभूषायाम् । शूषप्रसवे । यूषहिंसायाम् । जूषच । भूषअलंकारे । जिजये । जयति । संल्लिटोर्जेः ७।३।५७। संल्लिटोर्निमित्तादभ्यासात्परस्यजेःकुत्वम् । जिगाय जिग्यतुः जिगयिथ । जीवप्राणधारणे जीवति । पीवमीवतीव

णीवस्थौल्ये । पीवति पिपीव । मुर्वीबन्धने । उपधायांच ८।२।७८। धातोरुपधाभूतयोरेफवकारयोर्हल्परयोः परतइकोदीर्घःस्यात् । मूर्वति । पूर्वपर्वमर्वपूरणे । पूर्वति । पर्वति । मर्वति चर्वअदने । चर्वति । कषखषशिषजषझषशषवषमषरुषरिषहिंसार्थाः शेषति । शिशेष । शेष्टा । शलइगुपधादनिटः क्सः ३ १।४५।इगुपधोयः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः अशिक्षत्।तीषसहलुभरुषरिषः ७।२।४८इछत्यादेःपरस्यतादेरार्द्धधातुकस्येड्वा । रेषिता।रेष्टा । भषभर्त्सने इहभर्त्सनं श्वरवः पुषपुष्टौ । पोषिता । अनुदात्तेषुपुष्येतिश्यनानिर्देशादयमुदात्तःअङ्विधौदैवादिकस्यग्रहणान्नाङ् अपोषीत्।श्रिषुश्रिषुप्रुषुप्लुषुदाहे।श्रेषति।श्लेषति। प्रोषति।प्लोषति॥ इतिपरस्मैपदप्रक्रिया॥एधवृद्धौ। टितआत्मनेपदानांटेरे ।३।४।७९ टितोलस्यात्मनेपदानांटेरेत्वम् एधते।आतोङितः७।२।८१।अतःपरस्यङितामातइय्स्यात् एधेते।एधन्ते। थासस्से ३।४।८०। टितोलस्य एधसे एधेथे । एधध्वे । एधे । एधावहे । एधामहे । इजादेश्चगुरुमतोनृच्छः ३।१।३६। इजादिर्योधातुर्गुरुमान् ऋच्छत्यन्यस्ततआम्लिटि । आम्प्रत्ययवत्कृञोनुप्रयोगस्य । १ । ३।६३। आम्प्रकृत्यातुल्यमनुप्रयुज्यमानात्कृञोप्यात्मनेपदं स्यात् । लिटस्तझयोरेशिरेच् ३।४।८१। एकारोच्चारणंज्ञापकम् । तङादेशानांटेरत्वंनेति । तेनङारौरसान्न । एधांचक्रे । एधांचक्राते । एधांचक्रिरे । एधांचकृषे । एधांचक्राथे । इणःषीध्वंलुङ्लिटांधोङ्गात् । ८।३।७८।

इणन्तादंगात्परपंपीधं लुङ्लिटांधस्यढः एधांचकृढ्वे ।ए धांचक्रे । एधांचकृवहे । एधांचकृमहे । एधांबभूव । ए धामास अनुप्रयोगसामर्थ्यादस्तेर्भूभावोन। अन्यथाहि कृञ्ञानुप्रयुज्यतइतिकृञ्विवाब्रूयात्।एधिता। एधिता रौ । एधितारः एधितासे । एधितासाथे।धिच ।८।२।२५ धादौप्रत्ययेसलोपः।एधिताध्वे हएति ७।४।५२तासस्त्योः सस्यहःस्यात् । एधिताहे । एधितास्वहे । ए- धितास्महे । एधिष्यते । एधिष्येते । एधिष्यन्ते । एधि ष्यसे । एधिष्येथे । एधिष्यध्वे । एधिष्ये । एधिष्याव हे। एधिष्यामहे।आमेतः३।४।९०लोटएतआम्।एधताम् । एधेताम् । एधन्ताम् । सवाभ्यांवामौ३।४।९१।सवाभ्यांप रस्यलोडेतः क्रमाद्वामौस्तः एधस्व । एधेथाम् । ये धध्वं । एतऐ । ३।४।९३लोड्त्तमस्य । एधै । एधावहै । एधामहै । आटश्च । ऐधत । ऐधेताम् । ऐधन्त । ऐध थाः ऐधेथाम् । ऐधध्वम् ऐधे । ऐधावहि । ऐधामहि लिङःसीयुट्३।४।१०२लिङःसलोपोनन्त्यस्येतिसलोपः लोपो व्योर्वलि । ३।४।१०। एधेत । एधेयाताम् । झस्यरन् ३।४।१०५।लिङः एधेरन् एधेथाःएधेयाथाम् । एधेध्वम् इटोत् ३।४।१०६।लिङादेशस्य । एधेय । एधेवहि । एधे महि । सुट्तिथोः३।४।१०७।लिङस्तथोः सुट्यलोपः ए- धिषीष्ट। एधिषीयास्ताम्। एधिषीरन्एधिषीष्टाः एधिषीया- स्थाम् । एधिषीध्वम् । एधिषीय । एधिषीवहि ।एधिषी महि । एधिष्ट । एधिषाताम् । आत्मनेपदेष्वनतः।७।१।५। अनकारात्परस्यात्मनेपदेषुझस्यअत्स्यात् एधिषत॥ एधि

ष्टाः ऐधिषाथाम्। ऐधिषम्। ऐधिषि। ऐधिष्वहि। ऐधिष्महि। ऐधिष्यत। ऐधिष्येताम्। ऐधिष्यन्त ऐधिष्यथाः ऐधिष्येथां। ऐधिष्यध्वम्। ऐधिष्ये। ऐधिष्यावहि। ऐधिष्यामहि। कमुकान्तौ। कमेर्णिङ् ३।१।३०। स्वार्थे। कामयते। अयामन्ताल्वाय्येत्न्विष्णुषु ६।४।५५ एषुणेरय्।कामयाञ्चक्रे आयादयेतिवा चकमे। चकमाते। चकमिरे। चकमिषे। चकमाथे। चकमिध्वे चकमे। चकमिवहे। चकमिमहे कामयिता। कमिता। कामयिष्यते। कमिष्यते। कामयताम्। अकामयत।कामयेत।कामयिषीष्ट। कमिषीष्ट। णिश्रिद्रुस्रुभ्यः कर्त्तरिचङ् ३।१।४८।ण्यन्तात् श्र्यादिभ्यश्चच्लेश्चङ् कर्त्रर्थे लुङि कामइअतइतिस्थिते णेरनिटि ६।४।५१। अनिटादावार्द्धधातुकेपरेणेर्लोपः णौचङ्युपधायाह्रस्वः। ७।४।१। चङ्परेणौयदंगंतस्योपधायाह्रस्वः सन्वल्लघुनिचङ्परेनग्लोपे ७।४।९३। चङ्परेणौयदङ्गतस्ययोऽभ्यासोलघुपरस्तस्यसनीवकार्यंस्यात्णावग्लोपेऽसति। सन्यतः ७।४।७९। अभ्यासस्यातइत्सनि।दीर्घोलघोः ७।४।९४। लघोरभ्यासस्यदीर्घःसन्वद्भावविषये। अचीकमत। णिङभावपक्षे। कमेश्च्लेश्चङ्वाच्यः अचकमत। अकामयिष्यत। अकमिष्यत। भामक्रोधे। भामते बभामे। क्षमूष्सहने। क्षमते। चक्षमे। चक्षमिषे चक्षंषे। चक्षमिवहे। चक्षमिमहे। म्वोश्च ८।२।६५। मान्तस्यधातोर्मस्यनःस्याम्वोःपरयोः चक्षण्वहे चक्षन्महे गाधृप्रतिष्ठालिप्सयोर्ग्रंथेच गाधते। बाधृलोडने। लेडन प्रति

घातः वाधते नाथृनाधृयाच्ञोपतापैश्व-र्योशिपुः आ शिपिनाथइतिवाच्यम् अस्याशिष्येवात्मनेपदंस्यात् ॥ नाथते । अन्यत्रनाथति । नाधते । दधधारणे । दधते । स्कुदिआप्रवणे आप्रवणंउत्प्लवनमुद्धरणंच । स्कुन्दते । चुस्कुन्दे॥श्विदिश्वैत्ये । श्विन्दते । शिश्विन्दे । वदिअभिवादनस्तुत्योः वन्दते । ववन्दे । भदिकल्याणेसुखेच । भन्दते । बभन्दे । मदिस्तुतिमोदमदस्वप्न कांतिगतिषु । मन्दते । स्पदिकिंचिच्चलने । स्पन्दते पस्पन्दे । मुदहर्षे । मोदते । मुमुदे । उर्दमाने क्रीडायांच । ऊर्दते । ऊर्दाञ्चक्रे । कुर्दखुर्दगुर्दगुदक्रीडायामेव । कूर्दते । खूर्दते । गूर्दते । गोदते । जुगुदे । सूद क्षरणे । सूदते । सुषूदे । ह्रादअव्यक्तेशब्दे । ह्रादते । जह्रादे । ह्लादीसुखेच । ह्लादते । स्वादव्यक्तेशब्दे । स्वादआस्वादे । स्वादते । पर्दकुत्सितेशब्दे । गुदरवइत्यर्थः पर्दते । पपर्दे । यतीप्रयत्ने । यतते । येते । श्रथिशैथिल्ये । श्रन्थते । ग्रथिकौटिल्ये । ग्रन्थते । कत्थश्लाघायाम् । कत्थते । चकत्थे । श्लाकृसंघाते । संघाते ग्रथः सचेहग्रथ्यमानस्यव्यापारोग्रंथितुर्वा । आद्ये कर्मकाद्वितीयेसकर्मकः । श्लाकते । शुश्लोक । शकिशंकायां । शंकते । शशंक । अकिलक्षणे । अंकते । आनंक । ककिवकिश्वकित्रकिढौकृत्रौकृष्वस्कवस्कमस्कटि कृठीकृतिकृतीकृपाचलविगल्यर्थाः कंकते । वंकते । श्वंकते त्रंकते । ढौकते । डुढौके । त्रौकते । तुत्रौके । सुष्वधातुष्ठीवुष्वष्कतोनासत्वनिषेधः ष्वस्कते पष्वस्के । व

स्कते । ववस्के । मस्कते । ममस्के । टेकते । टीकते । तेकते तीकते । रंघते लंघते । श्लाघृकत्थने । श्लाघते । पचिव्यक्तिकरणे । पञ्चते । पपञ्चे । ऋजगतिस्थानार्जनोपार्जनेषु अर्जते नुट्विधौऋकारैकदेशोरेफोहल्त्वेनगृह्यते आनृजे । ऋजिभृजिभर्जने । ऋंजांचक्रेभर्जते ॥ एजृभ्रेजृभ्राजृदीप्तौ ॥ एजते । एजाञ्चक्रे । भ्रेजते । बिभ्रेजे । भ्राजते । बभ्राजे । वेष्टवेष्टने । वेष्टते । विवेष्टे । चेष्टचेष्टायां । चेष्टते । चिचेष्ठे । स्फुटविकसने । स्फोटते । पुस्फुटे । टुवेपृकंपने । वेपते । कपिचलने । कंपते । भिक्षभिक्षायामलाभेलाभेच । भिक्षते । बिभिक्षे । दिक्षमौण्ड्येज्योपनयननियमव्रतादेशेषु । दीक्षते । दिदीक्षे । भाषव्यक्तायांवाचि । भाषते बभाषे । वर्षस्नेहने । वर्षते । ववर्षे । ईहचेष्टायां । ईहते । ईहाञ्चक्रे । गर्हगल्हकुत्सायाम् । गर्हते।गल्हते । काशृदीप्तौ । काशते । ऊहवितर्के ऊहते।उहाञ्चक्रे।कथमनुक्तमप्यूहतिपण्डितोजनइति । अनुदात्तत्वलक्षणमात्मनेपदमनित्यम् । अनुदात्तेत्त्वक्षिङोङि त्करणाज्ज्ञापकात् । तेनउदयतियदिभानुः स्फायन्निर्मोक संधिरित्यादिसिद्धमित्याहुः अयगतौ । अयते उपसर्गस्यायतौ।८।२।१९।अयतावुपसर्गरेफस्यलत्वम् । प्लायते । पलायते । दयायासश्च ।३।१।३७ एभ्यआम्लिटि । अयांचक्रे । अयिता । अयिष्यते । अयताम् । आयत । अयेत । अयिषिष्टविभाषेटः।८।३।७९इणः परोयइट्ततःपरेषांषीध्वं लुङ्लिटां

नस्याधस्यवाढःअयिपीढ्वम्अयिपीध्वम् आयिष्टआयि
ढम्आयिध्वम्आयिष्यत पुषादित्यङ्घुतदीप्तौद्योतते
द्युतिस्वाप्योःसंप्रसारणम् ७।४।६७। अभ्यासस्यादिद्यु ते
द्योतिता द्योतिष्यते द्योतताम् अद्योतत द्योतेत द्यो
तिषीष्टद्युद्भ्योलुङि १।३।९१। द्युतादिभ्यः परस्मैपदं
वालुङि पुषादीत्यङ् अद्युतत् अद्योतिष्ट अद्योतिष्यत
एवंश्वितावर्णे ञिमिदास्नेहने ञिष्विदास्नेहनमोचनयोः
मोहनयोरित्येके रुचदीप्तावभिप्रीतौच घुटपरिवर्त्त
नेशुभदीप्तौ क्षुभसञ्चलने णभतुभहिंसायां स्रंसुध्वंसु
भ्रंसुअवस्रंसने ध्वंसुगतौचाश्रंभुविश्वासे वृतुवर्त्तनेव
र्त्तते ऋदुपधेभ्योलिटःकित्वं गुणात्पूर्वविप्रतिषेधेन ववृ
ते वर्त्तिता वृद्भ्यःस्यसनोः १।३।९२। वृतादिभ्यः पञ्
चभ्योवापरस्मैपदंस्येसनिच नवृद्भ्यश्चतुर्भ्यः ७।२।५९।
वृत् वृधुशृधुस्यन्दूभ्यः सादेरार्द्धधातुकस्येण्णतङानयोर
भावे वर्त्स्यति वर्त्तिष्यते वर्त्तताम् अवर्त्तत वर्त्तेत
वर्त्तिषीष्ट अवृतत् अवर्तिष्ठ अवर्त्स्यत् अवर्त्तिष्यत ए
वं वृधुवृद्धौ शृधुशब्दकुत्सायां स्यन्दूप्रस्रवणे स्यन्दते
सस्यन्दे सस्यन्दिसे सस्यन्त्से सस्यन्दिध्वे सस्यन्ध्वे स्यंदि
तास्यन्ता वृद्भ्यः स्यसनोरितिपरस्मैपदेकृतेऊदित्त्वलक्ष
णमन्तरङ्गमपिविकल्पंबाधित्वाचतुर्ग्रहणसामर्थ्यान्नवृद्
भ्यइतिनिषेधःस्यन्त्स्यतिस्यन्दिष्यतेस्यन्त्स्यते स्यन्देत
स्यन्दिषीष्ठ स्यन्त्सीष्ठ द्युद्भ्योलुङीतिपरस्मैपदपक्षे
ङ्नलोपः अस्यदत् अस्यन्दिष्ठ अस्यन्त अस्यन्त्साता
म् अस्यन्त्सत अस्यन्त्स्यत् अस्यन्दिष्यत अस्यन्त्स्यत अ

नुविपर्यभिनिभ्यःस्यन्दतेरप्रा णिषु८।३।८२एभ्यःपरस्याप्रा
णिकर्तृकस्यस्यन्दतेःसस्यषोवा अनुष्यन्दते अनुस्यन्दते
वाजलम् अप्राणिषुकिम् अनुस्यन्दतेहस्ती कृपूसामर्थ्ये
कृपोरोलः ८।२।१८ कृपउइतिच्छेदः कृपेरेफस्यलः कृपे
ऋकारस्यावयवयोरेफसदृशस्तस्यचलकारसदृशः स्या
त् कल्पते चलकृपे चलकृपिषे चलकृप्से इत्यादिस्यन्दि-
वत् लुटिचकृपः १।३।९३ लुटिस्यसनोश्चकृपेःपरस्मैपदंवा
तासिचकृपः ७।२।६० कृपेःपरस्यतासेःसादेरार्द्धधातु
कस्येरानतङानयोरभावे कल्प्तासि कल्पितासे कल्प्तासे
कल्प्स्यति कल्पिष्यते कल्प्स्यतेकल्पिषीष्ठ
लिङ्सिचावात्मनेपदेषु १।२।११ इक्समीपाद्धलः परौझ
लौलिङात्मनेपदपरःसिच्चेत्येतौकि तौस्तःकृप्सीष्टअ
कृपत अकल्पिष्ठ अकृप्त अकल्प्स्यत् अकल्पिष्यत
अकल्प्स्यतइतिद्युतादयः।दददाने ददते।ददे।ददाते
ददिरे ददिता ददिष्यते ददताम् अददत ददेत ददि
षीष्ट अददिष्ट अददिष्यत त्रपूषलज्जायाम् त्रपते तृ
फलभजत्रपश्च ६।४।१२२ एषामतएत्वमभ्यासलोपश्चकि
तिलिटि सेटिथलिच त्रेपे त्रपिता त्रप्ता त्रपिष्यते त्र
प्स्यते त्रपताम् अत्रपत त्रपेत त्रपिषीष्ठ त्रप्सीष्ट अत्र
पिष्ठ अत्रप्त अत्रपिष्यत अत्रप्स्यत घटचेष्टायाम् घ
टते।जघटे व्यथभयसंचलनयोः व्यथोलिटि ७।४।६८।व्यथे
रभ्यासस्यसंप्रसारणंस्याल्लिटि हलादिशेषापवादः वि
व्यथे प्रथप्रथने प्रथते पप्रथे प्रसविस्तारे प्रसते म्रदुम
र्दने।म्रदते स्खदस्खदने स्खदन विद्रावणं स्खदते क्षप

क्रपते। ञित्वरासंभ्रमे। त्वरते। टुभ्राजृटुभ्राशृटुभ्लाशृदीप्तौ। भ्राजते। फणाञ्चसप्तानाम् ६।४।१२५। फणराजृभ्राजृभ्राशृभ्लाशृस्यमुस्वनएषांवाएत्वाभ्यासलोपौस्तःकिठिलिटिसेटिथलिच। भ्रेजे वभ्राजे। वाभ्राशेतिश्यन्वा। भ्राश्यते। भ्राशते। भ्रेशे। वभ्राशे भ्लाश्यते भ्लेशे। वभ्लाशे रमक्रीडायाम्- रमते- रेमारंता जभीजृभिगात्रविनामे- रधिजभोरचि-- ७।१।६१ नुम्- जंभते- जजंभे- जृंभते- जजृंभे- इत्यात्मनेपदप्रक्रिया शिञ्-सेवायाम्- श्रयति- श्रयते- शिश्राय- शिश्रिये- श्रयितासि श्रयितासे- श्रयिष्यति- श्रयिष्यते- श्रयतु- श्रयताम्- अश्रयत्- अश्रयत- श्रयेत्- श्रयेत- श्रीयात्- श्रयिषीष्ट- अशिश्रियत्-अशिश्रियत अश्रयिष्यत्-अश्रयिष्यत भृञ्-भरणे भरति- भरते- वभार- वभ्रतुः वभ्रुः वभर्थ- वभृम- वभ्रे- वभृषे- भर्त्तासि- भर्त्तासे- भरिष्यति- भरिष्यते- भरतु- भरताम्- अभरत्- अभरत- भरेत्- भरेत- भ्रियात्- उश्च- १।२।१२। ऋवर्णात्परौझलादिलिङ्सिचावात्मनेपदपरः सिच्चेत्येतौकितौस्तः।भृषीष्ट-।भृषीयास्ताम्-।अभार्षीत्-।ह्रस्वादंगात्।८।२।२७ सिचोलोपोझलि- अभृत- अभरिष्यत्- अभरिष्यत- हृञ्हरणे- हरति- हरते जहार जह्रतुः जह्रुः जहर्थ जह्रिव जह्रिम जह्रे जह्रिषे हर्त्तासि हर्त्तासे हरिष्यति हरिष्यते धृञ्धारणे धरति धरते णीञ्प्रापणे नयति नयते डुपचष्पाके पचति पचते पपाच पेचिथ पपक्थ पेचे पक्ता पक्ष्यति पक्ष्यते भजसेवायाम् भजति

भजते भेजे भक्तासि भक्तासे भक्ष्यति भक्ष्यते भजतु भजतां अभाक्षीत् अभक्त अभक्षाताम् यजदेवपूजासङ्गतिकरणदानेषु यजति यजते लिट्यभ्यासस्योभयेषाम् ३।१।१७वच्यादीनां ग्रह्यादीनाञ्चाभ्यासस्यसंप्रसारणंस्याल्लिटि इयाज वचिस्वपियजादीनांकिति ६।१।१५ वचिस्वपोर्यजादीनांचसंप्रसारणंकिति यजिर्वपिर्वहिश्चैववसिर्व्येञ्व्येञ् इत्यपि हेञ्वदीश्वयतिश्चैवयजाद्याःस्युरिमेनव ईजतुः ईजुः इयजिथ इयष्ठ ईजे यष्टा यक्ष्यति।यक्ष्यते।यजतु यजताम् अयजत् अयजत इज्यात् यक्षीष्ठ अयाक्षीत् अयष्ठ वहप्रापणे वहति वहते उवाह ऊहतुः ऊहुः उवहिथ झषस्तथोर्धोधः ढो ढेलोपः ८।३।१३। सहिवहोरोदवर्णस्य।६।३।११२ढलोपे। उवोढ उहे वोढा वक्ष्यति वक्ष्यते वहतु वहताम् उह्यात् वक्षीष्ठ।अवाक्षीत्।अवोढां।अवाक्षुः।अवाक्षीः।अवोढम् अवोढ अवाक्षम् अवाक्ष्व अवाक्ष्म अवोढ अवक्षाताम् अवक्षत अवोढाः अवक्षाथाम् अवोढ्वं अवक्षि अवक्ष्वहि अवक्ष्महि डुवप्बीजसन्ताने बीजसन्तानंक्षेत्रेविकिरणं गर्भाधानंच।अयंछेदनेपि केशान्वपति वपते उवाप ऊपे।वप्ता वप्स्यति वप्स्यते उप्यात् वप्सीष्ठ प्रणयवाप्सीत् अवप्त।वेञ् तन्तुसन्ताने।वयति।वयते वेञोवयिः।२।४।४१।वास्याल्लिटि इकारउच्चारणार्थः।उवाय ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनांङितिच ६।१।१६ चात्किति संप्रसारणम् इतियस्यप्राप्ते।लिटिवयोयः।६।१।३८वयोयस्यसंप्रसारणं

नस्याद्विरिटि ऊयतुः ऊयुः यश्चास्यान्यतरस्यांकिति।६।१।३९। वयोयस्यवोवास्यांकितिलिटि ऊवतुःऊवुः वयस्तासावयावारयलिनित्यमिट् उवयिथ रधानिवत्वेनजित्वात् तद्धजये-ऊवे धयादेशाभावे वेञः ६।१।४० संप्रसारणंन लिटि ववौ- ववतुः ववुः वयिथ- ववाथ- ववे- ववाते ववरे वाता- ऊयात् वासीष्ट अवासीत् अवासिष्टाम् अवासिषुः व्येञ्संवरणे व्ययति- व्ययते- नव्योलिटि ६।१।४६ आत्वम्- परमपिहलादिः शेषंवाधित्वायरयसं प्रसारणं उभयेपांगृहणसामर्थ्यात् अन्यथावच्यादीनांग्रहादीनाञ्चानुवृत्त्यैवसिद्धं किन्तेनविव्याय विव्यतुः विव्युः इडत्ययत्तिव्ययतीनाम्७।२।६६अदन्तव्येञ्एभ्यस्थलोनित्य मिट् विवयिथ विव्यथुः विव्य विवाय विवय-विव्यिव विव्यिम विव्ये व्याता व्यास्यति वीयात् व्यासीष्ठ अव्यासीत् अव्यास्त ह्वेञ्स्पर्द्धायांशब्देच ह्वयति ह्वयते अभ्यस्तस्यच ६।१।३३। अभ्यस्तीभविष्यतोह्वेञः संप्रसारणं जुहाव जुहुवे ह्वाता ह्वास्यति ह्वास्यते लिपिसिचिह्वश्च ३।१।५३। च्लेरङ् आत्मनेपदेष्वन्यतरस्याम् ३।१।५४। अह्वत् अह्वताम् अह्वत अह्वास्त राजृदीप्तौ राजति राजते रराज रेजतुः रेजुः रराजुः रेजे रराजे हिक्क अव्यक्तेशब्दे हिक्कति हिक्कते अञ्चु गतीयाचनेच अञ्चति अञ्चते अचइत्यके अचोत्यप रे टुयाचृयाचञायाम् याचति याचते बुधिर् बोधने बोधति बोधते अबुधत् अबोधीत् अबोधिष्ठ रवनु अवदारणे खनति खनते चखान चख्नतुः चख्नुः चख्ने

खायात् खन्यात् चीवृ आदानसंवरणयोः चीवति चीवते चायृ पूजानिशामनयोः चायति चायते व्यय गतौ व्ययति व्ययते दाशृ दाने दाशति दाशते भेषृ भये गतावित्ये के भेषति भेषते अस गतिदीप्त्यादानेषु असति असते आस आसे अयं षान्तोऽपि स्पश बाधनस्पर्शनयोः स्पर्शनं ग्रथनं स्पशति स्पशते लष कान्तौ लष्यति लषति लषते लष्यते चष भक्षणे चषति चषते छष आदानसंवरणयोः छषति छषते दासृ दाने दासति दासते धावु गतिशुध्योः धावति धावते इति भ्वादिः ॥ ऋतेरीयङ् ३।१।२९। स्वार्थे ऋतिः सौत्रः जुगुप्सायामितिवह्वयः कृपायाञ्चेत्येके ऋतीयते ऋतीयाञ्चक्रे आयादयेतिङ्ग्यङ्गावप क्षे शेषत्वात्परस्मैपदम् आनर्त्त आर्तिता अर्त्तिष्यती त्यादि अद भक्षणे अदिप्रभृतिभ्यः शपः २।४।७२ लुक् स्यात् अत्ति अत्तः अदन्ति अत्सि अत्थः अत्थ अद्मि अद्वः अद्मः लिट्यन्यतरस्याम् ।२।४।४०। अदो घस्लृ स्यात् जघास उपधालोपः घस्य चर्त्वं शासिवसिघसीनाञ्च ८।३।६० इण्कुभ्यामेषां सस्य षः जक्षतुः जक्षुः जघसिथ आद आदतुः आदुः आदिथ अत्ता अत्स्यति अत्तु अत्तात् अत्ताम् अदन्तु हुझल्भ्यो हेर्धिः ६।४ अद्धि अत्तात् अत्तम् अत्त अदानि अदाव अदाम अदः सर्वेषां ७।३।१०४ अदोऽपृक्तस्य सार्वधातुकस्याट् स्यात् आदत् आत्ताम् आदन् आदः आत्ताम् आत्त आदम् आद्व आद्म अद्यात् अद्याताम् अद्युः अद्यात् अद्यास्ताम् अद्यासुः लुङ्सनोर्घस्लृ २।४।३१४ अदः अघ सत्

आत्स्यत् हन हिंसागत्योः अनुदात्तोपदेशवनतितनोत्या दीनामनुनासिकलोपोझलिक्ङिति ६।४।३७ अनुनासिका न्तानामेषांलोपः यमिरमिनमिगमिहनिमन्यतयोनुदात्तोपदेशाः तनुक्षणुक्षिणुऋणुतृणुघृणु वनुमनुतनोत्यादयः हतः घ्नन्ति हंसि हथः हथ हन्मि- हन्वः हन्मः वमोर्वा ८।४।२३ उपसर्गस्थान्निमित्तात्परस्य हन्तेर्नस्यणः प्रहण्मि- प्रहन्मि- प्रहण्वः प्रहन्वः प्रहण्मः प्रहन्मः जघान- जघ्नतुः जघ्नुः अभ्यासाच्च ७।३।५५। हन्तेर्हस्य कुत्वं स्यात् जघनिथ- जघन्थ- जघ्नथुः जघ्न जघान जघन- जघ्निव- जघ्निम- हन्ता हनिष्यति- हन्तु- हतात् हताम्- घ्नन्तु हन्तेर्जः ६।४।३६। हौ असिद्धवदत्राभात्- ६।४।२२। इतऊर्द्धमापादपरिसमाप्तेराभीयंसमानाश्रयेतस्मिन्कर्त्तव्येतदसिद्धं स्यात्। इतिजस्यासिद्धत्वान्नहेर्लुक्। जहि। हतात्। हतम्। हत। हनानि हनाव। हनाम। अहन्। अहताम्। अघ्नन्। अहन्। अहतम् अहत अहनम् अहन्व अहन्म हन्यात् आर्द्धधा २।४।३५ तुकइत्यधिकृत्य हनोवधलिङि २।४।४२ लुङिच २।४।४३ वध्यात् वध्यास्ताम् अवधीत् अहनिष्यत् युमिश्रणामिश्रणयोः उतोवृद्धिर्लुकिहलि ७।३।८९ लुकिवि षयेउतोवृद्धिःस्यात्पितिहलादौसार्वधातुकेनत्वभ्यस्तस्य यौति युतः युवन्ति- यौसि- युथः युथ- यौमि युवः युमः युयाव- युयुवतुः युयुवुः युयविथ युयुवथुः युयुव युयाव युयव- युयुविव- युयुविम- यविता यविष्यति- यौतु- युतात् अयौत् अयुताम् अयुवन्- युया

त् इहवृध्दिर्न भाष्यंपिच्चङिन्नङिच्चवपिन्नतिव्याख्या नात् युताम् यूयुः यूयात्- यूयास्ताम् यूयासुः अयावी त् अयविष्यत् याप्रापणे- याति यातः यान्ति- ययौ याता- यास्यति- यातु अयात् अयाताम् लङःशाकटा यनस्यैव ३।४।१११आदन्ताल्लङोजेर्जुस्वा।अयुः।अयान् यायात् अयाताम् यायुःयायात्- यायास्तां । यायासुः अयासीत् अयास्पत् । एवंवागतिगन्धनयोः भादीप्तौ। स्नाशौचे-वान्परस्पसंयोगादेरित्येत्वम् स्ने यात् । स्ना यात्। श्रापाके। द्राकुत्सायांगतौ ॥ प्साभक्षणे । पा रक्षण रादाने । लाआदाने । दाप्लवने । ख्याप्रकथने- अयंसार्वधातुकएवप्रयोक्तव्यः । विदज्ञाने- । विदोल- टोवा३।४।८३वेत्तेर्लटःपरस्मैपदानांणलादयोवा।वेद विद तुः । विदुः । वेत्थ- विदथुः विद- । वेद विद्व विद्म पक्षे वेत्ति वित्तः विदन्ति उषविदजागृभ्योन्यतरस्याम् एभ्योलिड्वांवा विदेरदन्तत्वप्रतिज्ञानादाम्निगुणः । विदाञ्चकार- विवेद । वेदिता वेदिष्यति । वि- दांकुर्वन्त्वित्यन्यतरस्याम् ३।१।४१वेत्तेर्लोड्यांगुणाभावो लो टोलुक्लोडंतकरोत्यनुप्रयोगश्चवानिपात्यते। पुरुषवच- नेनविवक्षिते तनादिकृञ्भ्यउः ३।१।७९शपोपवादः वि- दांकरोतु अतउत्सार्वधातुके६।४।११०उप्रत्पयान्तकृञो॥ तउत्सार्वधातुकेक्ङिति । विदांकुरुतात्।विदांकुरुताम्. विदांकुर्वन्तु । विदांकुरु । विदांकरवाणि ॥ वेत्तु-अ- वेत् अवित्ताम् ।अविदुःदश्च८।२।७५धातोःपदान्तस्पदस्प सिपिरुर्वा अवेः अवेत् अवेत् विद्यात् विद्याताम्

विद्युः । विद्यात् । विद्यास्तां । विद्यासुः । अवेदिष्यत् । असभुवि । अस्ति । असोरल्लोपः ६ ४ १११ ॥ असा स्तेश्चातोलोपःसार्वधातुकेक्ङिति । स्तः । सन्ति असि । स्थः । स्थ । अस्मि । स्वः । स्मः । अस्तेर्भूः आर्द्धधातुके । बभूव । भविता । भविष्यति । अस्तुस्तात् । स्ताम् सन्तु । घ्वसोरेद्धावभ्यासलोपश्च ६ ४ ११९ ॥ घोरस्तेश्चैत्वंहौ अभ्यासलोपश्च । आभीयत्वाद्धेर्धिः । एधि स्तात् स्तम् स्त असानि असाव असाम आसीत् आस्तां आसन् । स्यात् स्यातां स्युः । भूयात् अभूत् अभविष्यत् ॥ उपसर्ग प्रादुर्भ्यामस्तिर्यच्परः ८ ३ ८७ ॥ उपसर्गेणः प्रादुपश्च परस्यास्तेःसस्यषोयकारेचिचपरे निष्यात् प्रादुःष्यात् । निषन्ति प्रादुःषन्ति, यच्परेकिम् । अभिस्तः । रुशब्दे ॥ तुरुस्तुशम्यमःसार्वधातुके ७ ३ ९५ ॥ एभ्यः सार्वधा तुकस्यहलादेस्तिङईड्वा, नाभ्यस्तस्येत्यतोनुवृत्तिसम्भवेपु नःसार्वधातुकग्रहणमपिदर्थम् । रवीति रौति रुवीतः रुतः हलादेः किम् रुवन्ति तिङःकिम् । शाम्यति सार्व धातुकेकिम् । आशिषि रूयात् विध्यादौतु रुयात् रुवी यात् अरावीत् अरविष्यत् । तुइतिसौत्रोधातुः । गतिवृ द्धिहिंसासु तवीति तौति तुवीतः तुतः तुवन्ति तुताव तोता तोष्यति णुस्तुतौ नौति नुनाव नविता टुक्षुशब्दे क्षौति चुक्षाव क्षविता । क्ष्णुतेजने क्ष्णौति क्ष्णविता अक्ष्णावीत् ष्णुप्रस्रवणे स्नौति सुष्णाव स्नविता । षुप्र सवैश्वर्ययोः प्रसवोऽभ्यनुज्ञानं सौति सुतः सुषाव सोता असौषीत् कुशब्दे । कौति चुकाव कोता । इण्गतौ एति

इतः ॥ इणोयण् ६ ४ ८१ ॥ अजादौप्रत्यये इयङोपवा
दः यन्ति ॥ अभ्यासस्यासवर्णे ६ ४ ७८ ॥ अभ्यासस्येव
र्णोवर्णयोरियङुवङौस्तोऽसवर्णेचि। इयाय ॥ दीर्घइणः
किति ७ ४ ६९ ॥ इणोभ्यासस्यदीर्घः कितिलिटि। ईय
तुः ईयुः इययिथ इयेथ एता एष्यति एतु ऐत् ऐताम्
आयन्। इयात्। ईयात् ॥ एतेर्लिङि ३ ४ २४ ॥ उप
सर्गात्परस्यइणोणोह्रस्वः स्यादार्द्धधातुकेकितिलिङि नि
रियात् उभयतआश्रयणेनांतादिवत् ॥ अंतादिवच्च ६
१ ८५ ॥ योयमेकादेशः सपूर्वस्यांतवत्परस्यादिवत्स्यात्
अभीयात्। अणः किम् समेयात् ॥ इणोगालुङि २ ४
५१ ॥ गातिस्थेतिसिचोलुक् अगात् अगातां अगुः ऐष्य
त् इक्स्मरणे अयमधिपूर्वएव अधीगर्थदयेशाङ्कर्मणीति
लिङ्गात् इणवदिकइतिवक्तव्यम् अधियन्ति अध्यगात्
केचित्त्वार्द्धधातुकाधिकारोक्तस्यैवातिदेशमाहुः। तन्म
तेयणन तथाचभट्टिः ससीतयोराघवयोरधीयन्निति। वी
गतिव्याप्तिप्रजनकान्त्यसनखादनेषु प्रजनोगर्भग्रहणम्
असनंक्षेपणम् वेति वीतः वियन्ति वेषि वीहि अवेत्
अवीताम् अवियन् अटिसतिअनेकाच्त्वाद्यणितिकेचि
त् अव्यन् अत्रईकारोपिधात्वंतरम्प्राश्लिष्यते एति ईतः
इयन्ति ईयात् ऐषीत् वचपरिभाषणे वक्ति वक्तः।
अयमन्तिपरोनप्रयुज्यते। वहुवचनपरइत्यन्ये झिपर
इत्यपरे वक्तु वग्धि वच्यात् उच्यात् अस्यातिवक्तिख्या
तिभ्योङ् ३ ५२ ॥ चुः ॥ वचउम् ७ ४ २० ॥ अङि
अवोचत् अवक्ष्यत् मृजूशुद्धौ ॥ मृजेर्वृद्धिः ७ २ ११४ ॥

इकोधातुप्रत्ययेपरे मार्ष्टि मृष्टः क्ङित्यजादौवेष्यते मृज न्ति-मार्जन्ति-ममार्ज-ममृजतुः ममार्जिथ ममार्ष्ठ मा र्जिता-मार्ष्टा मार्ष्टु मृड्ढि अमार्ट् अमार्ड् अमार्जीत् अमार्क्ष्यत् अमार्जिष्यत् रुदिर्अश्रुविमोचने ॥ रुदादि भ्यःसार्वधातुके ७.२.७६ ॥ रुद्स्वप्श्वस्अन्जक्ष्एभ्योव लादेःसार्वधातुकस्येट् रोदिति रुदितःहौपरत्वादिटिघि त्वन- रुदिहि ॥ रुदश्चपञ्चभ्यः १.३.९७ ॥ हलादेःपितः सा र्वधातुकस्यापृक्तस्यईट् ॥ अड्गार्ग्यगालवयोः ७.३ ९९ ॥ अरोदीत् अरोदत् अरुदितां अरुदन् अरोदीः अरो दः । प्रकृतिप्रत्ययविशेषापेक्षाभ्यामडीड्भ्यामन्तरङ्गत्वा द्यासुट् असिद्धंवहिरंगमंतरंगे रुद्यात् अरुदत् अरोदी त् अरोदिष्यत् जिष्वप्शये स्वपिति स्वपितः सुष्वाप सु षुपतुः सुष्वपिथ सुष्वप्थ ॥ सुविनिर्दुर्भ्यःसुपिसूतिसमाः ८.३.८८ ॥ एभ्यःसुप्यादेःसस्यषः किति लिटि परत्वा त्सम्प्रसारणेषत्वेचकृते द्वित्वम् पूर्वत्रासिद्धीयमद्विवचने सुषुपुपतुः सुषुपुः अकितितुद्वित्वेभ्यासस्यसम्प्रसारण म् षत्वस्यासिद्धत्वात् ततःपूर्वहलादिःशेषः । नित्यत्वाच्च ततःसुपिरूपाभावान्नषः सुसुष्वाप स्वप्ता अस्वपीत् अ स्वपत् स्वप्यात् सुप्यात् सुषुप्यात् अस्वप्स्यत् श्वसप्रा णने श्वसिति श्वसितः शश्वास श्वसिता श्वसिष्यति श्व सितु । अश्वसीत् ॥ अश्वसितां । अश्वसत् । श्वस्यात् ह्म्यन्तेतिवृद्धिर्न । अश्वसीत् । अनच । अनिति ॥ आन । अनिता । आनीत् । आनत् ॥ अनितेः ८.४ १९ ॥ उपसर्गस्थान्निमित्तात्परस्यानितेर्नस्यणः । प्राणिति ॥

जक्षभक्षहसनयोः । जक्षिति । जक्षितः ॥ अदभ्यस्ता
त् ७ १ ४ ॥ झस्य । अन्तापवादः । जक्षति । अज
क्षीत् । अजक्षत् । अजक्षिताम् ॥ सिजभ्यस्तेतिजुस् ॥
अजक्षुः ॥ जागृनिद्राक्षये । जागर्ति । जागृतः । जा
ग्रति । जागराञ्चकार । जजागार ॥ जाग्रोविचिण्णल्
ङित्सु ७ ३ ८५ ॥ जागर्तेर्गुणःस्याद्विचिण्णल्ङिद्भ्रोन्य
स्मिन्वृद्धिविषयेप्रतिषेधविषयेच । जजागरतुः । जजा
गरुः । जागरिता ॥ अजागः । अजागृतां ॥ जुसिच
७ ३ ८३ ॥ अजादौजुसिइगन्ताङ्गस्यगुणः ॥ अजाग
रुः । अजादौकिम् । जागृयुः । आशिषितु ॥ जागर्यात् ।
जागर्यास्ताम् । जागर्यासुः । अजागरीत् ॥ दरिद्रादु
र्गतौ । दरिद्राति ॥ इद्दरिद्रस्य ६ ४ ११४ ॥ हला
दौक्ङितिसार्वधातुके । दरिद्रितः ॥ श्नाभ्यस्तयोरातः
६ ४ ११२ ॥ लोपःक्ङितिसार्वधातुके । दरिद्रति ।
अनेकाचत्त्वादाम् ॥ दरिद्राञ्चकार ॥ आतऔणलइत्य
त्रओइत्येवासिद्धेऔविधानंदरिद्रातेरालोपेकृतेश्रवणार्थ
म् ॥ अतएवज्ञापकात्आनेत्येके । ददरिद्रौ ॥ दरिद्रा
तेरार्द्धधातुकेविवक्षितेआलोपोवाच्यः ॥ लुङिवा ॥ स
निण्वुलिल्युटिचन । दरिद्रिता । अदरिद्रात् ॥ अदरि
द्रितां । अदरिद्रुः । दरिद्रियात् । दरिद्र्यात् । अदरि
द्रीत् । इट्सकौ । अदरिद्रासीत् ॥ चकासृदीप्तौ ॥ चका
स्ति । चकास्तः । चकासति । चकास्सि । चकासाञ्च
कार । चकासिता । चकास्तु । चकाधि ॥ तिप्यन
स्तेः ८ ३ ७३ ॥ पदान्तस्यसस्यदः । अचकात् । अ

चकास्ता । अचकासुः ॥ सिपिधातोरुर्वा ८ ३ ७४ ॥ पदांतस्यसस्य ॥ पक्षेदः । अचकाः । अचकात् । शासुअनुशिष्टौ ॥ शास्ति ॥ शासइदङ्हलोः ६ ४ ३४ ॥ शासउपधायाइत्स्यादङिहलादौक्ङितिच ॥ शिष्टः । शासति । शशास । शशासतुः । शास्तु । शिष्टात् ॥ शिष्टाम् ॥ शासतु ॥ शाहौ ६ ४ ३५ ॥ शास्तेः । तस्याभीयत्वेनासिद्धत्वाद्धेर्धिः ॥ शाधि । अशात् । अशिष्टाम् । अशासुः । अशाः । अशात् । शिष्यात् ॥ सर्त्तिशास्त्यर्त्तिभ्यश्च ३ १ ५६ ॥ एभ्यश्च्लेरङ्कर्त्तृलुङि । अशिषत् । अशासिष्यत् ॥ इतिपरस्मैपदम् ॥

शीङ्स्वप्ने ॥ शीङःसार्वधातुकेगुणः ७ ४ २१ ॥ शेते । शयाते ॥ शीङोरुट् ७ १ ६ ॥ झादेशस्यातः ॥ शेरते । शेषे । शयाथे । शेध्वे ॥ शये । शेवहे ॥ शेमहे ॥ शिश्ये । शयिता । शयिषीष्ट । अशयिष्ट । अशयिष्यत ॥ इङ्अध्ययने ॥ इङिकावध्युपसर्गतोनव्यभिचरतः । अधीते । अधीयाते । अधीयते ॥ गाङ्लिटि २ ४ ४९ ॥ इङः ॥ अधिजगे । अध्येता ॥ अध्येष्यते । अधीताम् । अधीष्व । अधीयाथां । अधीध्वम् । अध्ययै । अध्ययावहै । अध्ययामहै । अध्यैत । अध्यैयातां । अध्यैयत ॥ अध्यैथाः । अध्यैयाथां । अध्यैध्वम् । अध्यैयि । अध्यैवहि । अध्यैमहि । अधीयीत । अधीयीयातां । अधीयीरन् । अध्येषीष्ट ॥ विभाषालुङ्लृङोः २ ४ ५० ॥ इङोगाङ् ॥ गाङ्कुटादिभ्योऽञ्णिन्ङित् १ २ १ ॥ गाङादेशात्कुटादिभ्यश्च

ङिगतःप्रत्ययाङितःस्युः ॥ घुमास्थागापाजहातिसांह लि ६ ४ ६६ ॥ एषामातईत्स्याद्धलादौक्ङित्यार्द्धधातुके। अध्यगीष्ट। अध्यैष्ट। अध्यगीष्यत॥ ईरगतौ कंपनेच। ईर्त्ते॥ ईराञ्चक्रे। ईरिता। ईरिष्यते। ईर्ताम्। ईर्ष्व। ईर्ध्वम्॥ ऐरिष्ट॥ ईडस्तुतौ। ईट्टे॥ ईशःसे ७ २ ७७॥ ईडजनोर्ध्वेच ७ २ ७८॥ ईशीड्जनांसेध्वेशब्दयोःसार्वधातुकयोरिट्स्यात्॥ योगविभागोवैचित्र्यार्थः। ईडिषे॥ ईडिध्वे॥ एकदेशविकृतस्यानन्यत्वादीडिष्व। ईडिध्वम्॥ विकृतिग्रहणेनप्रकृतेरग्रहणात्॥ ऐड्ढ्वम्॥ ईशऐश्वर्य्ये। ईशिषे। ईशिध्वे॥ आसउपवेसने॥ आस्ते। दयायासश्चेत्याम्॥ आसाञ्चक्रे। आस्व॥ आध्वम्। आसिष्ट॥ आङ्शासुइच्छायाम्। आशास्ते॥ आशासाते॥ वसआच्छादने। वस्ते। वस्से। वध्वे। ववसे। वसिता॥ णिसिचुंबने। निंस्ते। णिजिशुद्धौ। निङ्क्ते। निङ्क्षे। निंजिता॥ वृजीवर्जने॥ वृक्ते। वृजाते॥ इदिदित्यन्ये॥ वृङ्क्ते। पृचीसंपर्चने॥ पृक्ते॥ षूङ्प्राणिगर्भविमोचने सूते। सुषुवे। सुषुविषे। सोता॥ सविता। सुवै॥ सविषीष्ट। असविष्ट। असोष्ट॥ चक्षिङ्व्यक्तायांवाचि। अयंदर्शनेपि। इकारोनुदात्तः॥ नुंतुनअन्त्यइदिदितिव्याख्यानात्। चष्टे। चक्षाते॥ आर्द्धधातुके॥ चक्षिङःख्याञ् २ ४ ५४॥ वालिटि २ ४ ५५॥ अत्रभाष्येख्शादिरयमादेशः। असिद्धकाण्डेशस्ययोवेतिस्थितम्। जित्वात्पदद्वय। चख्यौ। चख्ये। चक्शौ।

चक्शे। चचक्षे। ख्याता। क्शाता। ख्यास्यति। ख्यास्यते। क्शास्यति। क्शास्यते। चष्टाम्। अचष्ट। चक्षीत। ख्यायात्। ख्येयात्। क्शायात्। क्शेयात्। अस्यतिवक्तीत्यङ्। अख्यत्। अख्यत। अक्शासीत्। अक्शास्त॥ वर्जनेक्शाञ्नेष्टः। समचक्षिष्टेत्यादि द्विषअप्रीतौ। द्वेष्टि। द्विष्टे। द्विक्षन्ति। द्विड्ढि। द्वेषै। अद्वेट्॥ द्विषश्च ३ ४ ११२॥ लङोभ्झेर्जुस्वा। अद्विषुः। अद्विषन्॥ अद्विक्षत्॥ दुहप्रपूरणे। दादेर्धातोर्घइतिहस्यघः। दोग्धि। दुग्धः। दुहन्ति॥ धोक्षि॥ दुग्धे। दुहाते। दुहते। धुक्षे। दुहाथे। धुग्ध्वे। दुदुहे। दुदुहे। दुदोह। दुदुहे। दोग्धा। धोक्ष्यति। धोक्ष्यते। दोग्धु। दुग्धात्। दुग्धाम्। दुहंतु दुग्धि। दुग्धात्। दुग्धं। दुग्ध। दोहानि। दुग्धां। दुहातां। दुहतां। धुक्ष्व। दुहाथां। धुग्ध्वम्। दोहावहै॥ दोहामहै। अधोक्। अदुग्धां। अदुहन्। अदोहम्। अदुग्ध। अदुहातां। अदुहत। अधुग्ध्वं। दुह्यात्। दुहीत। धुक्षीष्ट। अधुक्षत्॥ लुग्वादुहदिहलिहगुहामात्मनेपदेदन्त्ये ७ ३ ७३॥ एषांक्सस्यलुग्वादन्त्येतङि। अधुक्षत। अदुग्ध॥ क्सस्याचि ७ ३ ७२॥ अजादौतङिक्सस्यलोपः। अधुक्षातां। अधुक्षन्त। अधुक्षथाः। अधुग्धाः। अधुक्षातां। अधुक्षध्वं। अधुग्ध्वम्। अधुक्षि। अधुक्षावहि। अदुह्वहि। अधुक्षामहि। अधोक्ष्यत्। अधोक्ष्यत॥ एवं दिह उपचये॥ उपचयोवृद्धिः। लिहआस्वादने। लेढि।

लीढः । लिहन्ति । लेक्षि । लीढे । लीहाते । लिहते । लिक्ष । लिहाथे । लीढ्वे । लेढु । लीढात् । लीढां । लिहन्तु । लीढि । लेहानि । लीढां । अलेट् । अलीढां । ब्रूञ्व्यक्तायांवाचि ॥ ब्रुवःपंचानामादितआहोब्रुवः ३ ४ ८४ ॥ ब्रुवोलटस्तिवादीनांपञ्चानांणलादयःपञ्च वास्युर्ब्रुवश्चाहादेशः । आह । आहतुः । आहुः ॥ आ हस्थः ८ २ ३५ ॥ झलि । चर्त्वं । आत्थ । आहथुः ॥ ब्रुवईट् ७ ३ ९३ ॥ ब्रुवोहलादेःपितईट् ॥ ब्रवीति । ब्रूतः । ब्रुवन्ति । ब्रूते । ब्रुवाते । ब्रुवते ॥ ब्रुवोवचिः २ ४ ५३ ॥ आर्द्धधातुके । उवाच । ऊचतुः । ऊचुः उवचिथ । उवक्थ । ऊचे । वक्ता । वक्ष्यति । वक्ष्य ते । ब्रवीतु । ब्रूतात् । ब्रूतां । ब्रूहि । ब्रवाणि । ब्रूतां । ब्रवै । अब्रवीत् । अब्रूत । ब्रूयात् । ब्रुवीत । उच्यात् । वक्षिष्ट । अवोचत् । अवोचत । अवक्ष्यत् ॥ चर्करीतञ्च ॥ चर्करीतमितियङ्लुगन्तंतददादौबोध्यम् ऊर्णुञ्आच्छादने । ऊर्णोतेर्विभाषा ७ ३ ९० ॥ वृद्धि र्वाहलादौपितिसार्वधातुके । ऊर्णौति । ऊर्णोति । ऊ र्णुतः । ऊर्णुवन्ति । ऊर्णुते । ऊर्णुवाते । ऊर्णुवते । ऊ र्णोतेराम्नेतिवाच्यम् ॥ नन्द्राःसंयोगादयः ६ १ ३ ॥ अचःपराःसंयोगादयोनदरार्द्विर्नभवन्ति । नुशब्दस्यद्वि त्वं । ऊर्णुनाव । ऊर्णुनुवतुः । ऊर्णुनुवुः ॥ विभाषोर्णोः १ २ ३ इडादिप्रत्ययोङिद्वत् । ऊर्णुनुविथ । ऊर्णुनविथ । ऊर्णुविता ऊर्णविता । ऊर्णौतु । ऊर्णवानि । ऊर्णवै ॥ गुणोपृक्ते १ ३ ९१ ॥ ऊर्णोतेर्गुणोपृक्तेहलादौपितिसा

र्वधातुके। और्णोत्। और्णोः। और्णुतं। ऊर्णुयात्। ऊर्णु
याताम्। ऊर्णुयात्। ऊर्णुयास्ताम्। ऊर्णविषीष्ट। ऊ
र्णुविषीष्ट। और्णुवीत्॥ ऊर्णोतेर्विभाषा ७२६॥ इडादौ
परस्मैपदेसिचिवृद्धिः। पक्षेगुणः। और्णावीत्। और्णा
विष्टां। और्णवीत्। और्णविष्टां। इत्यदादयः॥ हुदाना
दनयोः। जुहोत्यादिभ्यःश्लुः २४७५॥ शपः॥ श्लौ ६१
१०॥ धातोर्द्वित्वं। जुहोति। जुहुतः॥ हुश्नुवोरितियण्।
जुह्वति॥ भीह्रीभृहुवांश्लुवच्च ३ १ ३९॥ एभ्योलिट्यां
वास्यादामिश्लाविवकार्यंच॥ जुहवांचकार। जुहाव।
होता। होष्यति। जुहोतु। जुहुतात्। जुहुतां। जुह्व
तु। जुहुधि। जुहवानि। अजुहोत्॥ अजुहुतां। अजु
हवुः। जुहुयात्। हूयात्। अहौषीत्। अहोष्यत्॥
ञिभीभये। बिभेति॥ भियोन्यतरस्याम् ६ ४ ११५
इद्वास्याद्धलादौसार्वधातुकेक्ङिति। बिभितः। बिभीतः
बिभ्यति। बिभयाञ्चकार। बिभाय। भेता। भेष्यति
बिभेतु। बिभीतात्। बिभितात्। अबिभेत्। बिभिया
त्। भीयात्। अभैषित्। अभेष्यत्। ह्रीलज्जायां। जिह्रे
ति। जिह्रीतः। जिह्रियति। जिह्रयाञ्चकार। जिह्राय।
ह्रेता। ह्रेष्यति। जिह्रेतु। अजिह्रेत्। जिह्रीयात्।
ह्रीयात् अह्रैषीत्। अह्रेष्यत्॥ पृपालनपूरणयोः॥
अर्तिपिपर्त्योश्च ७ ४ ७७॥ अभ्यासस्यइत्स्यात्
श्लौ। पिपर्त्ति॥ उदोष्ठ्यपूर्वस्य ७ १ १०२॥ अंगा
वयवोष्ठ्यपूर्वोयऋृृदन्तस्यांगस्यउः॥ हलिच ८ २
७७॥ रेफवान्तस्यधातोरुपधायाइकोदीर्घोहलि। पि

पूर्त्तः। पिपुरति। पपार। शृदॄप्रांह्रस्वोवा ७ ४ १२ किति लिटि। पप्रतुः। पप्रुः॥ ऋच्छत्यॄताम् ७ ४ ११ तौदादिकऋच्छेर्ऋधातोर्ऋतांचगुणोलिटि। पपरतुः। पपरुः॥ वृतोवा ७ २ ३८॥ वृङ्वृञ्भ्यामृदन्ताच्चेटो दीर्घोवास्यान्नतुलिटि। परिता। परीता। परिष्यति। परीष्यति। पिपर्तु। पिपुरतु। अपिपः। अपिपूर्त्तां। अपिपरुः। पिपूर्यात्। पिपूर्युः। पूर्यात्। अपारीत् सिचिचपरस्मैपदेषु ७ २ ४०॥ अत्रवृतइटोनदीर्घः। अपारिष्टां। अपारिष्यत्॥ अपरीष्यत्॥ ओहाक्त्यागे। जहाति॥ जहातेश्च ६ ४ ११६॥ इद्वास्याद्धलादौक्ङिति। जहीतः॥ ईहल्यघोः ६ ४ ११३॥ श्नाभ्यस्तयोरातईत्स्यात्सार्वधातुकेक्ङितिहलि। जहीतः। जहति। जहौ। हाता। हास्यति। जहातु। जहितात्। जहीतात्॥ आचहौ ६ ४ ११७॥ जहातेराच्चादिदीतौस्तः। जहाहि। जहिहि। जहीहि। अजहात्। अजहुः॥ लोपोयि ६ ४ ११९॥ जहातेरालोपोयादौसार्वधातुके। जह्यात्। एर्लिङीतिएत्वं। हेयात्। अहासीत्। अहास्यत्। ऋगतौ। इयर्ति। इयृतः। इय्रति। आर। आरतुः। आरुः॥ इडत्त्यर्तीतिनित्यमिट्॥ आरिथ। अर्त्ता। अरिष्यति। इयर्त्तु। इयराणि। ऐयः। ऐयृतां। ऐयरुः। इयृयात्। अर्यात्। आरत्॥ आरिष्यत्॥ माङ्मानेशब्देच॥ भृञामित् ७ ४ ७५॥ भृञ्माङ्ओहाङ्एषामभ्यासस्येत्स्यात्श्लौ॥ मिमीते॥ मिमाते। श्नाभ्यस्तयोरा

तोलोपः । मिमते । ममे । माता । मास्यते । मिमी तां । अमिमीत । मिमीत । मासीष्ट । अमास्त । अमास्यत ॥ ओहाङ्गतौ । जिहीते । जिहाते । जिहते । जहे । हाता । हास्यते । जिहीतां । अजिहीत । जि हीत । हासीष्ट । अहास्त । अहास्यत ॥ डुभृञ्धारण पोषणयोः । बिभर्त्ति ॥ बिभृतः । बिभ्रति । बिभृते । बिभ्राते । बिभ्रते । बिभरांचकार । बभार । बभर्थ । बभृव । बिभरांचक्रे ॥ बभ्रे । भर्त्ता । भरिष्यति । भ रिष्यते । बिभर्त्तु । बिभराणि । बिभृतां । अबिभः ॥ अबिभरुः । अबिभृत । बिभृयात् । बिभ्रीत । भ्रिया त् । भृषीष्ट । अभार्षीत् । अभृत । अभरिष्यत् । अ भरिष्यत ॥ डुदाञ्दाने ॥ ददाति । दत्तः । ददति । दत्ते । ददाते । ददते । ददौ । ददे । दाता ॥ दास्य ति । दास्यते । ददातु । देहि । दत्तां । अददात् ॥ अदत्त । दद्यात् । ददीत । देयात् । दासीष्ट । अदा त् । अदातां । अदुः ॥ स्थाघ्वोरिच्च । १ २ १७ ॥ अनयोरिदन्तादेशःसिच्चकिदात्मनेपदेषु ॥ अदित । अदास्यत् । अदास्यत ॥ डुधाञ्धारणपोषणयोः ॥ द धस्तथोश्च ८ २ ३८ ॥ द्विरुक्तस्यझषंतस्यधाञोवशो भष्तथयोःस्ध्वोश्चपरतः । धत्तः । दधति । दधासि । धत्थः ॥ धत्ते । धत्से । धध्वे । धेहि ॥ णिजिर्शौच पोषणयोः ॥ निजांत्रयाणांगुणःश्लौ ७ ४ ७५ ॥ निज् विज्विषामभ्यासगुणःस्याच्छ्लौ ॥ नेनेक्ति ॥ निनेक्तः ॥ नेनिजति । नेनिक्ते । निनेज । निनिजे । नेक्ता ॥ ने

क्ष्यति । नेक्ष्यते । नेनेक्तु । नेनिग्धि ॥ नाभ्यस्तस्या चिपितिसार्वधातुके ७ ३ ८७ ॥ लघूपधगुणोन ॥ नेनिजानि । नेनिक्तां । अनेनेक् । अनेनिक्तां ॥ अनेनिजुः । अनेनिज । अनेनिक्त ॥ नेनिज्यात् । नेनिजीत । निज्यात् । निक्षीष्ट । अनिजत् । अनैक्षीत् । अनिक्त । अनेक्ष्यत् । अनेक्ष्यत ॥ एवंविजिरपृथग्भावे । विषॢव्याप्तौ ॥ इतिजुहोत्यादिः ॥ दिवुक्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकांतिगतिषु ॥ दिवादिभ्यःश्यन् ३ १ ६९ ॥ कर्त्तरिसार्वधातुके ॥ शपोपवादः ॥ हलिचेतिदीर्घः ॥ दीव्यति । दिदेव । देविता । देविष्यति । दीव्यतु । अदीव्यत् । दीव्येत् । दीव्यात् । अदेवीत् । अदेविष्यत् । एवंषिवुतंतुसंताने ॥ सिवादीनांवाड्व्यवायेपि ९ ३ ७१ ॥ परिनिविभ्यःपरेषां मेषां सस्यषः । पर्यषीव्यत् । पर्यसीव्यत् ॥ नृतीगात्रविक्षेपे । नृत्यति । ननर्त्त । नर्त्तिता ॥ सेसिचिकृतचृतछृदतृदनृतः ७ २ ५७ ॥ एभ्यःसिजिभिन्नस्यसादेरार्द्धधातुकस्येड्वा ॥ नर्त्तिष्यति । नर्त्स्यति । नृत्यात् । अनर्त्तीत् ॥ त्रसी उद्वेगे ॥ वाभ्राशेतिश्यन्वा ॥ त्रस्यति । त्रसति । तत्रास ॥ वाजृभ्रमुत्रसाम् ६ ४ १२४ ॥ एषांकितिलिटिसेटि थलिचएत्वाभ्यासलोपौवा ॥ त्रेसतुः । तत्रसतुः । त्रेसिथ । तत्रसिथ । त्रसिता ॥ शोतनूकरणे ॥ ओतःश्यनि ७ ३ ७१ ॥ लोपः ॥ श्यति । श्यतः । श्यन्ति । शशौ । शशतुः । शशुः । शाता । शास्यति । अशात् । अशातां । इट्सकौ । अशासीत् । अशाशिष्टां ॥ छो

छेदने। छ्यति। षोऽन्तकर्मणि। स्यति। ससौ। सेयात् दोऽअवखण्डने। द्यति। ददौ। देयात्। अदात्॥ व्यधताडने॥ विध्यति। विव्याध। विविधतुः। विव्यद्ध। विव्यधिथ॥ व्यद्धा। व्यत्स्यति। विध्येत्। विध्यात्। अव्यात्सीत्॥ पुषपुष्टौ॥ पुष्यति। पुपोष। पुपोषिथ। पोष्टा॥ पोक्ष्यति॥ पुषादीत्यङ्॥ आपरस्मैपदात्। अपुषत्॥ शुषशोषणे॥ शुष्यति। शुशोष। अशुषत्॥ णशअदर्शने। नश्यति। ननाश। नेशतुः॥ रधादिभ्यश्च ७ २ ४५॥ रधूनशूतृपूदृपूद्रुहूमुहूष्णुहूष्णिहूएभ्योवलाद्यार्द्धधातुकस्यवेट्। नेशिथ॥ मस्जिनशोर्झलि ७ ५ ६०॥ ननंष्ठ। नेशिव। नेश्व। नशिता। नंष्टा। नशिस्यति। नङ्क्ष्यति। नश्येत्। नश्यात्। अनशत्। प्रणश्यति॥ नशेःषांतस्य ८ ४ ३६॥ णत्वंन। प्रनंष्टा॥ अंतग्रहणंभूतपूर्वप्रतिपत्त्यर्थं। प्रनंक्ष्यति॥ रधहिंसासंराध्योः॥ रधिजभोरचि ७ १ ६१॥ नुम्। ररन्ध। ररन्धतुः। ररन्धिथ। ररद्ध। ररन्धिव। रेध्व॥ नेट्यलिटिरधेः ७ १ ६२॥ लिड्वर्जेइटिरधेर्नुम्न। रधिता। रद्धा। रधिष्यति॥ रत्स्यति॥ अङिनुम्॥ अनिदितामितिनलोपः॥ अरधत्। तृपप्रीणने॥ तृप्यति। ततर्प। ततर्पिथ। ततर्पिथ तर्पिता। तर्प्ता॥ त्रप्ता॥ स्पृशमृशकृषतृपदृपांच्लेःसिज्वाच्यः॥ अतर्पीत्। अतार्प्सीत्। अत्राप्सीत्। अतृपत्॥ दृपहर्षमोहनयोः। दृप्यति॥ रधादित्वादिमौवेट्कावमर्थमनुदात्तता॥ द्रुहजिघांसायां॥ द्रुह्यति।

वाद्रुहेतिवाघः ॥ पक्षेढः । दुद्रोग्ध । दुद्रोढ । दुद्रोहिथ । द्रोहिता । द्रोग्धा । द्रोढा । अद्रुहत् ॥ मुहवैचित्त्ये । वैचित्यमविवेकः । मुह्यति । मुमोहिथ । मुमोग्ध ॥ मुमोढ । मोहिता । मोग्धा । मोढा । मोहिष्यति ॥ मोक्ष्यति । अमुहत् ॥ ष्णुहउद्गिरणे । स्नुह्यति । सुस्नोह । सुस्नोहिथ । सुस्नोग्ध । सुस्नोढ । सुष्णुहिव । सुष्णुहू । स्नोहिता ॥ स्नोग्धा । स्नोढा । स्नोहिष्यति । स्नोक्ष्यति ॥ अस्नुहत् ॥ ष्णिहप्रीतौ । स्निह्यति । सिस्नेह । स्नेहिता । स्नेग्धा । स्नेढा । अस्निहत् । तुषतुष्टौ । तुष्यति । दुषवैकृत्ये । दुष्यति ॥ श्लिषआलिंगने । श्लिष्यति ॥ श्लिषआलिंगने ३ १ ४६ ॥ च्लेःक्सः ॥ अश्लिक्षत्कन्यांदेवदत्तः ॥ आलिंगनेकिम् । समश्लिषज्जतुकाष्ठं । प्रत्यासत्ताविहश्लिषिः । क्रुध क्रोधे । क्रुध्यति । क्षुधबुभुक्षायां । क्षुध्यति । शुधशौचे । शुध्यति षिधुसंराद्धौ । सिध्यति ॥ शमुउपशमे ॥ शमामष्टानांदीर्घःश्यनि ७ ३ ७४ ॥ शम्तम्दम्श्रम्भ्रम्क्षम्क्लम्मदामचोदीर्घः ॥ प्रशाम्यति ॥ शेमतुः ॥ शेमुः शेमिथ । शमिता । अशमत् ॥ तमुकाङ्क्षायाम् । ताम्यति । तमिता । अतमत् । दमुउपशमे । दाम्यति । दमिता । अदमत् । श्रमुतपसिखेदेच । श्राम्यति । अश्रमत् ॥ भ्रमुअनवस्थाने ॥ वाभ्राशेतिश्यन्वा । भ्राम्यति । भ्रमति । भ्रेमतुः । बभ्रमतुः । अभ्रमत् ॥ क्षमूसहने । क्षाम्यति । चक्षमिथ । चक्षंथ । चक्षमिव । चक्षण्व । क्षमिता ॥ क्षन्ता । अयमाषत् । भ्वादिस्तु

पित् ॥ अपित:क्षाम्यति:क्षांति:क्षमूप:क्षमते:क्षमा ॥ क्र
मुक्रान्तौ ॥ ष्ठिवुक्लमुचमामितिदीर्घः ॥ क्राम्यति । क्र
मिता । अक्रमत् ॥ मदीहर्षे । माद्यति । अमदत् ॥
असुक्षेपणे । अस्यति । आस । असिता ॥ अस्यतेस्थुक्
७ ४ १७ ॥ अङि । अस्यतीत्यङ् । आस्थत् ॥ यसुप्र
यत्ने ॥ यसोऽनुपसर्गात् ३ १ ७१ ॥ संयसश्च ३ १ ७२
श्यन्वा ॥ यस्यति । यसति । संयस्यति । संयसति ॥
अनुपसर्गादिकम् । प्रयस्यति ॥ जसुमोक्षणे ॥ जस्यति
तसुउपक्षये ॥ दसुच ॥ तस्यति । अतसत् । दस्यति ।
अदसत् ॥ वसुस्तंभे ॥ वस्यति ॥ नशसददेतिनिषेधः ।
ववास । ववसतुः । वशादिरितिमतेतु । वेसतुः । वेसुः ।
व्युषविभागे । व्युष्यति । विसप्रेरणे । विस्यति । अविस
त् । वुसउत्सर्गे । वुस्यति ॥ मुसखंडने ॥ मुस्यति । मसी
परिणामे ॥ परिणामोविकारः ॥ लुठविलोडने । लुठ्य
ति ॥ उचसमवाये । उच्यति । उवोच ॥ ऊचतुः ।
ऊचुः ॥ भृशुभ्रंशुअधःपतने ॥ भृश्यति । बभर्श । अ
भृशत् । अनिदितामितिनलोपः ॥ भ्रश्यति ॥ ब
भ्रंश ॥ अभ्रशत् ॥ कृशतनूकरणे ॥ कृश्यति ॥ ञित्
पृपिपासायां । तृष्यति ॥ हृषतुष्टौ ॥ श्यन्लङौभौवादि
कात्विशेषः ॥ हृष्यति । अहृषत् ॥ रुषरिषहिंसायां ॥
तीषेतिवेट् । रोषिता ॥ रोष्टा । रेषिता ॥ रेष्टा ॥ कु
पक्रोधे । कुप्यति ॥ गुपव्याकुलत्वे ॥ लुभगार्ध्ये । गा
र्ध्यमाकांक्षा । लोभिता । लोब्धा ॥ लोभिष्यति ॥ भ्वा
देरप्यत्करणाल्लोभतीत्यप्याहुः ॥ क्षुभसंचलने । क्षुभ्यति ।

क्लिदूआर्द्रीभावे । क्लिद्यति । चिक्लेदिथ । चिक्लेत्थ । चिक्लिदिव । चिक्लिद्व । चिक्लिदिम । ञिमिदास्नेहने ॥ मिदेर्गुणः ७ ३ ८२ ॥ इक्इत्संज्ञकशकारादौप्रत्यये ॥ मेद्यति । अमिदत् । ञिक्ष्विदास्नेहनमोचनयोः । क्ष्विद्यति ॥ ऋधुवृद्धौ । ऋध्यति । आनर्ध ॥ गृधुअभिकांक्षायां ॥ गृध्यति । अगृधत् ॥ षूङ्प्राणिप्रसवे । सूयते । सुषुवे । क्रादिनियमान्नित्यमिट् ॥ सुषुविषे । सुषुविवहे सोता । सविता ॥ दूङ्परितापे । दूयते ॥ दीङ्क्षये ॥ दीङोयुडचिक्ङिति ६ ४ ६३ ॥ दीङःपरस्याजादेःक्ङितआर्द्धधातुकस्ययुट् । वुग्युटावुवङ्यणोःसिद्धौवक्तव्यौ ॥ दिदीये ॥ मीनातिमिनोतिदीङांल्यपिच ६ ५ ५० ॥ एषामात्वंल्यपिचादशित्येज्निमित्ते ॥ दाता दास्यते ॥ अदास्त ॥ डीङ्विहायसागतौ ॥ डीयते ॥ पीङ्पाने ॥ पीयते ॥ माङ्माने ॥ मायते । ममे । माता ॥ जनीप्रादुर्भावे ॥ ज्ञाजनोर्जा ७ ३ ७८ ॥ शिति । जायते ॥ गमहनजनेतिउपधायालोपः । स्तोश्चुनाश्चुः । जज्ञे । जनिता । जनिष्यते ॥ दीपजनवुधपूरीतायिप्यायिभ्योऽन्यतरस्याम् ३ १ ६१ ॥ एभ्यःच्लेश्चिण्वाएकवचनेतशब्देपरे ॥ चिणोलुक् ६ ४ १०४ ॥ चिणःपरस्यतशब्दस्यलुक् ॥ जनिवध्योश्च ७ ३ ३५ ॥ नवृद्धिश्चिणिञ्णितिकृतिच ॥ दीपीदीप्तौ ॥ दीप्यते । दिदीपे अदीपि । अदीपिष्ट । पदगतौ । पद्यते । पेदे । पत्ता । पद्येत । पत्सीष्ट ॥ चिरातेपदः ३ ५ ६० ॥ अपादि । अपत्साता ॥ अपत्सत । विदसत्तायां । विद्यते ।

वेत्ता ॥ वुधअवगमने । वुध्यते । वोद्धा ॥ एकाचोवशो भष्भषंतस्येतिभष्भावः । भोत्स्यते । भुत्सीष्ट । अवोधि । अवुद्ध । अभुत्सातां ॥ युधसंप्रहारे । युध्यते । युयुधे । योद्धा । अयुद्ध ॥ सृजविसर्गे ॥ सृज्यते । ससृजे । सृजिदृशोर्झल्यमकितीत्यमागमः ॥ स्रष्टा । स्रक्ष्यते । सृक्षीष्ट ॥ लिङ्सिचावितिकित्वम् । असृष्ट । असृक्षातां । मीङ्हिंसायां । मीयते ॥ रीङ्स्रवणे ॥ रीयते । लीङ्श्लेषणे । लीयते ॥ विभापालीयतेः । ६ । १ । ५१ ॥ लीयतेरितियकानिर्द्देशोनतुश्यना । लीलीङोरात्वंस्यादेजिवपयेल्यपिच ॥ लेता । लाता । लेष्यते । लास्यते । एजिवपयेकिं । लीयते । लिल्ये ॥ व्रीङ्वृणोत्यर्थे । व्रीयते । विव्रिये ॥ मृपतितिक्षायां । मृष्यति । मृष्यते । ममर्ष । ममर्पिथ । ममृपे । ममृपिपे । मर्पितासि । मर्पितासे ॥ णहवंधने । नह्यति । नह्यते । ननाह ॥ नहोधइतिधः । ननद्ध ॥ नेहे । नद्धा ॥ नस्यति ॥ अनात्सीत् । अनद्ध ॥ रंजरागे । रज्यति ॥ रज्यते । शपआक्रोशे । शप्यति ॥ शप्यते ॥ शकविभापितोमर्पणे ॥ विभापितइत्युभयपदीत्यर्थः ॥ शक्यति शक्यतेहरिन्द्रष्टुंभक्तः ॥ शशाक ॥ शेकिथ ॥ शशक्थ ॥ शेके ॥ शक्ता ॥ शक्ष्यति । शक्षते ॥ पुपादित्वादङ् ॥ अशकत् । अशक्त ॥ सेट्कोयमित्येके । तन्मतेनाऽनिट्केपुल्वादिस्पाठितः ॥ शकिता ॥ शकिष्यति । शकिष्यते ॥ इतिदिवादिः ॥ पुञ्अभिपवे ॥ स्वादिभ्यःश्नुः ३ । १ । ७३ ॥ कर्त्तरिसार्वधातुके ॥ शपोपवादः । सुनो

ति । सुनुतः ॥ हुश्नुवोरितियण् ॥ सुन्वंति । लोपश्चा स्येतिप्रत्ययोतोलोपः ॥ सुन्वः । सुनुवः॥ सुनुते । सुन्वा ते । सुन्वते ॥ सुनुषे ॥ सुषाव । सुषुवे ॥ सोता । सु नवानि । सुनवै । सुनुयात् ॥ स्तुसुधूञ्भ्यःपरस्मैपदेषु ७ २ ७२ ॥ सिचइट् ॥ असावित् ॥ असोष्ट । अभि षुणोति ॥ अभ्यषुणोत् ॥ सुनोतेःस्यसनोः ८ ३ ११७ सस्यषोन ॥ विसोष्यति ॥ षिञ्बंधने । विसिनोति ॥ चिञ्चयने ॥ चिनोति । चिनुते ॥ विभाषाचेः ७ ३ ५८ ॥ अभ्यासाच्चेःकुत्वंवासनिलिटिच । चिकाय । चि चाय । चिक्ये । चिच्ये । अचैषीत् । अचेष्ट ॥ स्तृञ् आच्छादने । स्तृणोति । स्तृणुते । तस्तार । तस्तरे । गुणोर्तीतिगुणः ॥ स्तर्यात् ॥ ऋतश्चसंयोगादेः ७ २ ४३ ॥ ऋदन्तात्संयोगादेर्लिङ्सिचोरिड्वातङि । स्तरि षीष्ट ॥ स्तृषीष्ट । अस्तरिष्ट । अस्तृत ॥ धुञ्कंपने ॥ धुनोति । धुनुते । दुधाव । दुधुवे । अधौषीत् ॥ अधो ष्यत् । धूञ्कंपने ॥ धूनोति । धूनुते॥ स्वरतीतिवेट् । दुधविथ । दुधोथ । किंतिलिटितु ॥ श्र्युकःकिति ७ २ ११ ॥ श्रिञएकाचउगंताच्चगित्कितोरिण्ण ॥ इति प्राप्ते ॥ क्रादिनियमान्नित्यमिट् ॥ दुधुविव । दुधुविम । अधावीत् । अधविष्ट । अधोष्ट ॥ कृञ् हिंसायां । कृणोति । कृणुते । चकार । चकर्थ । चक्रे । क्रिया त् । कृषीष्ट । अकार्षीत् । अकृत ॥ वृञ्वरणे । वृ णोति । वृणुते ॥ बभूथाततन्थजगृभ्मववर्थेतिनिगमे ७ २ ६४ ॥ एषांवेदेइडभावोनिपात्यते ॥ तेनभाषायां

थलीट्। ववरिथ। ववृव। ववृवहे। वरिता। वृतो वा। वरीता॥ वरिता॥ लिङ्सिचोरात्मनेपदेषु ७ २ ४२ वृङ्वृञ्भ्यामृदंताच्चपरयोर्लिङ्सिचोरिड्वातङि॥ नलिङि ७ २ ३९॥ वृतोलिङटोनदीर्घः॥ वरिषीष्ट॥ वृषीष्ट। अवारीत्। अवरिष्ट। अवरीष्ट। अवृत॥ टुदुउपतापे॥ दुनोति॥ हिगतौवृद्धौच॥ हिनुमिना ८ ४ १५॥ उपसर्गस्थानिमित्तात्परस्यैतयोर्नस्यणः॥ प्रहिणोति॥ हेरचङि ७ ३ ५६॥ अभ्यासाद्धिनोतेर्हस्य कुत्वन्नतुचङि॥ जिघाय॥ आप्लृव्याप्तौ॥ आप्नोति। आप्नुतः। आप्नुवंति। आप्नुवः। आप्नुहि। लृदित्वादङ्। आपत्। शक्लृशक्तौ। अशकत्॥ राधसाधसंसिद्धौ। राध्नोति॥ राधोहिंसायां ६ ४ १२३ एत्वाभ्यासलोपौस्तःकितिलिटिसेटिथलिच। अपरेधतुः। अपरेधुः॥ रेधिथ। राद्धा॥ साध्नोति। ससाध। साद्धा। असात्सीत्। असाद्धां॥ ञिधृषाप्रागल्भ्ये। धृष्णोति। दधर्ष। धर्षिता॥ दंभुदंभने॥ अनिदितामितिनलोपः। दभ्नोति। ददंभ॥ श्रन्थिग्रन्थिदंभिस्वंजीनांलिटःकित्त्वंवा॥ कित्त्वपक्षेनलोपः॥ तस्याभीयत्वादसिद्धत्वेनैत्वाभ्यासलोपयोरप्राप्तौ॥ दंभेश्च॥ एत्वाभ्यासलोपौस्तः। देभतुः। ददंभतुः। दंभिता। दभ्यात्॥ तृपप्रीणने॥ क्षुभ्नादिषुच ८ ४ ३९॥ नणत्वं। तृप्नोति। ततर्प॥ अशूव्याप्तौसंघातेच। अश्नुते॥ अश्नोतेश्च ७ ४ ७२॥ दीर्घादभ्यासादवर्णात्परस्यनुट्। आनशे। अशिता। अष्टा। अशिष्यते। अक्ष्यते।

अस्नुवित । अक्षोष्ट । अशिषीष्ट । आशिष्ट । आष्ट । आक्षातां ॥ इतिस्वादिः ॥ तुद व्यथने ॥ तुदादिभ्यःशः ३ १ ७७ ॥ शपोपवादः ॥ तुदति ॥ तुदते । तुतोदिथ । तुतुदे । तोत्ता । अतौत्सीत् ॥ अतुत्त ॥ णुदप्रेरणे । नुदति । नुदते । नुनोद । नुनुदे । नोत्ता ॥ भ्रस्जपाके । ग्रहिज्यावयीतिसंप्रसारणम् । सस्यश्चुत्वम् ॥ तस्यजश्त्वम् भृज्जति । भृज्जते ॥ भ्रस्जोरोपधयोरमन्यतरस्याम् ६ ४ ४७ ॥ भ्रस्जेरेफस्योपधायाश्चस्थानेरमागमोवार्द्धधातुके ॥ मित्वादंत्यादचःपरः ॥ स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः । बभर्ज । बभर्जतुः । बभर्जिथ । बभर्ष्ठ । बभ्रज्ज । बभ्रज्जतुः । बभ्रज्जिथ ॥ स्कोरितिसलोपः । वश्चेतिषः । बभ्रष्ठ । बभर्जे । बभ्रज्जे । भर्ष्टा ॥ भ्रष्टा । भर्क्ष्यति । भ्रक्ष्यति । क्ङितिरमागमंबाधित्वासंप्रसारणं पूर्वविप्रतिषेधेन ॥ भृज्ज्यात् । भृज्ज्यास्तां । भृज्ज्यासुः । भर्क्षीष्ट । भ्रक्षीष्ट । अभार्क्षीत् । अभ्राक्षीत् । अभर्ष्ट । अभ्रष्ट । कृषविलेखने । कृषते । चकर्ष । चकर्षे । क्रष्टा । कर्ष्टा । कृक्षीष्ट । अक्राक्षीत् । अकार्क्षीत् । अकृक्षत् । अकृष्ट । अकृक्षातां । अकृक्षत । स्पृशमृशितिसिज्वा ॥ अकृक्षातां । अकृक्षंत । मिलसंगमने ॥ मिलति । मिलते । मिमेल । मेलिता । अमेलीत् ॥ मुच्लृमोक्षणे ॥ शेमुचादीनाम् ७ १ ५९ ॥ मुच्लुप्विद्लिप्सिच्कृत्खिद्पिशांनुम् ॥ मुंचति । मुंचते । मोक्ता । मुच्यात् ॥ लिङ्सिचावितिकित् । मुक्षीष्ट । अमुचत् । अमुक्त । अमुक्षातां ॥ लुप्लृछेदने ।

लुंपति । लुंपते । लोप्ता । अलुपत् । अलुप्त । विद्लृ लाभे । विन्दति । विन्दते । विवेद । व्याघ्रभूतिमते सेट् । वेदिता । भाष्यमतेऽनिट् । परिवेत्ता । षिचक्ष रणे । सिंचति । सिंचते । असिचत् । असिचत । असिक्त । लिपउपदेहे । लिम्पति लिंपते । लेप्ता । लिपिसिचिह्वश्चेत्यङ् । अलिपत् । अलिपत । अलिप्त । कृतीछेदने । कृन्तति । चकर्त । कर्त्तिता ॥ सेसिचीतिवेट् । कर्त्तिष्यति । कर्त्स्यति । अकर्त्तीत् । खिदपरिघाते । खिन्दति । चिखेद । खेत्ता । पिशअवयवे । पिंशति । पेशिता ॥ ओव्रश्चूछेदने ॥ वृश्चति । वव्रश्च । वव्रश्चिथ । वव्रष्ठ । व्रश्चिता । व्रष्टा । व्रश्चिष्यति । व्रक्ष्यति । वृश्च्यात् । अव्रश्चीत् । अव्राक्षीत् ॥ व्यच व्याजीकरणे । विचति । विव्याच । विविचतुः । व्यचिता । व्यचिष्यति । विच्यात् । अव्याचीत् । अव्यचीत् ॥ व्यचेःकुटादित्वमनसीतितुनेहप्रवर्त्तते ॥ अनसीतिपर्युदासेनकृन्मात्रविषयत्वात् । उछिउंछे । उन्छः कणशआदानंकणिशाद्यर्जनंशिलमितियादवः । उंछति । उञ्छाञ्चकार ॥ ऋच्छगतीन्द्रियप्रलयमूर्त्तिभावेषु ॥ ऋच्छत्यृतामितिगुणः । द्विहल्ग्रहणस्यानेकहलुपलक्षणत्वान्नुट् । आनर्च्छ । आनर्च्छतुः । ऋच्छिता ॥ उज्झ उत्सर्गे । उज्झति । उज्झाञ्चकार ॥ लुभविमोहने । लुभति ॥ तीषसहलुभेतिवेट् ॥ लोभिता । लोब्धा । लोभिष्यति ॥ तृपतृंफतृप्तौ ॥ तृपति । ततर्प । तर्पिता । अतर्पीत् । तृंफति । शेतृंफादीनांनुवाच्यः ॥

आदिशब्दः प्रकारे ॥ तनयेऽत्रनकारानुषक्तास्तेतृम्फादयः । ततृंफ । तुम्फ्यात् ॥ मृडसुखने । पृडच । मृडति । पृडति । शुनगतौ । शुनति ॥ इषइच्छायां । इषगमीतिछः ॥ इच्छति । तीषेतीवेट् । एषिता । एष्टा । एषिष्यति । इष्यात् । ऐषीत् । कुटकौटिल्ये ॥ गाङ्कुटादीतिङित्वं ॥ चुकुटिथ । चुकोट । चुकुट । कुटिता । पुटसंश्लेषणे । पुटति । पुटिता । स्फुटविकसने । स्फुटति । स्फुरस्फुलसंचलने । स्फुरति । स्फुलति ॥ स्फुरतिस्फुलत्योर्निर्निविभ्यः ८ ३ ७६ ॥ षत्वंवा । निस्फुरति । निष्फुरतीत्यादि । णूस्तवने । परिणूतगुणोदयः । नुवति । नुनाव । नुविता । इतिकुटादयः ॥ टुमस्जोशुद्धौ । मज्जति । ममज्ज ॥ मस्जिनशोरितिनुम् ॥ मस्जेरन्त्यात्पूर्वोनुम्वाच्यः ॥ संयोगादिलोपः ॥ ममङ्क्थ । ममज्जिथ । मङ्क्ता । मङ्क्ष्यति । रुजोभङ्गे ॥ अरौक्षीत् । भुजोकौटिल्ये । रुजिवत् । विशप्रवेशने । विशति । मृशआमर्शने । आमर्शनंस्पर्शः । अम्राक्षीत् । अमार्क्षीत् । अमृक्षत् । स्पृशमृशेति च्लेःसिच् । षद्लृविशरणगत्यवसादनेषु । विशरणं दुःखम् ॥ सीदतीत्यादि ॥ शद्लृशातने । शदेःशितः १ ३ ६० ॥ शिद्भाविनोस्मात्तङानौस्तः ॥ शीयते । शीयतां । अशीयत । शीयेत । शशाद । शत्ता । शत्स्यति । अशदत् । अशत्स्यत् ॥ कृविक्षेपे ॥ ऋतइद्धातोः ७ १ १०० ॥ किरति । इत्वोत्वाभ्यांगुणवृद्धी पूर्वविप्रतिषेधेन ॥ चकार । चकरतुः । चकरुः । करिता ।

करीता । कीर्यात् । अकारीत् ॥ किरतौलवने ६ १ १४० ॥ उपात्किरतेःसुट्छेदर्थे । उपस्किरति ॥ अड भ्यासव्यवायेपि ॥ सुट्कात्पूर्वइतिवक्तव्यं । उपास्कि रत् । उपचस्कार ॥ हिंसायाम्प्रतेश्च ६ १ १४ ॥ उ पात्प्रतेश्चकिरतेःसुट्हिंसायां॥ उपस्किरति । प्रतिस्कि रति । गॄनिगरणे ॥ अचिविभाषा ८ २ २१ ॥ गिर तेरेफस्यलोजादौप्रत्यये॥ गिरति । गिलति । जगार । जगाल । जगरिथ । जगलिथ । गरिता । गरीता । गलिता । गलीता । प्रच्छज्ञीप्सायां ॥ ग्रहिज्येतिसंप्र सारणम् । पृच्छति । पप्रच्छ । पप्रच्छतुः । पप्रच्छुः । प्रष्टा । प्रक्ष्यति । अप्राक्षीत् । मृङ्प्राणत्यागे ॥ म्रिय तेर्लुङ्लिङोश्च १ ३ ६१ ॥ लुङ्लिङोःशितश्चप्रकृति भूतान्मृङस्तङानौनान्यत्र । ङित्वंस्वरार्थम् । रिङ् । इयङ् । म्रियते । ममार । ममर्थ । मम्रिम । मर्ता । म रिष्यति । मृषीष्ट । अमृत । पृङ्व्यायामे । प्रायेणायं व्याङ्पूर्वः । व्याप्रियते । व्यापप्रे । व्यापरिष्यते । ह्र स्वादंगादितिसिचूलोपः । व्यापृत । व्यापृषाताम् ॥ जु षीप्रीतिसेवनयोः । जुषते । जुजुषे ॥ ओविजीभय संचलनयोः । प्रायेणायमुत्पूर्वः । उद्विजते ॥ विजइ ट् १ २ २ ॥ विजेःपरस्यइडादिप्रत्ययोङिद्वत् । उद्वि जिता । उद्विजिष्यते ॥ ओलजीओलस्जीव्रीडने ॥ ल जते । लेजे । लज्जते । ललज्जे ॥ इतितुदादिः ॥

रुधिर्आवरणे ॥ रुधादिभ्यःश्नम् ३ १ ७८ ॥ शपोप वादः । रुणद्धि ॥ श्नसोरल्लोपः ॥ रुंधः । रुंधंति । रु

णत्सि । रुंधः । रुंध०रुणध्मि । रुंध्वः । रुंध्मः । रुंधे । रुंधाते । रुंत्से । रुंधाथे । रुंध्वे । रुंधे । रुंध्वहे । रुंध्महे । रुरोध ॥ रुरुधे । रोद्धा । रोत्स्यति । रोत्स्यते । रुणद्धु । रुंधात् । रुंधां । रुंधंतु । रुंधि । रुणधानि ॥ रुणधाव । रुणधाम । रुंधां । रुंधातां । रुधतां । रुंत्स्व । रुणधै । रुणधावहै । रुणधामहै । अरुणत् २ । अरुंधां । अरुंधन् । दश्चेतिरुः । अरुणः । अरुणत् २ । अरुंधं । अरुंध । अरुंध । अरुंधातां । अरुंधत । रुंध्यात् । रुंधीत । रुध्यात् रुत्सीष्ट । अरुधत् । अरौत्सीत् । अरुद्ध । अरोत्स्यत् अरोत्स्यत । भिदिर्विदारणे । छिदिर्द्वैधीकरणे । युजिर्योगे । रिचिर्विरेचने । रिणक्ति । रिङ्क्ते । रिरेच । रेक्ता । अरिणक् । अरिचत् । अरैक्षीत् । अरिक्त । विचिर्पृथग्भावे । विनक्ति । विङ्क्ते । क्षुदिर्संप्रेषणे । क्षुणत्ति । क्षुंत्ते । क्षोत्ता । अक्षुदत् । अक्षौत्सीत् । अक्षुत्त ॥ उच्छृदिर्दीप्तिदेवनयोः । छृणत्ति । छृन्ते । चच्छर्द ॥ सेसिचीतिवेट् । चच्छृदिषे । चच्छृत्से । छर्दिता । छर्दिष्यति । छर्त्स्यति । अच्छृदत् । अच्छर्दीत् । अच्छर्दिष्ट ॥ उतृदिर्हिंसानादरयोः ॥ तृणत्ति ॥ तृंत्ते ॥ कृतीवेष्टने । कृणत्ति ॥ तृहहिसिहिंसायां ॥ तृणहइम् ७ ३ ९२ ॥ तृहःश्नमिकृतेइम्हलादौपिति । तृणेढि । तृण्ढः । ततर्ह । तर्हिता । अतृणट् ॥ श्नान्नलोपः ६ ४ २३ ॥ हिनस्ति । जिहिंस । हिंसिता ॥ उंदिक्लेदने । उनत्ति ॥ उन्त्तः । उन्दांति ॥ उंदांचकार ॥ औनत् ।

औन्तां ॥ औन्दन् । औनः । औनद ॥ अंजूव्यक्तिम्र क्षणकांतिगतिषु ॥ अनक्ति । अंक्तः ॥ अंजंति । आनं ज । आनंजिथ ॥ आनङ्कथ ॥ अंजिता । अंक्ता ॥ अ ङ्ग्धि ॥ अनजानि । आनक् ॥ अंजेःसिचि ७ २ ७१ ॥ अंजेःसिचोनित्यमिट् ॥ आंजीत् । तंचूसंकोचने । तन क्ति । तंक्ता ॥ तंचिता ॥ ओविजीभयसंचलनयोः ॥ विनक्ति । विंक्तः ॥ विजइडितिङित्वं ॥ विविजिथ विजिता । अविनक् । अविजीत् ॥ शिष्लृविशेषणे । शिनष्टि । शिंष्टः । शिंषंति । शिनक्षि । शिशेष । शिशे षिथ । शेष्टा । शेक्ष्यति । हेर्धिः । शिंढि । शिनषाणि । शिष्यात् । शिष्यात् । अशिषत् । अशेक्ष्यत् ॥ एवं पिष्लृसंचूर्णने ॥ भंजोआमर्दने । भनक्ति । वभंजिथ । वभङ्कथ । भंक्ता । भुजपालनाऽभ्यवहारयोः । भुनक्ति । भोक्ता । भोक्ष्यति । अभुनक् ॥ भुजोनवने १ ३ ६६ तङानौस्तः ॥ ओदनंभुंक्ते । अनवनेकिं । महींभुनक्ति । ञिइन्धीदीप्तौ । इन्धे । इन्धाते । इन्धते । इंत्से । इन्धांचक्रे । इंधिता । इन्धां । इंधातां । इंधतां । इ नधै । ऐंध । ऐंधातां । ऐंधत । ऐंधाः । विदविचारणे । विंते । वेत्ता ॥ इतिरुधादिः ॥ तनुविस्तारे ॥ तनादि कृञ्भ्यउः ३ १ ७९ ॥ तनोति । तनुते ॥ ततान । ते ने । तनिता । तनिष्यति । तनिष्यते । तनोतु ॥ तनु तां । अतनोत् । अतनुत । तनुयात् । तन्वीत । त न्यात् । तनिषीष्ट । अतनीत् । अतानीत् ॥ तना दिभ्यस्तथासोः २ ४ ७९ ॥ तनादेःसिचोवालुक्तथा

सोः ॥ अनुदात्तोपदेशेतिनलोपः । अतत । अतनिष्ट । अतथाः । अतनिष्ठाः । अतनिष्यत् । अतनिष्यत । षणुदाने । सनोति । सनुते ॥ येविभाषेतिआत्वम् । सायात् । सन्यात् ॥ जनसनखनांसंझलोः ६ ४ ४२ ॥ एषामाकारोझलादौसनिझलादौक्ङितिच । असात । असनिष्ट । असाथाः ॥ असनिष्ठाः ॥ क्षणु हिंसायां । क्षणोति । क्षणुते । ह्म्यन्तेतिनवृद्धिः । अक्षणीत् । अक्षत । अक्षणिष्ट । अक्षथाः । अक्षणिष्ठाः ॥ क्षिणुच । उप्रत्ययेलघूपधगुणोवा । क्षिणोति । क्षेणोति । क्षेणिता । अक्षेणीत् । अक्षित । अक्षेणिष्ट । तृणु अदने । तृणोति । तर्णोति । तृणुते । तर्णुते ॥ डुकृञ् करणे । करोति ॥ अतउत्सार्वधातुके ॥ कुरुतः ॥ हलिचेतिदीर्घेप्राप्ते ॥ नभकुर्छुराम् ८ ३ ७९ ॥ भस्यकुर्छुरोरुपधायानदीर्घः ॥ कुर्वन्ति ॥ नित्यंकरोतेः ६ ४ १०८ ॥ करोतेःप्रत्ययोकारस्यनित्यंलोपोम्वोः ॥ कुर्वः । कुर्मः । कुरुते । चकार । चकर्थ । चकृव । चक्रे । कर्ता । करिष्यति । करिष्यते । करोतु । कुरुतां । अकरोत् । अकुरुत । येच ६ ४ १०९ ॥ कृञउलोपोयादौप्रत्यये । कुर्यात् । कुर्वीत । क्रियात् । कृषीष्ट । अकार्षीत् । अकृत । अकरिष्यत् । अकरिष्यत ॥ संपरिभ्यांकरोतौभूषणे ६ १ १३७ ॥ समवायेच ६ १ १३८ ॥ संस्करोति । अलंकरोतीत्यर्थः । संस्कुर्वन्ति । संघीभवंतीत्यर्थः । संपूर्वस्यक्वचिदभूषणेपिसुट् ॥ संस्कृतंभक्ष्याइतिज्ञापकात् ॥ उपात्प्रतियत्नवैकृतवाक्याध्याहारेषुच ६ १ १३९

कृञःसुट् । चात्प्रागुक्तयोरर्थयोः । प्रतियत्नोगुणाधानम् । विकृतमेववैकृतंविकारः । वाक्याध्याहारआकांक्षितैकदेशपूरणम् ॥ उपस्कृताकन्या । उपस्कृताब्राह्मणाः । एधोदकस्योपस्कुरुते । उपस्कृतंभुङ्क्ते । उपस्कृतंब्रूते । वनुयाचने । वनुते । ववने । मनुअववोधने । मनुते । मेने । मनिता । अमनुत । मन्वीत । मनिषीष्ट ॥ इतितनादिः ॥ डुक्रीञ्द्रव्यविनिमये ॥ क्र्यादिभ्यःश्ना ३।१।८१ ॥ शपोपवादः ॥ क्रीणाति । ईहल्यघोः ॥ क्रीणीतः ॥ श्नाभ्यस्तयोरातः ॥ क्रीणंति । क्रीणासि । क्रीणीथः । क्रीणीथ । क्रीणामि । क्रीणीवः । क्रीणीमः । क्रीणीते । क्रीणाते । क्रीणते । क्रीणीषे । क्रीणाथे । क्रीणीध्वे । क्रीणे । क्रीणीवहे । क्रीणीमहे । चिक्राय । चिक्रीयतुः । चिक्रियुः । चिक्रयिथ । चिक्रेथ । चिक्रिये । क्रेता । क्रेष्यति । क्रेष्यते । क्रीणातु । क्रीणीतात् । क्रीणीतां । क्रीणातां । क्रीणतां । क्रीणीयात् । क्रिणीत । क्रीयात् । क्रेषीष्ट । अक्रैषीत् । अक्रेष्ट । अक्रेष्यत् । अक्रेष्यत । प्रीञ्तर्पणेकांतौच । प्रीणाति । प्रीणीते । श्रीञ्पाके । श्रीणाति । श्रीणीते ॥ मीञ्हिंसायां । प्रमीणाति । हिनुमिना । प्रमीणीते । मीनातौल्याम् । ममौ । मिम्यतुः । ममिथ । ममाथ । मिम्ये । माता । मास्यति । मीयात् । मासिष्ट । अमासीत् । अमासिष्टां । अमास्त । षिञ्बंधने । सिनाति । सिनीते । सिषाय । सिष्ये । सेता । स्कुञ्आप्रवणे ॥ स्तंभुस्तुंभुस्कंभुस्कुंभुस्कुञ्भ्यश्नुश्च ३।१।८२ ॥

चातुष्णा । स्कुनोति । स्कुनुते । स्कुनाति । स्कुनीते । चुस्काव । चुस्कुवे । स्कोता । अस्कौषीत् । अस्कोष्ट । स्तंभ्वादयश्चत्वारःसौत्राःसर्वेरोधनार्थाःपरस्मैपदिनः ॥ हलःश्नःशानज्झौ ३ १ ८३ ॥ स्तभान ॥ जॄस्तंभुम्रुचु म्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ३ १ ५८ ॥ चेरङ्वा । व्यष्टभत् । अस्तंभीत् ॥ युञ्बंधने । युनाति । युनीते । योता ॥ क्नूञ्शब्दे । क्नूनाति । क्नूनीते । क्नविता ॥ द्रूञ्हिंसायां । द्रूणाति । द्रूणीते ॥ पूञ्पवने ॥ प्वादीनांह्रस्वः ७ ३ ८० ॥ पूञ्लूञ्स्तॄञ्कॄञ्वॄञ्धूञ्शॄपॄवॄभॄमॄदॄजॄझॄधॄनॄकॄऋॄगॄज्यारीलीव्लीप्लीएषाञ्चतुर्विंशतेर्ह्रस्वःशिति ॥ पुनाति । पुनीते । पविता । लूञ्छेदने । लुनाति । लुनीते ॥ स्तॄञ्आच्छादने ॥ स्तृणाति । स्तृणीते । तस्तार । तस्तरतुः । तस्तरे । स्तरिता । स्तरीता । स्तृणीयात् । स्तृणीत ॥ ऋृतइद्धातोः स्तीर्यात् । स्तरिषीष्ट । स्तीर्षीष्ट ॥ सिचिपरस्मैपदेषु । अस्तारीत् । अस्तारिष्टां ॥ अस्तारिषुः । अस्तरिष्ट । अस्तीर्ष्ट । कॄञ्हिंसायां । कृणाति । कृणीते । चकार । चकरे । वॄञ्वरणे । वृणाति । वृणीते । ववार । ववरे । वरिता । वरीता । उदोष्ठ्यपूर्वस्य । वूर्यात् । वरिषीष्ट । वूर्षीष्ट । अवारीत् । अवारिष्टां । अवरिष्ट । अवरीष्ट । अवूर्ष्ट । धूञ्कंपने । धुनाति । धुनीते । दुधविथ । दुधोथ । दुधुविव । धोता । धविता ॥ स्तुसुधूञ्भ्यःपरस्मैपदेषु ॥ अधावीत् । अधविष्ट ॥ ग्रहउपादाने । गृह्णाति । गृह्णीते । जग्राह ।

जगृहे ॥ ग्रहोलिटिदीर्घः ७ २ ३७ ॥ एकाचांग्रहेर्वि
हितस्येटोदीर्घोनतुलिटि। ग्रहीता । गृह्णातु । गृहाण ।
गृह्यात् । ग्रहीषीष्ठ ॥ ह्म्यन्तेतिनवृद्धिः । अग्रहीत् ।
अग्रहीष्टां । अग्रहीषातां । कुषनिष्कर्षे । कुष्णाति ।
कोषिता ॥ निरःकुषः ७ २ ४६ ॥ वलादेरार्द्धधातुक
स्येड्वा ॥ निष्कोषिता । निष्कोष्टा । निरकोषीत् ॥
शलइगुपधादितिक्सः ॥ निरकुक्षत् । अशभोजने । अ
श्नाति । आश । अशिता । अश्नातु । अशान ॥ ज्ञाव
बोधने ॥ ज्ञाजनोर्जादेशः ॥ जानाति । जज्ञौ ।
पृपालनपूरणयोः । पृणाति । शृहिंसायां । शृणाति ।
शृदृप्रांह्रस्वोवेतिपक्षेयण् । शश्रतुः । शशरतुः । दृवि
दारणे । दृणाति । दद्रतुः । ददरतुः । जृवयोहानौ ।
जृणाति । मुषस्तेये ॥ मुष्णाति । मोषिता । पुषपुष्टौ ।
पुष्णाति । पोषिता ॥ बन्धबन्धने ॥ बध्नाति । बबन्ध ।
बबंधिथ । बंधा ॥ भंत्स्यति ॥ अभान्त्सीत् । अबा
न्धाम् । अभान्त्सुः ॥ क्लिशूविबाधने । क्लिश्नाति ।
क्लेशिता । क्लेष्टा । अक्लेशीत् । अक्लिक्षत् ॥ वृङ्संभ
क्तौ । वृणीते । वव्रे । ववृढ्वे । वरिता । वरीता । अ
वरिष्ट । अवरीष्ट । अवृत ॥ इतिक्र्यादिः ॥ चुरस्तेये ।
सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचू
र्णचुरादिभ्योणिच् ३ १ २५ ॥ स्वार्थे ॥ पुगंतेतिगुणः ।
सनाद्यन्ताइतिधातुत्वं ॥ तिप्शवादिगुणायादेशौ ॥ चो
रयति । णिचश्च १ ३ ७४ ॥ णिजंतादात्मनेपदंकर्तृ
गामिनिक्रियाफले ॥ चोरयते । चोरयामास ॥ चोर

यिता । चोर्यात् । चोरयिषीष्ट ॥ णिश्रीतिचङ् ॥ णौ चङीतिह्रस्वः ॥ चङीतिद्वित्वं ॥ हलादिःशेषः ॥ दीर्घो लघोरित्यभ्यासस्यदीर्घः ॥ अचूचुरत् ॥ चितिस्मृत्यां । चिंतयति । अचिचिंतत् ॥ चिंतेतिपठितव्येइदित्कर णाणिचःपाक्षिकत्वेलिंगं ॥ तेनचिंत्यादित्यादौनलोपो न ॥ चिंतति । चिन्तेदित्यादि ॥ यत्रिसंकोचे ॥ यंत्र यति । यंत्रेतिपठितुंशक्यं ॥ यन्तुइदित्करणाद्यंत्रतीति माधवेनोक्तं । तच्चिन्त्यं ॥ एवंकुद्रिअनृतभाषणे ॥ तत्रि कुटुंबधारणे ॥ मंत्रिगुप्तपरिभाषणे । तंत्रयते ॥ मंत्रय ते । एतौआत्मनेपदिनौ ॥ स्फुडिपरिहासे । स्फुंडय ति । पीडअवगाहे ॥ भ्राजभासभाषदीपजीवमीलपी डामन्यतरस्याम् ७ ४ ३ ॥ एषामुपधायाह्रस्वोवाचङ् परेणौ ॥ अपीपिडत् । अपिपीडत् । प्रथप्रख्याने । प्रा थयति ॥ अत्स्मृदृत्वरप्रथम्रदस्तृस्पशां ७ ४ ९५ ॥ एषामभ्यासस्याकारश्चङ्परेणौ । इत्वापवादः । अपप्र थत् ॥ पृथप्रक्षेपे । पर्थयति ॥ उर्ऋत् ७ ४ ७ ॥ उपधाया ऋवर्णस्यऋद्वाचङ्परेणौ ॥ इररारामपवादः ॥ अपीपृ थत् ॥ अपपर्थत् ॥ लुंठस्तेये । लुंठयति । अलुलुंठत् ॥ तडआघाते । ताडयति । अतीतडत् ॥ मडिभूषायांह र्षेच । मण्डयति । अममंडत् ॥ भडिकल्याणे ॥ भण्ड यति । अबभण्डत् ॥ छर्दवमने । छर्दयति । अचछ र्दत् ॥ चुदसंचोदने । चोदयति । अचूचुदत् ॥ पालरक्ष णे । पालयति । अपीपलत् ॥ पूजपूजायां । पूजयति । अपूपुजत् । कृतसंशब्दने ॥ उपधायाश्च ७ १ १०१ ॥

धातोर्ऋतइत्। रपरत्वं॥उपधायांचेतिदीर्घः। कीर्त्तयति। अचीकृतत्। अचिकीर्तत्॥ म्लेच्छअव्यक्तायां वाचि। म्लेच्छयति। अमिम्लेच्छत्॥ डडस्तुतौ। डंडयति॥ पिडिसंघाते। पिण्डयति॥ रुपरोपे॥ रोपयति। अरूरुपत्। तुलउन्माने। तोलयति। अतूतुलत्॥ शुल्वमाने॥ शुल्वयति। अशुशुल्वत्। घुषिरअविशब्दने। घोषयति। अजूघुषत्॥ पटपुटलुटतुञ्जिमिजिपिजिलुजिभजिलघिंत्रसिपिसिकुसिदशिकुशिघटघटिवृहिवर्हवल्हगुपधूपविच्छचीवपुथलोकलोचृणदकुपतर्कवृतुवृधुत्रपार्थाः॥ पाटयति। पोटयति। लोटयति। तुञ्जयति। एवपरेषां। घाटयति। घण्टयति॥ नाग्लोपिशास्वृदिताम् ७ ४ २॥ णिच्यग्लोपिनःशास्तेऋदितांचोपधायाह्रस्वोनचङ्परेणौ॥ अलुलोकत्। अलुलोचत्। वर्त्तयति। वर्द्धयति॥ आधृषाद्वा॥ इतऊर्द्ध्वंविभाषितणिचः॥ धृषधातुमभिव्याप्य। युजपृचसंयमने॥ योजयति। योजति। अयौक्षीत्॥ पर्चयति। पर्चति॥ पर्चिता। अपर्चीत्॥ अर्चपूजायां॥ षहमर्षणे॥ साहयति॥ सएवायंनागःसहतिकलभेभ्यःपरिभवम्॥ वृञ्वरणे॥ वारयति। वरति। वरते। जृवयोहानौ। जारयति। जरति॥ शिषअसर्वोपयोगे। शेषयति। शेषति। शेष्टा॥ अशिक्षत्। तपदाहे॥ तापयति। तपति। तप्ता॥ तृपतृप्तौ। तर्पयति। तर्पति॥ हिसिहिंसायां। हिंसयति। हिंसति॥ अर्हपूजायां। छदअपवारणे। छादयति।

छृदति । छदते ॥ धूञ् कंपने ॥ धूञ्प्रीञोर्नुक् ॥ णौ धूनयति । धवति । धवते ॥ प्रीञ् तर्प्पणे । प्रीणयति । प्रयति । प्रयते ॥ वचपरिभाषणे । वाचयति । वचति । वक्ता । अवाक्षीत् ॥ मानपूजायां । मानयति । मानति । मानिता ॥ भूप्राप्तौ । आत्मनेपदी । भावयते । भवते ॥ णिच्संनियोगेनैवात्मनेपदमित्येके । भवति ॥ मार्गअन्वेषणे ॥ धृषप्रसहने । धर्षयति । धर्षति ॥ अथादन्ताः ॥ कथवाक्यप्रबंधने । अल्लोपः ॥ अचःपरस्मिन्पूर्वविधौ १ १ ५७ ॥ परनिमित्तोजादेशःस्थानिवत्स्यात्स्थानिभूतादचःपूर्वत्वेनदृष्टस्यविधौकर्त्तव्ये । इतिस्थानिवत्वान्नोपधायावृद्धिः । कथयति । अग्लोपित्वादीर्घसन्वद्भावौन । अचकथत् ॥ गणसंख्याने । गणयति ॥ ईचगणः ७ ४ ९७ ॥ अभ्यासस्यचादच्चङ्परे णौ । अजीगणत् । अजगणत् ॥ रचप्रतियत्ने । रचयति । अररचत् ॥ कलगतौसंख्यानेच । कलयति । अचकलत् । महपूजायां । महयति ॥ सूचपैशून्ये । सूचयति । अषोपदेशत्वान्नषः । असुसूचत् । कुमारक्रीडायां ॥ कुमारयति । अचुकुमारत् । ऊनपरिहाणे । ऊनयति । ओःपुयण्जीतिसूत्रेपययोरितिवक्तव्येवर्गप्रत्याहारजग्रहोलिंगम् ॥ णिच्यचआदेशोनाद्वित्वेकर्त्तव्ये इति । यत्रद्विरुक्तावभ्यासोत्तरखंडस्याद्योच्प्रक्रियायांपरिनिष्ठितरूपेवाअवर्णोलभ्यतेतत्रैवायंनिषेधः ॥ ज्ञापकस्यसजातीयापेक्षत्वात् ॥ तेनाचिकीर्त्तदित्यादिसिद्धम् ॥ प्रकृतेतुनशब्दस्यद्वित्वं । ततउत्तरखण्डेअल्लोपः । औननत् ।

ध्वनशब्दे। ध्वनयति। अदध्वनत्॥ सूत्रवेष्टने। सूत्रयति। मूत्रप्रस्रवणे॥ मूत्रयति॥ अर्दंतत्वसामर्थ्याणिज्विकल्पः॥ मूत्रयति। आगर्वादात्मनेपदिनः॥ पदगतौ। पदयते। अपपदत॥ गृहग्रहणे॥ मृगअन्वेषणे॥ मृगयते॥ शूरवीरविक्रांतौ। शूरयते। वीरयते॥ गर्वमाने। गर्वयते॥ इतिचुरादिः॥ स्वतंत्रः कर्त्ता १ ४ ५४॥ क्रियायांस्वातंत्र्येणविवक्षितोर्थः कर्त्तास्यात्॥ तत्प्रयोजकोहेतुश्च १ ४ ५५॥ कर्त्तृप्रयोजकोहेतुसंज्ञःकर्त्तृसंज्ञश्च॥ हेतुमतिच ३ १ २६॥ प्रयोजकव्यापारेप्रेरणादौवाच्येधातोर्णिच्॥ भवन्तंप्रेरयतिभावयति॥ ओःपुयण्ज्यपरे ७ ४ ८०॥ सनिपरेयदंगंतदवयवोयोभ्यासस्तस्योतइत्स्यात्पवर्गयण्जकारेष्ववणपरेपुपरतः। अबीभवत्। अपीपवत्॥ मूङ्बंधने॥ अमीमवत्॥ अयीयवत्॥ रुशब्दे॥ अरीरवत्। अलीलवत्। अजीजवत्। पुयण्जीतिकिं। नुनावयिषति। अपरेकिं। बुभूषति॥ स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनांवा ७ ४ ८१॥ एषामभ्यासोकारस्येत्वंवासनिअवर्णपरेधात्वक्षरेपरे॥ असिस्रवत्। असुस्रवत्। इत्यादि। अवर्णपरेकिं। शुश्रूषते। णिजंताणिच्॥ परत्वाद्वृद्धौप्राप्तायां॥ यल्लोपाविय‍ङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेनेतिणिलोपः॥ चोरयति॥ णौचङ्युपधायाह्रस्वः॥ दीर्घोलघोरितिदीर्घः॥ नचाग्लोपित्वाद्द्वयोरप्यसंभवः। यथाकृतिनिर्देशात्। अचूचुरत्॥ टुओश्विगतिवृद्ध्योः॥ णौचसंश्चङोः ३ १ ३१॥

सन्यरेचङ्परेचणौश्वयतेःसंप्रारणंवास्यात् । संप्रसारणं तदाश्रयंचकार्यंबलवदितिवचनात्संप्रसारणम् ॥ अशूश वत् । अलघुत्वान्नदीर्घः । अशिश्वयत् ॥ स्तंभुसिवु सहांचङि ८ ३ ११६ ॥ उपसर्गादेषांसस्यषोनस्याच्च ङि । अवातस्तंभत् । पर्यसीषिवत् । न्यसीषहत् ॥ स्वापेश्चङि ६ ३ ११८ ॥ ण्यन्तस्यस्वपेश्चङिसंप्रसारणं । असूषुपत् ॥ हनस्तोऽचिण्णलोः ७ ३ ३२ ॥ चिण्णल्व र्जेञ्णिति । घातयति ॥ अर्त्तिह्रीव्लीरीक्नूयीक्ष्माय्या तांपुङ्णौ ७ ३ ३६ ॥ स्थापयति ॥ तिष्ठतेरित् ७ ४ ५ ॥ उपधायाश्चङ्परेणौ । अतिष्ठिपत् ॥ जिघ्रतेर्वा ७ ५ ६ ॥ उपधायाइत्वंचङ्परेणौ । अजिघ्रिपत् । अजिघ्रपत् ॥ शाच्छासाह्वाव्यावेपांयुक् ७ ३ ३७ ॥ णौ । शाययति । अशीशयत् । ह्वाययति ॥ ह्वः सम्प्रसारणम् ६ १ ३२ ॥ सन्परेचङ्परेचणौ ॥ काण्यादीनांवा ॥ चङ्परेणौ उ पधायाह्रस्वोवा ॥ ण्यन्ताःकणरणभणश्रणलुपहेटःषड् भाष्ये ॥ ह्वायिवाणिलोटिलोपयश्चत्वारोधिकान्यासे ॥ वाणिलोटीअप्यन्यत्र ॥ इत्थंकाण्यादयोद्वादश ॥ अ जूहवत् । अजुहावत् । पाययति ॥ लोपःपिबतेरी च्चाभ्यासस्य ७ ४ ४ ॥ पिबतेरुपधायालोपःस्यादभ्या सस्यईदंतादेशश्चङ्परेणौ ॥ अपीप्यत् ॥ पातेर्णौलुग्व क्तव्यः ॥ पुकोपवादः । पालरक्षणे । पालयति ॥ वो विधूननेजुक् ७ ३ ३८ ॥ णौ । वाजयति । कंपेकिं । केशान्वापयति ॥ शदेरगतौतः ७ ३ ४२ ॥ णौ । शा तयति । गतौतु । शादयतिगोविंदः । गमयतीत्यर्थः ॥

रुहःपोन्यतरस्यां ७ ३ ४३ ॥ णौ । रोपयति । रोह
यति ॥ दोपोणौ ६ ४ ९० ॥ दुष्यतेरुपधायाऊत्स्या
त्णौ । दूषयति ॥ वाचित्तविरागे ६ ४ ९१ ॥ विरा
गोप्रीतता । चित्तंदूपयति । दोषयतिवाकामः ॥
उभौसाभ्यासस्य ८ ४ २१ ॥ साभ्यासस्यानितेरु
भौनकारौणत्वंप्राप्नुतोनिमित्तेसति । प्राणिणत् ॥ णौ
गमिरवोधने २ ४ ४६ ॥ इणः । गमयति । वोधने
तु । प्रत्याययति ॥ घटचेष्टायां ॥ घटादयोमितः ॥
जनीजृष्क्नसुरंजोऽमंताश्च ॥ मितः । ज्वलह्वलह्मलनमाम
नुपसर्गाद्वा ॥ एषांमित्त्वंवा । ग्लास्नावनुवमांच्च ॥ अ
नुपसर्गादेषांमित्त्वंवा ॥ नकम्यमिचमां ॥ अमंतत्वात्प्रा
प्तंमित्वमेषांन । यमोऽपरिवेषणे ॥ मित्त्वंन ॥ स्खदि
रवपरिभ्यांच ॥ मिन्न ॥ मितांह्रस्वः ॥ घटादीनांज्ञपादी
नांचणावुपधायाह्रस्वः ॥ घटयति ॥ ज्ञपज्ञानेज्ञापनेच ।
ज्ञपयति । अजीघटत् । अजिज्ञपत् ॥ रभेरशब्लिटोः
७ १ ६३ ॥ नुमचि ॥ लभेश्च ७ १ ६४ ॥ अररंभत् ।
अललंभत् । ईर्ष्ययति । ईर्ष्यतेस्तृतीयस्येतिवक्तव्यम्
तृतीयव्यंजनस्यतृतीयैकाचइतिचार्थः ॥ आद्येपस्यद्वि
त्वंवारयितुमिदम् ॥ द्वितीयेत्वजादेर्द्वितीयस्येत्यस्याप
वादतयासंनंतेप्रवर्त्तते ॥ ऐर्ष्यियत् ॥ द्वितीयव्याख्या
यांणिजंताच्चङिपएवाभ्यासेश्रूयते । हलादिःशेषात्द्वि
त्वंतुद्वितीयस्यैव ॥ तृतीयाभावेनप्रकृतवार्तिकाप्रवृतेः ।
ऐर्षिष्यत् ॥ इतिणिजंतप्रक्रिया ॥ धातोःकर्मणःस
मानकर्तृकादिच्छायांवा ३ १ ७ ॥ इषिकर्मणोधातो

रिषिणैककर्त्तृकात्सन्वेच्छायाम् ॥ पठव्यक्तायांवाचि । इट् ॥ सन्यङोः ६ १ ९ ॥ सन्नन्तस्ययङन्तस्यचप्रथमस्यैकाचोद्विस्तोजादेस्तुद्वितीयस्य ॥ सन्यतः ॥ पठितुमिच्छतिपिपठिषति । कर्मणः किं । गमनेनेच्छति । समानकर्त्तृकात्किं । शिष्याःपठंत्वितीच्छतिगुरुः । वाग्रहणाद्वाक्यमपि । शैषिकान्मतुवर्थीयाच्छैषिकोमतुवर्थिकः । सरूपःप्रत्ययोनेष्टःसन्नंतान्नसनिष्यते । तेनपिपठिषितुमिच्छतीतिवाक्यमेव ॥ लुङ्सनोर्घस्लृ ॥ सःस्यार्द्धधातुके ७ ४ ४९ ॥ सस्यतःस्यात्सादावार्द्धधातुके ॥ अत्तुमिच्छतिजिघत्सति ॥ एकाचइतिनेट् ॥ अज्झनगमांसनि ६ ४ १६ ॥ अजंतानांहन्तेरजादेशगमेश्चदीर्घोझलादौसनि ॥ इकोझल् १ २ १० ॥ इगंताज्झलादिःसन्कित् । कर्तुमिच्छतिचिकीर्षति । जिघांसति ॥ सनिच २ ४ ४७ ॥ इणोगमिःस्यात्सनिनतुबोधने । जिगमिषति । बोधनेतुप्रतीषिषति ॥ इङश्च २ ४ ४८ ॥ गमिःसनि । अधिजिगांसते ॥ रुदविदमुषग्रहिस्वपिप्रच्छःसंश्च १ २ ८ । एभ्यःसन्क्त्वाचकितौस्तः । रुरुदिषति । विविदिषति । मुमुषिषति ॥ सनिग्रहगुहोश्च ७ २ १२ ॥ ग्रहेर्गुहेरुगन्ताच्चसनइड्न । जिघृक्षति । हलंताच्च १ २ १० ॥ इक्समीपाद्धलःपरोझलादिःसन्कित् । गुहूसंवरणे । जुघुक्षति । सुषुप्सति ॥ किरश्चपञ्चभ्यः ७ २ ७५ ॥ कृगृदृधृङ्प्रच्छएभ्यःसनइट् । पिपृच्छिषति । चिकरिषति । जिगरिषति । अत्रेठोदीर्घोनेष्टः ॥ पूर्ववत्सनः १ ३ ६२ ॥ सनःपूर्वोयोधातुस्ते

नतुल्यंसन्नन्तादप्यात्मनेपदंस्यात् । दिदरिषते । दिधरिषते । बुभूषति ॥ सनीवन्तर्द्धभ्रस्जदंभुश्रीस्वृयूर्णुभरज्ञपिसनाम् ७२४९ ॥ इवन्तेभ्यऋधादिभ्यश्चसनइड्वा ॥ छ्वोःशूडनुनासिकेच ६ ४ १९ ॥ सतुक्कस्यछस्यवस्य चक्रमात् शऊठ्एतावादेशौस्तोऽनुनासिकेक्वौझलादौ क्ङिति च ॥ यण् । द्वित्वं । दुद्यूषति । दिदेविषति ॥ स्तौतिण्योरेवषण्यभ्यासात् ८ ३ ६१ ॥ अभ्यासेणःपरस्यस्तौतिण्यन्तयोरेवसस्यषःषभूतेसनिनान्यस्य । तुष्टूषति । सिसाधयिषति । स्तौतिण्योःकिम् । सुस्यूषति । सिसेविषति ॥ आप्ज्ञप्ऋधामीत् ७ ४ ५८ ॥ एषामच ईत्स्यात्सादौसनि ॥ अत्रलोपोभ्यासस्य ७ ४ ५६ ॥ सनिनिमेत्यारभ्ययदुक्तंतत्राभ्यासलोपः ॥ आप्तुमिच्छतिईप्सति । अर्द्धितुमिच्छतिईर्त्सति । अर्दिधिषति । विभ्रज्जिषति । विभर्ज्जिषति । विभ्रक्षति । विभर्क्षति ॥ दंभइच्च ६ ४ ५६ ॥ दंभेरचइत्स्यादीच्चसादौसनि । हलन्तादित्यत्रहल्ग्रहणंजातिपरं । तेनसनःकित्वान्नलोपः । धिप्सति । धीप्सति । दिदंभिषति । शिश्रीषति । शिश्रयिषति । उदोष्ठ्येत्युत्वम् । सुस्वूर्षति । सिस्वरिषति । युयूषति । यियविषति । विभाषोर्णोइतिङित् । ऊर्णुनुविषति । ऊर्णुनविषति । ऊर्णुनूषति । विभरिषति । बुभूर्षति । जिज्ञपयिषति । ज्ञीप्सति । सिसनिषति । सिषासति । आशंकायांसन्वक्तव्यः । श्वामुमूर्षति । तनिपतिदरिद्रातिभ्यःसनोवेड्वाच्यः । तितनिषति ॥ तनोतेर्विभाषा ६ ४ १ ॥ उपधायादीर्घोझलादौसनि ।

तितांषति । तितंषति । कूलमिपपतिषपि ॥ सनिमी माघुरभलभशकपतपदामचइस् ७ ४ ५४ ॥ सादौस नि । अभ्यासलोपः । पित्सति । दिदरिद्रिषति । दि दरिद्रासति ॥ मुचोऽकर्मकस्यगुणोवा ७ ४ ५७ ॥ सा दौसनिअभ्यासलोपः । मुमुक्षते । मोक्षतेवावत्सःस्व यमेव । अकर्मकस्यकिम् । मुमुक्षतिवत्संकृष्णः ॥ इट् सनिवा ७ २ ४१ ॥ वृङ्वृञ्भ्यामृदन्ताच्चसनइड्वा ॥ विवरिषते । विवरीषते । वुवूर्षते । विवरिषति । ति तरिषति । तितरीषति । तितीर्षति । स्मिपूङ्रंज्वशां सनि ७ २ २७४ ॥ स्मिपूङ्ऋञ्जूञ्जूअशूएभ्यःसनइ ट् ॥ सिस्मयिषते । पिपविषते । अरिरिषति । अंजि जिषति । अशिशिषति । गुपगोपने । तिजनिशाने । कितनिवासेरोगापनयनेच । मानपूजायां । वधबन्ध ने । दानखण्डने । शानतेजने । गुप्तिज्किद्भ्यःसन् ३ १ ५ ॥ मान्बधदान्शान्भ्योदीर्घश्चाभ्यासस्य ३ १ ६ सूत्रद्वयोक्तेभ्यःसन्मानादीनामभ्यासस्येकारस्यदीर्घश्च गुपेर्निन्दायां । तिजेःक्षमायां । कितेर्व्याधिप्रतीकारे निग्रहेअपनयनेनाशनेसंशयेच । मानेर्जिज्ञासायां । वधे श्चित्तविकारे । दानेरार्जवे । शानेर्निशाने । गुपिप्रभृ तयःकिद्भिन्नानिन्दाद्यर्थकाएवाऽनुदात्तेतः ॥ दानशा नौतुस्वरितेतौ । एष्वर्थेष्वेतेनित्यसन्नन्ताः । अर्थान्त रेत्वननुबन्धकाश्चुरादयः । अनुबन्धकस्यकेवलस्याचरिता र्थत्वात्सन्नन्तात्पदव्यवस्था । धातोरित्यविहितत्वात्स नोऽत्रनार्द्धधातुकत्वं । तेनेड्गुणौन । जुगुप्सते । तितिक्षते

चिकित्सति। मीमांसते। बिभत्सते। दीदांसति। दीदांसते। शीशांसति। शीशांसते॥ णिचितु। गोपयति। गोपयते॥ इतिसन्नन्तप्रक्रिया॥ धातोरेकाचो हलादेः क्रियासमभिहारेयङ्। ३। १। २२॥ पौनःपुन्ये भृशार्थेचद्योत्येधातोरेकाचोहलादेर्यङ्॥ गुणोयङ्लुकोः ७।४।८२॥ अभ्यासस्य॥ ङिदंतत्वादात्मनेपदं। पुनःपुनरतिशयेनवाभवति। बोभूयते। बोभूयाञ्चक्रे। अबोभूयिष्ट। धातोः किं। आर्द्धधातुकत्वंयथा स्यात्। तेनब्रुवोवचिरित्यादि। एकाचः किं। पुनःपुनर्जागर्त्ति। हलादेः किं। भृशमीक्षते॥ नित्यंकौटिल्ये गतौ ३।१।२३॥ गत्यर्थात्कौटिल्येएवयङ्नतुक्रियासमभिहारे॥ दीर्घोऽकितः ७।४।८३॥ अकितोभ्यासस्यदीर्घोयङ्लुकोः॥ कुटिलंव्रजतिवाव्रज्यते। यस्यहलः ६।४।४९॥ हलःपरस्ययस्यलोपःस्यादार्द्धधातुके। आदेः परस्य। अतोलोपः॥ वाव्रजाञ्चक्रे। वाव्रजिता॥ रीङृतः ७।४।२७॥ अकृद्यकारेअसार्वधातुकेयकारेच्वौ चपरेऋदन्ताङ्गस्यरीङादेशः। डुकृञ्करणे। चेक्रीयते॥ रीगृदुपधस्यच ७।४।९०॥ धातोरभ्यासस्यरीगागमोयङ्लुकोः॥ वरीवृत्यते। वरीवृताञ्चक्रे। वरीवृतिता। क्षुभ्नादिषुच॥ नरीनृत्यते। जरीगृह्यते। रीगृत्वतइतिवाच्यम्। वरीवृश्च्यते॥ लुपसदचरजपजभदहदशगॄभ्योभावगर्हायाम् ३।१।२४॥ एभ्योधात्वर्थगर्हायामेवयङ्॥ गर्हितंलुपतिलोलुप्यते। सासद्यते॥ चरफलोश्च ७।४।८७॥ अनयोरभ्यासस्यातोनुक्स्याद्यङ्

लुकौ: ॥ नुगित्यनेनानुस्वारोपलक्ष्यते । सचपदान्तवद्वा च्यः ॥ वापदान्तस्येतियथास्यात् ॥ उत्परस्यातः ७ ४ ८८ ॥ चरफलोरभ्यासात्परस्यातउतस्याद्यलुङ्कोः ॥ हलिचेतिदीर्घः ॥ चञ्चूर्यते । चंचूर्यते । पम्फुल्यते । पंफुल्यते ॥ जपजभदहदशभञ्जपशांञ्च ७ ४ ८६ ॥ एषामभ्यासस्यनुकूयङ्लुकोः ॥ गर्हितंजपति । जंजप्य ते ॥ इत्यादि ॥ ग्रोयङि ८ २ २० ॥ गिरतेरेफस्यल त्वंयङि ॥ गर्हितंगिलति । जेगिल्यते ॥ सूचिसूत्रिमू त्र्यद्यत्यशूर्णोतिभ्योयङ्वाच्यः ॥ सोसूच्यते । अटपट गतौ । अटाट्यते । यङिच ७ ४ ३० ॥ अर्त्तेःसंयोगा देश्चऋदंताङ्गस्यगुणोयङि ॥ यकारपरस्परेफस्यनद्वि त्वनिषेधः ॥ अरार्यते ॥ अरारिता । अशाश्यते । ऊ र्णोनूयते ॥ सिचोयङि ८ ३ ११२ ॥ सस्यषोन । नि सेसिच्यते ॥ नकवतेर्यङि ७ ४ ६३ ॥ अभ्यासस्यचु त्वंन । कोकूयते । कौतिकुवत्योस्तु ॥ चोकूयते । हं तेर्हिंसायांयङीघ्नीभावोवाच्यः ॥ जेघ्नीयते ॥ हिंसा यांकिं ॥ नुगतोनुनासिकांतस्य ७ ४ ८५ ॥ अदन्ता भ्यासस्यनुकूयङ्लुकोः ॥ जंवन्यते । अयङ्यिक्ङिति ७ ४ २१ ॥ शीङः । शाशय्यते ॥ स्वापिस्यमिव्येञांय ङि ६ १ १९ ॥ संप्रसारणं ॥ सोषुप्यते । सेसिम्यते वेवीयते ॥ नवशः ६ १ २० ॥ संप्रसारणं । वावश्य ते ॥ चायःकी ६ १ २१ ॥ चेकीयते ॥ ईघ्राध्मोः ७ ४ ३१ ॥ जेघ्रीयते । देध्मीयते ॥ नीग्वञ्चुस्त्रंसुध्वं सुभ्रंसुकसपतपदस्कन्दाम् ७ ४ ८५ ॥ एषामभ्यास

स्यनीग्यङ्लुको॥ छांकितइत्युक्तेर्नदीर्घः। वनीवच्य ते। सनीस्रस्यते। दनीध्वस्यते। वनीभ्रस्यते। चनी कस्यते। पनीपत्यते। पनीपद्यते। चनीस्कद्यते॥ ॥ इतियङंतप्रक्रिया॥ यङोचिच २ ४ ७४॥ यङोचि प्रत्ययेलुक्स्यात्। चकारात्तंविनापिक्वचित्। अनैमि त्तिकोयमन्तरंगत्वादादौभवति। ततःप्रत्ययलक्षणेनय ङन्तत्वाद्द्वित्वं॥ अभ्यासकार्यं। धातुत्वाल्लडादयः॥ शेषात्कर्त्तरिपरस्मैपदं। चर्करितंचेत्यदादौपाठाच्छपो लुक्॥ यङोवा ७ ३ ९४॥ यङंतात्परस्यहलादेःपित्तः सार्वधातुकस्यईड्वास्यात्॥ भूसुवोरितिनिषेधोयङ्लु किभाषायांन॥ वोभूतुतेतिक्तेइतिछन्दसिनिपातनात्। वोभवीति। वोभोति। वोभूतः। वोभुवति। वोभवी षि। वोभोषि। वोभूथः। वोभूथ। वोभवीमि। वो भोमि। वोभूवः। वोभूमः। वोभवाञ्चकार। वोभ वांबभूव। वोभवामास। वोभविता। वोभविष्यति। वोभवीतु। वोभोतु। वोभूतात्। वोभूतां। वोभुवतु। वोभूहि। वोभवानि। अवोभवीत्। अवोभोत्। अवोभूतां। अवोभवुः। वोभूयात्। वोभूयातां। वो भूयुः। वोभूयात्। वोभूयास्तां। गातिस्थेतिसिचोलु क्। यङोवेतीट्पक्षेगुणंबाधित्वानित्यत्वाद्वुक्॥ अवोभू वीत्। अवोभोत्। अवोभूतां। अवोभूवुः। अवो भविष्यत्। जंगमीति। जंगंति। अनुदात्तेत्यनुनासि कलोपः॥ जङ्गतः। जंग्मति। म्वोश्च॥ जगन्वः॥ ति पाशपानुबन्धेननिर्दिष्टंयद्ग्रणेनच॥ यत्रैकाजग्रहणंचैव

पञ्चैतानिनयङ्लुकि ॥ १ ॥ इतिवचनान्नइएनषेधः । जंगमिता । अनुनासिकलोपस्याभीयत्वेनासिद्धत्वान्नहेर्लुक् ॥ जंगहि । मोनोधातोः । अजंगन् । अजंगमीत् । अनुबन्धनिर्देशान्नाङ्गेरङ् ॥ अजंगमीत् ॥ रुग्रिकौचलुकि ७ ४ ९१ ॥ ऋदुपधस्यधातोरभ्यासस्यरुक्रिक्रीकस्युर्यङ्लुकि ॥ ऋतश्च ७ ४ ९२ ॥ ऋदन्तधातोरपितथा ॥ वर्वृतीति । वरिवृतीति । वरीवृतीति । वर्वर्त्ति । वरिवर्त्ति । वरीवर्त्ति ॥ वर्वृतः ३ । ववृतति ३ । वर्वर्त्तामास ३ । वर्वर्त्तिता ३ । गणनिर्दिष्टत्वान्नवृद्भ्यश्चतुर्भ्यइतिन । वर्वर्तिष्यति ३ । अवर्वृतीत् ३ । अवर्वर्त्३ । सिपिदश्चेतिरुत्वपक्षेरोरि । अवर्वाः३ । गणनिर्दिष्टत्वादङ्न । अवर्वर्तीत् ३ । चर्करीति । चरिकरीति । चरीकरीति । चर्कर्ति । चरिकर्त्ति । चरीकर्त्ति । चर्कृतः ३ । चर्क्रति३ । चर्कराञ्चकार३ । चर्करिता३ । अचर्करीत् ३ । अचर्कः३ । चर्कृयात् ३ । आशिषिरिङ् । चाक्रियात् ३ । अचर्कारीत् ३ । ऋतश्चेतितपरत्वान्नेह ॥ चाकर्त्ति । चाकरीति । चाकीर्त्तः । चाकिरति । चाकीर्हि । चाकराणि । अचाकरीत् । अचाकः । अचाकीर्त्तां । अचाकरुः । अचाकारीत् । अचाकारिष्टां । तातरीति । तातर्त्तीत्यादि ॥ इतियङ्लुगन्ताः ॥ सुपआत्मनःक्यच् ३ १ ८ ॥ इषिकर्मणएषितुरात्मसंबंधिनःसुबन्तादिच्छायामर्थेक्यज्वा ॥ सुपोधातुप्रातिपदिकयोः २ ४ ७१ ॥ एतयोरवयवस्यसुपोलुक्स्यात् ॥ क्यचिच ७ ४ ३३ ॥ अवर्णस्यईः ॥ आत्मनःपुत्रमिच्छतितपुत्रीयति ।

मान्तप्रकृतिकसुवन्तादव्ययाच्चक्यच् ॥ किमिच्छति ॥ इदमिच्छति । स्वरिच्छति ॥ अशनायोदन्यधनायाबुभुक्षापिपासागर्द्धेषु ७ ४ ३४ ॥ एतेक्यजन्तानिपात्यंते ॥ अशनायति । उदन्यति । धनायति । बुभुक्षादौकिं ॥ अशनीयति । उदकीयति । धनीयति ॥ अश्वक्षीरवृषलवणानामात्मप्रीतौक्यचि ७ १ ५१ ॥ एषांक्यच्यसुक् । अश्ववृषयोर्मैथुनेच्छायां ॥ अश्वस्यतिवडवा । वृषस्यतिगौः । क्षीरलवणयोर्लालसायां ॥ क्षीरस्यति । बालः । लवणस्यतिउष्ट्रः । सर्वप्रातिपदिकानांक्यचिलालसायांसुगसुकौ ॥ दधिस्यति । दध्यस्यति । नःक्ये १ ४ १५ ॥ क्यचिक्यङिचनांतमेवपदंनान्यत् ॥ राजीयति । नांतमेवेतिकिं । वाच्यति । हलिच ॥ गीर्यति । पूर्यति । धातोरित्येव । तेनेह न । दिवमिच्छतिदिव्यति ॥ क्यस्यविभाषा ६ ४ ५० ॥ हलःपरयोःक्यच्क्यङोर्लोपोवार्द्धधातुके । आदेःपरस्य ॥ अतोलोपः ॥ तस्यस्थानिवद्भावान्नोपधायागुणः । समिधिता । समिध्यिता ॥ काम्यच्च ३ १ ९ ॥ उक्तविषयेकाम्यच् ॥ पुत्रमात्मनइच्छतिपुत्रकाम्यति । पुत्रकाम्यिता ॥ उपमानादाचारे ३ १ १० ॥ उपमानात्कर्मणःसुबन्तादाचारेर्थेक्यच् ॥ पुत्रमिवाचरतिपुत्रीयतिछात्रं । विष्णूयतिद्विजं ॥ सर्वप्रातिपदिकेभ्यःक्विब्वावक्तव्यः ॥ अतोगुणे । कृष्णइवाचरति । कृष्णति । स्वइवाचरति स्वति । सस्वौ ॥ अनुनासिकस्यक्विझलोःक्ङिति ६ ४ १५ अनुनासिकांतस्योपधायादीर्घःक्वौझलादौक्ङितिच।

इदामिवाचरति । इदामति ॥ राजेवाचरति । राजानति इन्हन्निति नियमान्नेहोपधायादीर्घः ॥ पन्थाइवाचरति । पथेनति । मथेनति ॥ कर्त्तुःक्यङ्सलोपश्च ३ १ ११ ॥ उपमानात्कर्त्तुःसुबन्तादाचारेर्थेक्यङ्वासांतकर्त्तृवाचकस्यलोपोवा ॥ क्यङ्वेत्युक्तेपक्षेवाक्यं । सन्नियोगशिष्टानांसहवाप्रवृत्तिःसहवानिवृत्तिरितिक्यङ्सलोपयोःसहैव प्रवृत्तिः ॥ लोपश्चव्यवस्थितः ॥ ओजसोप्सरसोनित्यमितरेषांविभाषया ॥ कृष्णइवाचरतिकृष्णायते । ओजायते । अप्सरायते । यशायते । यशस्यते । विद्वायते । विद्वस्यते । आचार्य्यवगल्भक्लीवहोडेभ्यःक्विप्वावक्तव्यः । वाग्रहणाद्वाक्यमपि । अवगल्भादयःपचाद्यजंताः । क्विप्सन्नियोगेनानुदात्तत्वमनुनासिकत्वंचाच्प्रत्ययस्यप्रतिज्ञायते । तेनतङ् । अवगल्भते । क्लीवते । होडते । भूतपूर्वादप्यनेकाचआम् । एतद्वार्त्तिकारंभसामर्थ्यात् ॥ अवगल्भाञ्चक्रे । क्लीवाञ्चक्रे । होडाञ्चक्रे । उपसर्गसमानाकारंपूर्वपदंधातुसंज्ञाप्रयोजकेप्रत्ययेचिकीर्षितेपृथक्क्रियते । तेनगल्भशब्दात्प्रागट् । अवागल्भत । अवागल्भिष्ट ॥ लोहितादिडाज्भ्यःक्यष् ३ १ १३ ॥ वाक्यषः १ ३ ९० ॥ क्यषन्तात्परस्मैपदम् ॥ अलोहितोलोहितोभवति । लोहितायति । लोहितायते । ननुआरणसामर्थ्यात्काम्यचइवक्यषोपिककारःकुतोनश्रूयते । तस्यभाष्येप्रत्याख्यानात् ॥ पटपटायते । पटपटायते ॥ कष्टायक्रमणे ३ १ १४ ॥ चतुर्थ्यन्तात्कष्टशब्दादुत्साहेर्थेक्यङ् ॥ कष्टायक्रमते । कष्टाय

ते । पापंकर्त्तुमुत्सहतइत्यर्थः । सत्रकक्षकष्टकृच्छ्रगह नेभ्यःकण्वचिकीर्षायां ॥ कण्वंपापंचिकीर्षतिसत्रायते । कक्षायते ॥ कर्मणोरोमंथतपोभ्यांवर्त्तिचरोः ३ १ १५ ॥ कर्मीभूताभ्यांरोमंथतपोभ्यांक्रमेणवर्त्तनायाञ्चरणेचार्थेक्य ङ्स्यात् ॥ रोमंथंवर्त्तयतिरोमंथायते । हनुचलनइति वाच्यं ॥ चर्वितस्याकृष्यपुनश्चर्वणमित्यर्थः । नेह । की टोरोमंथंवर्त्तयति । तपसःपरस्मैपदंच ॥ तपश्चरतित पस्यति ॥ वाष्पोष्मभ्यामुद्वमने ३ १ १६ ॥ वाष्पमुद्व मतिवाष्पायते । उष्मायते । फेनाच्चेतिवक्तव्यं ॥ फेना यते ॥ शब्दवैरकलहाभ्रकण्वमेघेभ्यःकरणे ३ १ १७ ॥ एभ्यःकर्मभ्यःकरोत्यर्थेक्यङ् ॥ शब्दंकरोतिशब्दायते ॥ सुदिनदुर्दिननीहारेभ्यश्च ॥ सुदिनायते । दुर्दिनायते । नीहारायते । प्रातिपदिकाद्धात्वर्थेबहुलमिष्टवच्च ॥ प्रा तिपदिकाद्धात्वर्थे णिच्स्यादिष्टेयथाप्रातिपदिकस्यपुंव द्भावरभावटिलोपविन्मतुब्लोपयणादिलोपप्रस्थस्फाद्या देशभसंज्ञास्तद्वणावपिस्युः ॥ पटुमाचष्टेपटयति ॥ प रत्वाद्वृद्धौसत्यांटिलोपः । अपीपटत् । णौचङीत्यत्र भाष्येतुवृद्धेर्लोपोबलीयानितिस्थितं । अपपटत् ॥ पु च्छभाण्डचीवराण्णिङ् ३ १ २० ॥ पुच्छादुदसने व्यसने पर्यसनेच ॥ विविधंविरुद्धंचोरक्षपणंव्यसनं ॥ उत्पु च्छयते । परिपुच्छयते । भांडात्समाचयने । संभांडय ते । समबभांडत ॥ चीवरादर्जनेपरिधानेच ॥ संची वरयतेभिक्षुः ॥ मुंडमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृ ततूस्तेभ्योणिच् ३ १ २१ ॥ कृञर्थे । मुंडंकरोतिमुंडय

ति । व्रताद्भोजनतन्निवृत्त्योः ॥ पयःशूद्रान्नंवाव्रतयति ।
वस्त्रात्समाच्छादने । संवस्त्रयति । हल्यादिल्योग्रहणे ॥
हलिकल्योरदन्तत्वंचनिपात्यते ॥ हलिंवागृह्णातिहलय
ति । कलयति । महद्धलंहलिः । कृतंगृह्णातिकृतयति ।
तूस्तानिविनिहन्तिवितूस्तयति । तूस्तंकेशइत्येके । ज
टीभूताःकेशाइत्यन्ये पापमित्यपरे । सत्यार्थवेदानामा
पुगूवक्तव्यः । सत्यापयति । अर्थापयति । वेदापय
ति । पाशंविमुंचतिविपाशयति । रूपंपश्यतिरूपय
ति । विणयोपगायतिउपवीणयति । तूलेनानुकुष्णात्य
नुतूलयति । तृणाग्रंतूलेनानुघर्षयतीत्यर्थः । श्लोकैरुप
स्तौत्युपश्लोकयति । सेनयाभियातिअभिषेणयति ।
लोमान्यनुमार्ष्टिअनुलोमयति । त्वचसंवरणे । पचाद्यच् ।
त्वचंगृह्णातित्वचयति । वर्मणासंनह्यतिसंवर्मयति ।
वर्णंगृह्णातिवर्णयति । चूर्णैरवध्वंसतिअवचूर्णयति ॥
इतिनामधातुप्रक्रिया ॥ कण्ड्वादिभ्योयक् । ३ । १
२७ ॥ ॥ एभ्योधातुभ्योनित्यंयक्स्यात् स्वार्थे ॥ कण्डू
ञ् गात्रविघर्षणे । कण्डूयति । कण्डूयते । इत्यादि ।
कर्त्तरिकर्मव्यतिहारे १ ३ १४ ॥ क्रियाविनिमयेद्योत्ये
कर्तर्यात्मनेपदंस्यात् ॥ व्यतिलुनीते । अन्यस्ययोग्यंलव
नंकरोतीत्यर्थः ॥ नगतिहिंसार्थेभ्यः १ ३ १५ ॥ व्यतिग
च्छन्ति । व्यतिघ्नन्ति । हरतेरप्रतिषेधः ॥ संप्रहरंतेराजानः ॥
इतरेतरान्योन्योपपदाच्च १ ३ १६ ॥ परस्परोपपदाच्चे
तिवक्तव्यं ॥ इतरेतरस्यान्योन्यस्यपरस्परस्यवाव्यतिलु
नन्ति ॥ नेर्विशः १ ३ १७ ॥ निविशते ॥ परिव्यवे

भ्यः क्रियः । १ ३ १८ ॥ परिक्रीणीते ॥ विक्रीणीते । अवक्रीणीते ॥ विपराभ्यांजेः १ ३ १९ ॥ विजयते । पराजयते ॥ क्रीडोनुसंपरिभ्यश्च १ ३ २१ ॥ चादाङः । अनुक्रीडते । संक्रीडते । आक्रीडते । समोऽकूजने ॥ संक्रीडते । कूजनेतुसंक्रीडतिचक्रं । आगमेःक्षमायां ॥ णयंतस्येदंग्रहणं ॥ आगमयस्वतावत् ॥ मात्वरिष्ठाइत्यर्थः ॥ शिक्षेर्जिज्ञासायां ॥ धनुषिशिक्षते । धनुर्विषयज्ञानेशक्तोभवितुमिच्छतीत्यर्थः ॥ वृत्तिसर्गतायनेषुक्रमः १ ३ ३९ ॥ वृत्तिरप्रतिबन्धः ॥ ऋचिक्रमतेबुद्धिः । सर्गउत्साहः । अध्ययनायक्रमते । क्रमंतेस्मिञ्छास्त्राणि । स्फीतानिभवन्तीत्यर्थः ॥ आङउद्गमने १ ३ ४० ॥ आक्रमतेसूर्यः ॥ ज्योतिरुद्गमनइतिवाच्यम् ॥ नेह । आक्रामतिधूमोहर्म्यतलात् ॥ वेःपादविहरणे १ ३ ४१ ॥ साधुविक्रमतेवाजी ॥ प्रोपाभ्यांसमर्थाभ्यां १ ३ ४२ ॥ प्रारंभेऽनयोस्तुल्यार्थता ॥ प्रक्रमते । उपक्रमते ॥ समर्थाभ्यांकिं । प्रक्रामति । गच्छतीत्यर्थः । उपक्रामति । आगच्छतीत्यर्थः ॥ अनुपसर्गाद्वा १ ३ ४३ ॥ क्रामति । क्रमते ॥ अपह्नवेज्ञः १ ३ ४४ ॥ शतमपजानीते । अपलपतीत्यर्थः ॥ अकर्मकाच्च १ ३ ४५ ॥ सर्पिषोजानीते ॥ सर्पिषोपायेनप्रवर्तत्तइत्यर्थः ॥ समवप्रविभ्यःस्थः १ ३ २२ ॥ संतिष्ठते । अवतिष्ठते । प्रतिष्ठते । वितिष्ठते । आङःप्रतिज्ञायां ॥ शब्दंनित्यमातिष्ठते ॥ प्रकाशनस्थेयाख्ययोश्च १ ३ २३ ॥ गोपीकृष्णायतिष्ठते ॥ आशयंप्रकाशतीत्यर्थः । संशय्यकर्णादिषुतिष्ठतेयः ॥ क

र्णादीन्निर्णेतृत्वेनाश्रयतीत्यर्थः ॥ उदोनूर्ध्वकर्मणि १ ३ २४ ॥ मुक्तावुत्तिष्ठते। अनूर्ध्वेतिकिं। पीठादुत्तिष्ठति॥ उपान्मंत्रकरणे १ ३ २५ ॥ आग्नेय्याग्नीध्रमुपतिष्ठते। मंत्रकरणेकिम् ॥ भर्त्तारमुपतिष्ठतियौवनेन। उपाद्देव पूजासंगतिकरणमित्रकरणपथिष्विति वाच्यम् ॥ आदि त्यमुपतिष्ठते। गंगायमुनामुपतिष्ठते। रथिकानुपति ष्ठते। मित्रीकरोतीत्यर्थः। पंथाःस्रुघ्नमुपतिष्ठते। प्राप्नोतीत्यर्थः ॥ वालिप्सायाम् ॥ भिक्षुकःप्रभुमुपतिष्ठ तिउपतिष्ठतेवा ॥ उद्विभ्यांतपः १ ३ २७ ॥ अकर्म कादित्येव। उत्तपते ॥ वितपते। दीप्यतइत्यर्थः। स्वांगकर्मकाच्चेतिवक्तव्यम् ॥ उत्तपते। वितपतेपाणिं। नेह। सुवर्णमुत्तपति ॥ आङोयमहनः १ ३ २८ ॥ आयच्छते। आहते। अकर्मकात्स्वांगकर्मकादित्येव। नेह। परस्यशिरआहन्ति ॥ आत्मनेपदेष्वन्यतरस्याम् २ ४ ४४ ॥ हनोवधादेशोवालुङि ॥ आवधिष्ट। आ वधिषातां। आवधिषत॥ हनःसिच् १ २ १४ ॥ कित्। अनुनासिकलोपः ॥ आहत। आहसातां। आहसत ॥ यमोगंधने १ २ १५ ॥ सिच्कित्। गंधनंसूचनंपरदो षाविष्करणं ॥ उदायत। गंधनेकिं। उदायंस्तपादम्। आकृष्टवानित्यर्थः ॥ समोगम्यृच्छिभ्याम् १ ३ २९ अक र्मकाभ्यामित्येव। संगच्छते ॥ वागमः १ २ १३॥ गमःपरौ झलादीलिङ्सिचौवाकितौस्तः ॥ संगसीष्ट। संगंसीष्ट। स मगत। समगंस्त। समृच्छते। अकर्मकाभ्यांकिम् ॥ ग्रा मंसंगच्छति। विदिप्रच्छिस्वरतीनामुपसंख्यानम् ॥ वे

त्तेरेयग्रहणं । संवित्ते । संविदाते ॥ वेत्तेर्विभाषा ७ १ ७ ॥ वेत्तेःपरस्यझ्रादेशस्यातोरुडागमोवा। संविद्रते। संविदते. संपृच्छते। संस्वरते। अथास्मिन्नकर्मकाधिकारेहनिगम्यादीनांकथमकर्मतेतिचेत् । शृणु । धातोरर्थान्तरेवृत्तेर्धात्वर्थेनोपसंग्रहात् ॥ प्रसिद्धेरविवक्षातःकर्मणोऽकर्मिकाक्रिया ॥१॥ वहतिभारं। नदीवहति। स्यंदतइत्यर्थः। जीवति । नृत्यति । प्रसिद्धेर्यथा । मेघोवर्षति । कर्मणोऽविवक्षातोयथा । हितान्नयःसंशृणुतेसकिंप्रभुः ॥ संमाननोत्संजनाचार्यकरणज्ञानभृतिविगणनव्ययेषुनियः १ ३ ३६ ॥ शास्त्रेनयते । दण्डमुन्नयते । उत्क्षिपतीत्यर्थः । माणवकमुपनयते । तत्वन्नयते । कर्मकरानुपनयते। करंविनयते। राज्ञेदेयंभागम्परिशोधयतीत्यर्थः। शतंविनयते । धर्मार्थेविनियुंक्तेइत्यर्थः। उपसर्गादस्यत्यूह्योर्वेतिवाच्यम् ॥ वंधन्निरस्यतिनिरस्यते। समूहति। समूहते॥ उपसर्गाद्ध्रस्वऊहतेः ७ ४ २३ ॥ यादौक्ङिति। ब्रह्मसमुह्यात्। अग्निंसमुह्य॥ निसमुपविभ्योह्वः १ ३ ३० ॥ निह्वयते॥ स्पर्द्धायामाङः १ ३ ३१ ॥ कृष्णश्चाणूरमाह्वयते । स्पर्द्धायांकिं । पुत्रमाह्वयति ॥ उदश्चरःसकर्मकात् १ ३ ५३ ॥ धर्ममुच्चरते। उल्लंघ्यगच्छतीत्यर्थः ॥ समस्तृतीयायुक्तात् १ ३ ५४ ॥ रथेनसंचरते ॥ दाणश्चसाचेच्चतुर्थ्यर्थे १ ३ ५५ ॥ समोदाणस्तृतीयांतेनयुक्तादुक्तंस्यात्तृतीयाचेच्चतुर्थ्यर्थे ॥ दास्यासंयच्छतेकामी॥ उपाद्यमःस्वकरणे १ ३ ५६ ॥ स्वकरणंस्वीकारः । भार्यामुपयच्छते ॥ विभाषोपयमने १ २ १६ ॥ यमः

सिचूकिद्वाविवाहेर्थे ॥ रामःसीतामुपायत । उपायंस्त वा । उदवोढेत्यर्थः ॥ ज्ञाश्रुस्मृदृशांसनः १ ३ ५७ ॥ सन्नंतानामेषांप्राग्वत् । धर्मंजिज्ञासते । शुश्रूषते । सुस्मूर्षते । दिदृक्षते ॥ नाऽनोर्ज्ञः १ ३ ५८ ॥ पुत्रमनुजिज्ञासति ॥ प्रोपाभ्यांयुजेरयज्ञपात्रेषु १ ३ ६४ ॥ प्रयुंक्ते । उपयुंक्ते । स्वराद्यन्तोपसर्गादितिवाच्यं ॥ उद्युंक्ते। नियुंक्ते । अयज्ञपात्रेषुकिं । द्वन्द्वंन्यंचिपात्राणि प्रयुनक्ति ॥ समःक्ष्णुवः १ ३ ३३ ॥ संक्ष्णुतेशस्त्रम् ॥ गंधनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषुकृञः १ ३ ३२ ॥ गन्धनंहिंसा । उत्कुरुते । सूचयतीत्यर्थः । अवक्षेपणंभर्त्सनं । श्येनोवर्त्तिकामुदाकुरुते । भर्त्सयतइत्यर्थः । हरिमुपकुरुते । सेवते । परदारान्प्रकुरुते । तेषुसहसाप्रवर्त्तते । एधोदकस्योपस्कुरुते । गुणमाधत्ते । कथाःप्रकुरुते । प्रकथयतीत्यर्थः । शतंप्रकुरुते । धर्मार्थंविनियुंक्ते । एषुकिम् ॥ कटंकरोति ॥ इत्यात्मनेपदप्रक्रिया ॥ ॥ शेषात्कर्त्तरिपरस्मैपदम् ॥ श्वि । श्वयति ॥ विभाषाश्वेः ६ १ ३० ॥ संप्रसारणम् लिटियङिच । शुशाव । शुशुवतुः । श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेधः ॥ शिश्वाय । शिश्वियतुः । शिश्वियुः । शूयात् । जृस्तंभ्वित्यङ्वा ॥ श्वयतेरः ७ ४ १८ ॥ अङि । अश्वत् । अश्वः । विभाषेतिचङ् । अशिश्वियत् । अश्वयीत् ॥ अनुपराभ्यांकृञः १ ३ ७९ ॥ कर्तृगेफलेगन्धनादौचपरस्मैपदंस्यात् ॥ अनुकरोति । पराकरोति ॥ अभिप्रत्यतिभ्यःक्षिपः १ ३ ८० ॥ क्षि

प्रेरणे । स्वरितेत् । अभिक्षिपति ॥ प्राद्वहः १ ३ ८१ प्रवहति ॥ परेर्मृषः १ ३ ८२ परिमृष्यति ॥ व्याङ्परिभ्यो रमः १ ३ ८३ ॥ विरमति । आरमति ॥ उपाच्च १ ३ ८४ यज्ञदत्तमुपरमति । उपरमयतीत्यर्थः । अन्तर्भावित ण्यर्थोयम् ॥ विभाषाऽकर्मकात् १ ३ ८५ ॥ उपाद्र मेःपरस्मैपदंवास्यात् ॥ उपरमति । उपरमते । निवर्त तइत्यर्थः ॥ बुधयुधनशजनेङ्प्रुद्रुस्रुभ्योणेः १ ३ ८६ ॥ एभ्योण्यन्तेभ्यःपरस्मैपदंस्यात् । णिचश्चेत्यस्यापवादः । बोधयतिपद्मं । योधयतिकाष्ठानि । नाशयतिदुःखं । जनयतिसुखं । प्रावयति । प्रापयतीत्यर्थः । द्रावय ति । स्रावयति ॥ क्रीङ्जीनांणौ ६ १ ४८ ॥ आत्वं स्यात् । अध्यापयति ॥ णौचसंश्चङोः २ ४ ५१ ॥ स न्परेचङ्परेणौइङोगाङ्वा ॥ अध्यजीगपत् ॥ अध्या पिपत् । क्रापयति । जापयति ॥ निगरणचलनार्थेभ्य श्च १ ३ ८७ ॥ निगारयति । चलयति । अदेःप्रतिषेधः । आदयतेदेवदत्तेन ॥ अणावकर्म्मकाच्चित्तवत्कर्त्तृकात् । १ ३ ८८ ॥ ण्यन्तात्परस्मैपदम् ॥ शेतेकृष्णस्तंगोपी शाययति ॥ नपादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदव सः १ ३ ८९ ॥ एभ्योण्यन्तेभ्यःपरस्मैपदन्न ॥ पायय ते । दमयते । आयामयते । आयासयते । परिमोह यते । रोचयते । नर्तयते । वादयते । वासयते । धे टउपसंख्यानम् ॥ धापयते । अकर्त्रभिप्रायेशेषादितिपर स्मैपदंस्यादेव । वत्सान्पाययतिपयः ॥ इतिपदव्यवस्था ॥ भावकर्म्मणोः १ ३ १३ ॥ लस्यतङानौस्तः ॥ सार्वधातु

केयक् ३ १ ६७ ॥ भावकर्म्मणोर्वाचिनिसार्वधातुकेधातो र्यक्स्यात् ॥ भावःक्रिया । साचभावार्थकलकारेणानू द्यते । युष्मदस्मद्भ्यांसामानाधिकरण्याऽभावात्प्रथमपुरु षः ॥ लिङ्वाच्यक्रियायाश्चद्रव्यरूपत्वेनद्वित्वाद्यप्रतीते र्नद्विवचनादिकम् । किन्तु एकवचनमेवोत्सर्गतः ॥ त्व यामयाञ्चन्यैश्चभूयते । वभूवे ॥ स्यसिच्सीयुट्तासि षुभावकर्मणोरुपदेशेज्झनग्रहदृशांवाचिण्वदिट्च ६ ४ ६२ ॥ उपदेशेयोच्तदन्तानांहनादीनांचचिणीवांगका र्यंवास्यात्स्यादिषुभावकर्मणोर्गम्यमानयोःस्यादीनामि डागमश्च । चिण्वद्भावपक्षेअयमिट् ॥ चिण्वद्भावादृवृ द्धिः । भाविता । भविता । भाविष्यते । भविष्यते । भूयताम् । अभूयत । भूयेत । भाविषीष्ट । भविषीष्ट ॥ चिराभावकर्मणोः ३ १ ६६ ॥ च्लेश्चिण्स्याद्भावकर्मवा चितपरे । अभावि । अभाविष्यत । अकर्मकोऽप्युपस र्गवशात्सकर्मकः । अनुभूयतेआनंदश्चैत्रेणत्वयामयाच । अनुभूयेते । अनुभूयन्ते । त्वंअनुभूयसे । अहंअनुभू ये । अन्वभावि । अन्वभाविषातां । अन्वभविषातां । णिलोपः । भाव्यते । भावयाञ्चक्रे । भावयांवभूवे । भावयामासे । चिरावदिटआभियत्वेनासिद्धत्वान्निलो पः । भावयिष्यते । भाविष्यते । भाव्यतां । अभाव्य त । भाव्येत । भावयिषिष्ट । भाविषिष्ट । अभावि । अभाविषाताम् ॥ अभावयिषाताम् ॥ वुभूष्यते ॥ वुभूषाञ्चक्रे । वुभूषिता । वुभूषिष्यते । वोभूयते । अकृत्सार्वधातुकेतिदीर्घः । स्तूयतेविष्णुः । स्ताविता ।

स्तोता । स्ताविष्यते । स्तोष्यते । अस्तावि । अस्ता विषातां । अस्तोषातां । गुणोर्तीतिगुणः स्मर्यते । स्मर्यते । ऋच्छत्यृतामितिगुणः । आरे । सस्मरे । उप देशग्रहणाच्चिरावदिट् । आरिता । अर्ता । स्मारिता । स्मर्ता । नलोपः । स्रस्यते । सस्रंसे । इदितस्तु । नंद्यते । इज्यते ॥ तनोतेर्यकि ६ ४ ४४ ॥ आदंतादेशोवास्यात् । तायते । तन्यते ॥ तपोनुतापेच ३ १ ६५ ॥ च्लेश्चि णनकर्मकर्त्तरिअनुतापेच । अन्वतप्तपापेन । घुमास्थेतीत्वं । दीयते । धीयते । ददे । दधे ॥ आतोयुक्चिण्कृतोः ७ ३ ३३ ॥ आदन्तानांयुगागमश्चिणिञ्णितिकृतिच । दायिता । दाता । दायिषिष्ट । दासीष्ट । अदायि । अदायिषातां । अदिषातां ॥ शम्यतेमोहोमुकुंदेन ॥ चिणमुलोर्दीर्घोन्यतरस्यां ६ ४ ९३ ॥ चिणपरेणमुलप रेचणौमितामुपधायादीर्घोवा । शामिता । शमिता । शमयिता । शामिष्यते । शमिष्यते । शमयिष्यते । ण्यंतत्वाभावेशम्यतेमुनिना॥नोदात्तोपदेशस्यमान्तस्या नाचमेः ७ ३ ३४ ॥ उपधायावृद्धिर्नस्याच्चिणिञ्णितिकृतिच । अशमि । अदमि । उदात्तोपदेशस्येतिकिं । अगा मि । मान्तस्येतिकिं । अवादि । अनाचमेतिकिं । आचामि । अनाचमिकमिवमीनामितिवक्तव्यम् । अकामि । अवामि ॥ भंजेश्चचिणि ६ ४ ३३ ॥ नलोपोवा । अभाजि । अभंजि । लभ्यते ॥ विभाषाचिणमुलोः ७ १ ६९ ॥ लभेर्नुम् । अलंभि । अलाभि । यदाकर्मैवकर्त्तृत्वेनवि वक्षितन्तदासकर्मकाणामपिअकर्मत्वात्कर्त्तरिभावेचलः

कर्मवत्कर्मणातुल्यक्रियः ३ १ ८७ ॥ कार्यातिदेशोयं। कर्मस्थयाक्रिययातुल्यक्रियःकर्त्ताकर्मवत् ॥ तेनयगात्मनेपदंचिण्चिण्वदिट्चस्युः। पच्यतेफलम्। भिद्यतेकाष्ठं। अपाचि। अभेदि। भावेतुभिद्यतेकाष्ठेन। भूषावाचीनांकिरादीनांसन्नंतानांचयक्चिणौचिण्वदिट्चनेतिवक्तव्यम्। अलंकुरुतेकन्या। अलमकृत। अवकिरतेहस्ती। अवाकीर्ष्ट। अवाकरिष्ट। गिरते। अगीर्ष्ट। अगरिष्ट। आद्रियते। आदृत। किरादिस्तुदाद्यंतर्गणः। चिकीर्षतेकटः। अचिकीर्षिष्ट ॥ तपस्तपःकर्मकस्यैव ३ १ ८८ ॥ कर्त्ताकर्मवत्। तप्यतेतपस्तापसः। अर्जयतीत्यर्थः। अतप्त। तपःकर्मकस्यैवेतिकिम्। उत्तपतिसुवर्णंसुवर्णकारः। सकर्मकाणांप्रतिषेधोवक्तव्यः। अजाग्रामंनयति। दुहिपच्योर्बहुलंसकर्मकयोरितिवाच्यं ॥ नदुहस्नुनमांयक्चिणौ ३ १ ८९ एषांकर्मकर्त्तरियक्चिणौन। शप्। तस्यलुक्। गौःपयोदुग्धे ॥ अचःकर्मकर्त्तरि ३ १ ६२ ॥ अजंताच्चूल्नेश्चिण्वाकर्मकर्त्तरितपरे। अकारि। अकृत ॥ दुहश्च ३ १ ६३ ॥ तथा। अदोहि। अदुग्ध। लुग्वेतिक्सस्यलुक्पक्षेयं। अधुक्षत। उदुंबरःफलंपच्यते ॥ कुषिरंजोःप्राचांश्यन्परस्मैपदंच ३ १ ९० ॥ अनयोःकर्मकर्त्तरिनयक्किन्तुश्यन्परस्मैपदंचात्मनेपदापवादः। कुष्यतिकुष्यतेपादः। रज्यतिरज्यतेवस्त्रम् यगविषयेतुनास्यप्रवृत्तिः। कोषिषीष्ट। रंक्षीष्ट ॥ इतिभावकर्मप्रक्रिया ॥

अभिज्ञावचनेलृट् ३ २ १०२ ॥ स्मृतिबोधिन्युपपदे

भूतानद्यतनेधातोर्लृट् लङोपवादः। वसनिवासे। स्मरसि कृष्णगोकुलेवत्स्यामः। एवंबुध्यसेचेतयसेइत्यादिप्रयोगे पि॥ नयदि ३ २ १०३॥ यद्योगेउक्तन्न। अभिजानासि यद्वनेअभुञ्ज्महि॥ विभाषासाकांक्षे ३ २ ११४॥ उक्त विषयेलृड्वा। लक्ष्यलक्षणभावेनसाकांक्षश्चेद्धात्वर्थः। स्मरसिकृष्णवनेवत्स्यामस्तत्रगाश्चारयिष्यामः। वासोल क्षणंचारणंलक्ष्यम्। पक्षेलङ्। परोक्षेलिट्। चकार। उत्तमपुरुषेचित्तविक्षेपादिनापारोक्ष्यं। सुप्तोहंकिलविल लाप। अत्यन्तापह्नवेलिड्वक्तव्यः। कलिङ्गेष्ववात्सीः॥ नाहंकलिंगान्जगाम॥ प्रश्नेचासन्नकाले ३ २ ११७॥ पृच्छमानेर्थेलिड्विषयेलङ्लिटौस्तश्चासन्नकाले। अग च्छत्किम्। जगामकिम्॥ लट्स्मे ३ २ ११८॥ लि टोपवादः। यजतिस्मयुधिष्ठिरः॥ अपरोक्षेच ३ २ ११९॥ भूतानद्यतनेलट्स्यात्स्मयोगे। एवंस्मपिताब्र वीति॥ ननौपृष्टप्रतिवचने ३ २ १२०॥ भूतेलट्। अकार्षीःकिम्। ननुकरोमिभो॥ नन्वोर्विभाषा। ३ २ १२१॥ अकार्षीःकिम्। नकरोमि। नाकार्षम्। अहंनु करोमि। अहंन्वकार्षम्॥ पुरिलुङ्चास्मे ३ २ १२२॥ पुरायोगेभूतानद्यतनेवालुङ्चाल्लट्नतुस्मयोगे। पक्षेय थाप्राप्तम्। वसन्तीहपुराछात्राः। अवात्सुः। अवस न्। उपुर्वा॥ अस्मइतिकिम्। यजतिस्मपुरा। भवि ष्यतीत्यनुवर्त्तमाने॥ यावत्पुरानिपातयोर्लट् ३ ३ ४॥ यावद्भुंक्ते। पुराभुंक्ते। निपातयोःकिम्। यावद्दास्य ते। तावद्भोक्षते। करणभूतयापुरायास्यति। विभाषाक

दाकर्ह्योः ३ ३ ५ ॥ लट्स्यात् । कदाकर्हिवाभुंक्ते भोक्ष्य तेभोक्तावा ॥ वर्त्तमानसमीप्येवर्त्तमानवद्वा ३ ३ १३१ ॥ वर्त्तमानेयेप्रत्ययाउक्तास्तेवर्त्तमानसमीपेभूते भविष्यति चवास्युः । कदाआगतोसि । अयंआगच्छामि । आग मंवा । कदागमिष्यसि । एषगच्छामि । एषगमिष्यामि वा ॥ आशंसायाभूतवच्च ३ ३ १३१ ॥ भविष्यत्काले भूतवद्वर्त्तमानवच्चप्रत्ययावास्युराशंसायां । देवश्चेद्वर्षी द्वर्षतिवर्षिष्यतिवाधान्यमवापस्मवपाम वपामोवा ॥ क्षिप्रवचनेलृट् ३ ३ १३२ ॥ क्षिप्रपर्यायोपपदेपूर्वावि षयेलृट् । वृष्टिश्चेत्क्षिप्रमाशुत्वरितंवाआयास्यतिशी घ्रंवप्स्यामः ॥ आशंसावचनेलिङ् ३ ३ १३४ ॥ आशं सावाचिन्युपपदेभविष्यतिलिङ्स्यान्नभूतवत् । गुरुश्चे दुपेयादासंसेअधीयीय ॥ हेतुहेतुमतोर्लिङ् ३ ३ १५६ वास्यात् । कृष्णंनमेच्चेत्सुखंयायात् । कृष्णंनंस्यतिचे त्सुखंयास्यति । भविष्यत्येवेष्यते । नेह । हन्तीति पलायते ॥ इच्छार्थेषुलिङ्लोटौ ३ ३ १५७ ॥ इच्छामि भुंजीतभुंक्तांवाभवान् । एवङ्कामयेप्रार्थये । कामप्रवेश नइतिवक्तव्यम् ॥ नेह । इच्छन्करोति ॥ लिङ्च । ३ ३ १५८ ॥ समानकर्तृकेषुइच्छार्थेषु ॥ भुंजीयेतीच्छति । वि धिनिमंत्रणेतिलिङ् । विधिःप्रेरणं । भृत्यादेर्निकृष्टस्य प्रवर्तनम् । यजेत । निमंत्रणंनियोगकरणं । आवश्यके श्राद्धभोजनादौदौहित्रादेः प्रवर्तनं । इहभुंजीत । आमं त्रणंकामचारानुज्ञा । इहआसीत । अधीष्टः सत्कार पूर्वकोव्यापारः । पुत्रमध्यापयेत् । संप्रश्नः संप्रधारणं ।

किम्भोवेदमधीयीयउततर्कम् । प्रार्थनंयाञ्चा । भोभो जनंलभेय । एवंलोट् ॥ प्रैषातिसर्गप्राप्तकालेषुकृत्याश्च ३ ३ १६३ ॥ प्रैषोविधिः अतिसर्गःकामचारानुज्ञा । भवतायष्टव्यम् । चाल्लोटोऽनुकर्षणंप्राप्तकालार्थम् । भवान्यजतां ॥ अर्हेकृत्यतृचश्च ३ ३ १६९ ॥ चाल्लिङ् । त्वङ्कन्यांवहेः ॥ शकिलिङ्च ३ ३ १७२ ॥ शक्तौलिङ्स्याच्चात्कृत्याः । त्वम्भारंवहेः ॥ धातुसंबंधेप्रत्ययाः ३ ४ १ ॥ धात्वर्थानांसंबंधेयत्रकालेप्रत्ययाउक्तास्ततोन्यत्रापिस्युः ॥ तिङन्तवाच्यक्रियायाःप्राधान्यात्तदनुरोधेनगुणभूतक्रियावाचिभ्यः प्रत्ययाः । वसन्ददर्श । भूतेलट् अतीतवासकर्तृकर्तृकन्दर्शनमित्यर्थः । सोमयाज्यस्यपुत्रोभविता । सोमेनयक्ष्यमाणोयः पुत्रस्तत्कर्तृकंभवनम् ॥ क्रियासमभिहारेलोट्लोटोहिस्वौवाचतध्वमोः ३ ४ २ ॥ पौनः पुन्ये भृशार्थेचद्योत्येधातोर्लोट् तस्यचहिस्वौस्तस्तिङामपवादः । तौचहिस्वौक्रमेणपरस्मैपदात्मनेपदसञ्ज्ञौस्तस्तिङ्संज्ञौच । तध्वमोर्विषयेतुहिस्वौवास्तः । पुरुषैकवचनसंज्ञेनानयोरतिदिश्येते हिस्वविधानसामर्थ्यात्तेनसकलपुरुषवचनविषयेपरस्मैपदिभ्योहिः कर्त्तरिआत्मनेपदिभ्यः स्वोभावकर्मकर्तृषु ॥ समुच्चयेन्यतरस्याम् ३ ४ ३ ॥ अनेकक्रियासमुच्चयेद्योत्येप्रागुक्तंवास्यात् ॥ यथाविध्यनुप्रयोगः पूर्वस्मिन् ३ ४ ४ ॥ आद्येलोड्विधाने लोट्प्रकृतिभूतएवधातुरनुप्रयोज्यः ॥ समुच्चयेसामान्यवचनस्य ३ ४ ॥ समुच्चयेलोड्विधौसामान्यार्थस्यधातोरनुप्रयोगः स्यात् । अनुप्रयोगाद्यथायथंलडादयस्तिवादयश्च । ततः

संख्याकालयोः पुरुषविशेषार्थस्यचाभिव्यक्तिः। क्रियास मभिहारेद्वेवाच्ये। याहियाहीतियाति। पुनः पुनरतिशये नवायानंह्यंतस्यार्थः। एककर्तृकंवर्त्तमानंयानंयातीत्यस्य इतिशब्दस्तुअभेदान्वयेतात्पर्यंग्राहयति। एवंयातः। यां ति। याथः। याथ। यातयातेतियूयंयाथ॥ याहियाहीत्य यासीत् यास्यतिवा। अधीष्वाधीष्वेत्यधीते। ध्वंविषयेतु पक्षेग्रधीध्वमधीध्वमिति यूयमधीध्वे। समुच्चयेशक्तून्पि बधानाःखादेत्यभ्यवहरति। ग्रन्नम्भुङ् क्ष्वदाधिकमा स्वादस्वेत्यभ्यवहरते तध्वमोस्तु। पिवतखादतेत्यभ्यव हरथे। भुङ्ग्ध्वमास्वादध्वमित्यभ्यवहरध्वे पक्षेतुहिस्वौ ग्रत्रसमुच्चीयमानविशेषाणामनुप्रयोगार्थेनसामान्येनाभे दान्वयः। पक्षेशक्तून्पिवतिधानाः खादति अन्नंभु ङ्क्तेदाधिकमास्वादते। एतेन पुरीमस्कन्दलुनीहिन न्दनंमुषाणरत्नानिहरामराङ्गनाः। विगृह्यचक्रेनमुचि द्विषावलीग्इत्यमस्वास्थ्यमहर्दिवन्दिवः॥ इतिव्याख्या तम्॥ अवस्कन्दलवनादिरूपाभूतानद्यतपरोक्षाएक कर्तृकाअस्वास्थ्यक्रियेत्यर्थात्॥ इहपुनः पुनरवस्कन्दे त्यादिरर्थइतिव्याख्यानंभ्रममूलकमेव॥ द्वितीयसूत्रेक्रि यासमभिहारेइत्यस्याननुवृत्तेः। लोडन्तस्यद्वित्वापत्ते श्च। पुरीमवस्कन्देत्यादिमध्यमपुरुषैकवचनमित्यपिके षांचिद्भ्रमएव पुरुषवचनसंज्ञेइहनेत्युक्तत्वात्॥ ६३॥ इतिलकारार्थप्रक्रिया ४॥ ६३॥ इतितिङन्तप्रक्रिया॥

॥ समाप्ता जाता॥

॥ श्रीगणेशाय नमः ॥



धातोः ३ १ ९१ । आतृतीयाध्यायान्तं येप्रत्ययास्ते धातोःपरेस्युः । कृदतिङितिकृत्संज्ञा वाऽसरूपोऽस्त्रियाम् ३ १ ९४ । अस्मिन्धात्वधिकारेऽसरूपोपवादः प्रत्यय उत्सर्गस्यवाबाधकःस्त्र्यधिकारोक्तंविना । कृत्याः ३ १ ९५ । ण्वुलूतृचावित्यतःप्राक्कृत्यसंज्ञाःस्युः । कर्तरिकृत् ३ ४ ६७ । इतिप्राप्ते । तयोरेवकृत्यक्तखलर्थाः ३ ४ ७० । एतेभावकर्मणोरेवस्युः । तव्यत्तव्यानीयरः ३ १ ९६ । धातोरेतेस्युः । एधितव्यं । एधनीयंत्वयाभावे औत्सर्गिकमेकवचनंक्लीवत्वंच । चेतव्यश्चयनीयोवा धर्मस्त्वया । केलिमरउपसंख्यानं पचेलिमामाषाः । पक्तव्या इत्यर्थः । भिदेलिमाः शरलाः । कर्मणिप्रत्ययः वसेस्तव्यत्कर्तरिणिच्च वसतीतिवास्तव्यः । कृत्यचः ८ ४ २९ उपसर्गस्थान्निमित्तात्परस्याचउत्तरस्यकृत्स्थस्यनस्यणत्वं — स्यात् । प्रयाणीयं । अचः किं । प्रमग्नः । निर्विण्णस्योपसंख्यानम् ॥ णेर्विभाषा ८ ४ ३० । प्राग्वत् । प्रयापणीयं । प्रयापनीयं । हलश्चेजुपधात् ८ ४ ३१ । हलादेरिजुपधाद्धातोःपरस्यकृन्नस्याचःपरस्यणोवा । प्रकोपणीयम् । प्रकोपनीयं । हलः किं । प्रोहणीयं । इजुपधात्किं । प्रवपणीयं । इजादेःसनुमः ८ ४ ३२ । सनुमश्चेद्भवतिइजा

देर्हलन्ताद्विहितोयःकृत्तत्स्थस्यैव । इखिगतौ । प्रेंखणीयं इजादेः किं मंगिसर्पणे प्रमंगनीयं । वानिंसनिक्षनिन्दा म् ८ ४ ३३ । एषांनस्यणोवाकृति।प्रणिंसितव्यं प्रनिंसितव्यं। नभाभूपूकमिगमिप्यायीवेपाम् ८ ४ ४३ । एभ्यः कृत्स्यणोन । प्रभानीयं । प्रभवनीयं । णयन्तभादीनामुपसंख्यानं। प्रभापनीयं। कृत्यल्युटोवहुलं ३ ३ ११३ ॥ क्वचित्प्रवृत्तिःक्वचिदप्रवृत्तिः। क्वचिद्विभाषाक्वचिदन्यदेव विधेर्विधानंवहुधासमीक्ष्यचतुर्विधंवाहुलकंवदन्ति १ स्नात्यनेनस्नानीयंचूर्णंदीयतेऽस्मैदानीयोविप्रः। ऋदुपधाच्चाकृपिचृतः ३ १ ११० । क्यप्स्यात् वृत्वृत्यम् वृध् वृध्यम् कृपिचृत्योस्तुकल्प्यम्चर्त्यम् अचोयत् ३ १ ९७ । चेयम् जेयम् ईद्यति ६ ४ ६५ । आतः गुणः देयम् ग्लेयम् पोरदुपधात् ३ १ ९८ । पवर्गान्तादुदुपधाद्यत् णयतोपवादः । शप्यम् लभ्यम् आङोयि ७ १ ६५ । आङःपरस्यलभेर्नुम्यादौप्रत्यये आलंभ्योगौः। उपात्प्रशंसायाम् ७ १ ६६। उपलंभ्यः साधुः स्तुतौ किं उपलभ्युंशक्यः उपलभ्यः शकिसहोश्च ३ १ ९९ । शक्यम् सह्यम् गदमदचरयमश्चानुपसर्गे ३ १ १०० । गद्यम् मद्यम् चर्यम् चरेराङिचागुरौ। आचर्य्योदेशः अगुरौकिम् आचार्योगुरुः यम्यम् अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु ३ १ १०१ । अवद्यम् पापम् पण्यंविक्रेयम् शतेनवर्याकन्या वह्यंकरणं ३ १ १०२ । वहंत्यनेनेतिवह्यं शकटं वाह्यमन्यत् । अर्य्यःस्वामिवैश्ययोः ३ १ १०३ । अनयोःकिं आर्य्योब्राह्मणः उपसर्य्याकाल्याप्रजने गर्भग्रह

णेप्राप्तकालांचेदित्यर्थः उपसर्य्यागौः गर्भाधानार्थंवृष
भेणोपगन्तुंयोग्येत्यर्थः प्रजनेकालयेतिकिम् उपसार्य्या
काशी प्राप्तव्येत्यर्थः ञ्जजर्यंसंगतम् ३ १ १०५। विशे
ष्यंचेत् नजीर्यतीत्यजर्य्यंसतांसंगतम् वदःसुपिक्य पूच
३ १ १०६ । चाद्यत् ब्रह्मोद्यम् ब्रह्मवद्यम् भुवोभावे
३ १ १०७। क्यप् ब्रह्मणोभावोब्रह्मभूयम् । हनस्तच
३ १ १०८ । चात्क्यप् ब्रह्मणोहननंब्रह्महत्या एति
स्तुशास्वृदृजुषः क्यप् ३ १ १०९ । ह्रस्वस्यपितिकृति
तुक् ६ १ ७११ । इत्यः स्तुत्यः शिष्यः वृइतिवृञोग्र
हणंनवृङःवृत्यः वृङस्तुवार्याऋत्विजः आदृत्यः जुष्यः
पुनःक्यवुक्तिःपरस्यापिण्यतोबाधनार्था ञ्जवश्यस्तुत्यः
मृजेर्विभाषा ३ १ ११३ ॥ मृजेःक्यब्वा मृज्यःऋहलो
र्ण्यत् ३ १ १२० । ऋवर्णान्ताद्धलन्ताच्चण्यत् चजोः
कुघिण्यतोः ७ ३ ५२ ॥ चजोःकुत्वंघितिण्यतिच नि
ष्ठायामनिटइतिवक्तव्यम् । तेनेहन गर्ज्यम् मार्ग्यः ।
ओरावश्यके ३ १ १२२ ॥ ण्यत् पाव्यम् लुंपेदवश्य
मःकृत्येतुंकाममनसोरपि । समोवाहिततयोर्मांसस्यप–
चियुट्घञोः । ञ्जवश्यलाव्यम् भव्यगेयप्रवचनीयोप
स्थानीयजन्याप्लाव्यापात्यावा ३ ४ ६८॥ एतेकृत्यान्ताः
कर्त्तरिवानिपात्यन्ते भवतीतिभव्यः भव्यमनेनवा। भो
ज्यंभक्ष्ये ७ ३ ६९ भोग्यमन्यत् बचोशब्दसंज्ञायाम् ७ ३ ६७
नकुत्वं वाच्यम् वाक्यमन्यत् । राजसूयसूर्यमृषोद्यरूच्य
कुप्यकृष्टपच्याव्यथ्याः ३ १ ११४ ॥ एते सप्तक्यबन्तानि
पात्यन्ते । भिद्योध्यौनदे २ १ १२५ ॥ नदेकिं भेत्ता

उज्झिता । पुष्यसिध्यौनक्षत्रे ३ १ ११६ । विपूयविनी यजित्यामुञ्जकल्कहलिषु ३ १ ११७ । विपूयोमुञ्जःवि नीयः कल्कः जित्योहलिः । प्रत्यपिभ्यांग्रहेः ३ १ ११८ छ न्दसीतिवक्तव्यम् । प्रतिगृह्यम् अपिगृह्यम् लोकेतु । प्रतिग्राह्यम् अपिग्राह्यम् ॥ पदास्वैरिबाह्यापक्षेषुच ३ १ ११९ ॥ अवगृह्यम् प्रगृह्यम्पदम् । अस्वैरीपरत न्त्रः गृह्यकाश्चुकाः । ग्रामगृह्यासेना आर्यैर्गृह्यते । आ र्यगृह्यः तत्पक्षाश्रितइत्यर्थ । विभाषाकृवृषोः ३ १ १२० कृत्यं वृष्य कार्यंवर्ष्यं युग्यञ्चपत्रे । पत्रंवाहनंयोग्यमन्यत् अमावस्यदन्यतरस्यां ३ १ १२२ ॥ अमासहवसतोऽस्या ञ्चन्द्रार्कावित्यमावस्या । अमावास्यावा अग्नौपरिचा य्योपचाय्यसमूह्याः ३ १ १३१ अग्नावेतेसाधवः । क्रतौकु ण्डपाय्यसंचाय्यौ ३ १ १३० चित्याग्निचित्येच ३ १ १३२ चित्योग्निः अग्नेश्चयनमग्निचित्या । इतिकृत्यप्रत्ययाः ण्वुल्तृचौ ३ १ १३३ ॥ धातोरेतौस्तः कर्त्तरिकृदितिक त्रर्थे युवोरनाकौ । युवुएतयोरनुनासिकयोरेतौस्तः का रकःकर्त्ता । नन्दिग्रहिपचादिभ्योल्युणिन्यचः ३ १ १३४ नंद्यादेल्युर्ग्रह्यादेर्णिनिःपचादेरचस्यात् ॥ नन्दयतीतिन न्दनः । जनार्दनः लवणः गणेनिपातनात्णत्वम् । ग्रा ही स्थायी मन्त्री पचः । आकृतिगणोयम् इगुपधज्ञा प्रीकिरःकः ३ १ १३५ ॥ क्षिपः बुधः कृशः ज्ञः प्रियः किरः । आतश्चोपसर्गे ३ १ १३६ ॥ प्रज्ञः सुग्लः पाघ्रा ध्माधेट्दृशःशः ३ १ १३७ ॥ पिबः जिघ्रः धमः धयः पश्यः अनुपसर्गाल्लिंपविन्दधारिपारिवेद्युदेजिचेति सा

तिसाहिभ्यश्च ३ १ १३८ । लिंपः विन्दः धारयः पा
रयः वेदयः उद्वेजयः चेतयः सातयः साहयः अनुपस
र्गात्किं । प्रलिपः गवादिषुविन्देःसंज्ञायाम् । गोवि
न्दः अरविन्दः । ददातिदधात्योर्विभाषा ३ १ १३९ ॥
ददः दधः पक्षेवक्ष्यमाणोणः । ज्वलितिकसंतेभ्योणः ३ १
१४० ॥ वास्यात् ज्वालः ज्वलः चालः चलः । श्याऽऽद्व्य
धास्रुसंस्र्वतीणवसाऽवहृलिहश्लिषश्वसश्च ३ १ १४१ ।
अवश्यायः आत् दायः धायः व्याधः आस्रावः संस्रावः
अत्यायः अवसायः अवहारः लेहः श्लेषः श्वासः । विभा
षाग्रह ३ १ १४३ ॥ व्यवस्थितविभाषेयम् । तेनजल
चरेग्राहः ज्योतिषिग्रहः । गेहेकः ३ १ १४४ ॥ गृह्णा
तिधान्यादिकमितिगृहम् । शिल्पिनिष्वुन् ३ १ १३५ ।
क्रियाकौशलंशिल्पम् । षःप्रत्ययस्य १ ३ ६ ॥ आदि
रित् नृतिखनिरञ्जिभ्यएव । नर्त्तकः खनकः आसि अकोऽने
चरञ्जेर्नलोपोवाच्यः । रजकः गस्थकन् ३ १ १४६ गायते
स्थकन् गाथकः ण्युट्च ३ १ १४७ ॥ गायनः । प्रुसृल्वः स
मभिहारेवुन् ३ १ १४९ । समभिहारग्रहणेनसाधुकारि
त्वंलक्ष्यते प्रवकः सरकः लवकः आशिषिच ३ १ १५० ॥
वुन्स्यात् । जीवताज्जीवकः । तत्रोपपदंसप्तमीस्थम् ॥
१ ३ ९२ ॥ सप्तम्यन्तेपदेकर्मणीत्यादौवाच्यत्वेनस्थितं
यत्कुम्भादितद्वाचकंपदमुपपदसंज्ञंस्यात् । कर्मण्यण् ३
१ १९० । कर्मण्युपपदेधातोरण् कुम्भंकरोतीतिकुम्भका
रः अतोनुपसर्गेकः ३ २ ३ ॥ कर्मण्युपपदे अणोपवादः
गोदः । कम्बलदः अनुपर्गे किं गोसंदायः । मूलविभुजा

दिभ्यःकः ॥ मूलानिविभुजातिमूलविभुजोरथः आकृतिग
णोयम् । महीध्रःकुध्रः । सुपिस्थः ३ २ ४ कःस्यात् सम
स्थःविषमस्थःसुपीतियोगविभागादन्यस्मादपि । द्वाभ्यां
पिवतिइतिद्विपः । अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकु
शंक्वङ्गुमञ्जिपुञ्जिपरमेवर्हिर्दिव्यग्निभ्यःस्थः ४ ३ ९७॥
एभ्यःस्थस्यसस्यषःस्यात् द्विष्ठः त्रिष्ठः । तुन्दशोकयोःप
रिमृजापनुदोः ३ २ ५॥ तुन्दशोकयोःकर्मणोरुपपदयोरा
भ्यांकः । आलस्यसुखाहरणयोरितिवक्तव्यम् ॥ तुन्दप
रिमृजोऽलसः । शोकापनुदः॥ सुखस्याऽऽहर्त्ता । प्रेदाज्ञः
३ २ ६ ॥ कःस्यात् सर्वप्रदः । पथिप्रज्ञः समिख्यः ३ २
७ ॥ गोसंख्यः । गापोष्टक् । ३ २ ७ ॥ कर्मण्युपपदे ।
सामगः पिवतेसुराशीध्वोरितिवाच्यम् । सुरापी शिधुपी
हरतेरनुद्यमनेच् ३ २ ९ ॥ अंशहरः । अनुद्यमनेकिं भा
रहारः । शक्तिलाङ्गलांकुशतोमरयष्टिघटघटीधनुष्षुग्रहः
शक्तिग्रहः । वयसिच ३ २ १० ॥ उद्यमनार्थंसूत्रम् ॥
कवचहारःकुमारः । आङिताच्छिल्ये ३ २ ११ ॥ पुष्पा
ण्याहरतितच्छीलःपुष्पाहरः । अर्हः ३ २ १२ ॥ अ–
च्स्यात् कर्मण्युपपदे पूजार्हाब्राह्मणी । स्तंवकर्णयोरमि
जपोः ३ । १ १३ ॥ हस्तिसूचकयोरितिव्यक्तव्यम् स्तं
वेरमोहस्ती कर्णेजपःसूचकः । अधिकरणेशेतेः । ३ २
१५ खेशेतेखशयःपार्श्वादिषूपसंख्यानम् । पार्श्वाभ्यांशे
तेपार्श्वशयः पृष्ठशयः उदरशयः । चेरष्टः ३ २ १६ ॥
अधिकरणेउपपदे कुरुचरः । भिक्षासेनादायेषुच ३ २
१७ ॥ भिक्षाचरःसेनाचरः आदायेतिलपवंतम् आदाय

चरः । कृञोहेतुताच्छील्यानुलोम्येषु ३ २ २० ॥ एषु द्योत्येषुकृञष्टः । अतःकृकमिकंसकुम्भपात्रकुशाकर्णीष्व नव्ययस्य १ ३ ४६ ॥ अतउत्तरस्यानव्ययविसर्गस्यस मासेनित्यंसादेशःकरोत्यादिषुपरेषु । यशस्करीविद्या । श्राद्धकरः वचनकरः । दिवाविभानिशाप्रभाभास्कारा न्तानन्तादिवहुनांदीकिंलिपिलिविवलिभक्तिकर्तृचित्र— क्षेत्रसंख्याजंघावाहृहर्यत्तद्धनुररुष्पु ३ २ २१ ॥ एषुकृञ ष्टोऽहेत्वादावपि दिवाकरः विभाकरः निशाकरः करस्का दित्वात्सः । भास्करः वहुकरः एककरः द्विकरः अहस्क स्करः धनुस्करः अरुस्करः।नशब्दश्लोककलगाथावैरचाटु सूत्रमन्त्रपदेषु ३ १ २३ ॥ एषुकृञष्टोन शब्दकारः स्तंबश कृतोरिन् ३ २ २४ ॥ व्रीहिवत्सयोरितिवक्तव्यम् स्तंबक रिव्रीहिः शकृत्करिर्वत्सः । हरतेर्दृतिनाथयोःपशौ ३ २ २५ ॥ दृतिहरिः नाथंनासारज्जुंहरतीतिनाथहरिःपशुः । फलेग्रहिरात्मंभरिश्च ३ २ २६ ॥ एतौनिपात्येते । चात्कु क्षिंभरिः चान्द्रास्तुआत्मोदरकुक्षिष्विति पेठुः ज्योत्स्नाकरं भमुदरंभरयश्चकोराः इतिमुरारिः । एजेःखश् ३ २ २८ ॥ णयन्तात् । अरुर्द्विषदजंतस्यमुम् ६ ३ ६७ ॥ अरुषोद्वि षतोऽजंतस्यमुम्खिदन्तेनत्वव्ययस्य शित्वाच्छवादिः । जनंएजयतीतिजनमेजयः । वातशुनीतिलशर्द्धेष्वजधेट्तु दजहातिभ्यःखश् । वातमजामृगाः । खित्यनव्ययस्य ६ ३ ६६ ॥ हृस्वः शुनिन्धयः तिलंतुदः शर्द्धंजहामाषाः नासिकास्तनयोर्ध्माधेटोः १ २ २९ ॥ स्तनधेटोनासि कायांध्मश्चेतिवक्तव्यं स्तनंधयः नासिकंधमः नासिकं

धयः टित्वात्स्तनंधयी । नाडिमुष्ट्योश्च ३ २ ३० ॥ ध्मा धेटोःखश् नाडिंधमः नाडिंधयः मुष्टिंधमः मुष्टिंधयः उदिकूलेरुजिवहोः ३ २ ३१ ॥ कूलमुद्रुजः कूलमुद्वहः वहाभ्रेलिहः ३ २ ३२ ॥ वहः स्कंधः तंलेढीतिवहंलि होगौः । अभ्रंलिहोवायुः । परिमाणपचः ३ २ ३३ ॥ प्रस्थंपचास्थाली खारिंपचःकटाहः । मितनखेच ३ २ ३४ ॥ मितंपचाब्राह्मणी नखंपचायवागूः । विध्वरु षोस्तुदः ३ २ ३५ ॥ विधुन्तुदः अरुन्तुदः । असूर्यल लटयोर्दृशितपोः ३ २ ३६ ॥ असूर्यमित्यसमर्थसमासः दृशिनानञःसंबंधात् असूर्यंपश्यारजदाराः ललाटंत पःसूर्यः । प्रियवशेवदःखच् ३ २ ३८ ॥ प्रियंवदः वशं वदः गमेःसुपिवाच्यः मितंगमोहस्ती । विहायसोवि हच ॥ खचडिद्वावाच्यः विहंगमः विहंगः भुजंगः भु जंगमः । द्विषत्परयोस्तापेः ३ २ ३९ ॥ खच् । खचि ह्रस्वः ६ ४ ९४ खचिपरेणौउपधायाह्रस्वः द्विषन्तंपरंवा तापयतिद्विषंतपः परन्तपः वाचियमोव्रते ३ २ ४० ॥ खच् । वाचंयमपुरंदरौच ६ २ ६२ ॥ वाक् पुरोरमंत त्वंनिपात्यते वाचयमोमौनव्रती व्रतेकिं अशक्त्यादि नावाचंयच्छीतिवाग्यामः । पूःसर्वयोदारिसहोः ३ २ ४१ ॥ खच् पुरंदारयीतिपुरंदरः सर्वंसहः भगंदारयती तिभगंदरइतिकथंवाहुलकात् । सर्वकूलाभ्रकरीषेषुकषः ३ २ ४२ ॥ सर्वंकषः खलः कूलंकषानदी अभ्रंकषोवा युः करीषंकषावात्याः । मेघर्त्तिभयेषुकृञः ३ २ ४३ ॥ मेघंकरः ऋतिंकरः भयंकरः भयशब्देनतदंत विधिः अ

भयंकरः । क्षेमप्रियमद्रेराच ३ २ ४४ ॥ एपुकर्मणि चास्खच् क्षेमंकरः क्षेमकारः प्रियंकरः प्रियकारः भद्रंकरः भद्रकारः । कथंतर्हिअल्पारंभाः क्षेमकराइति ॥ कर्मणःशेपत्वविवक्षायांपचाद्यच् । एवंगङ्गाधरोभूधरादयः । आशितेभुवःकरणभावयोः ३ २ ४५ ॥ खच् । आशितोभवत्यनेनआशितंभवओदनः । आशितस्य भवनं आशितंभवः । संज्ञायांभृतृवृजिधारिसहितपिदमः ३ २ ४६ ॥ खच् विश्वंविभर्तीतिविश्वंभरः रथंतरंसाम पतिंवराकन्या शत्रुंजयोहस्ती युगंधरःपर्वतः । शत्रुंसहः शत्रुंतपः अरिंदमः । गमश्च ३ २४७ ॥ सुतंगमः अंतात्यंताध्वदूरपारसर्वानंतेपुडः ३ २ ४८ गमेः अंतगः सर्वत्रपन्नयोरितिवाच्यं सर्वत्रगः पन्नंपतितं गच्छतीतिपन्नगः उरसोलोपश्च उरसागच्छतीत्युरगः सुदुरोरधिकरणे सुखेनगच्छतीत्यत्रसुगःदुर्गः अन्यत्रापि दृश्यतइतिवाच्यं ग्रामगः डेचविहायसोविहादेशोवाच्यः विहगः । आशिपिहनः ३ २ ४९ ॥ शत्रुंवध्यात् शत्रुहः आशिपिकिं शत्रुघातः दाराबाहनोणन्तस्यच टः संज्ञायां । दारुशब्देआङ्पूर्वाद्धन्तेरराटोंतस्य दार्वाघाटः । चारौवा ॥ चार्वाघाटः । चार्वाघातः । अपेक्लेशतमसोः ३ २ ५० ॥ अपपूर्वाद्धन्तेर्डः अनाशीरर्थमिदम् क्लेशापहः पुत्रः तमोपहःसूर्य्यः कुमारशीर्पयोर्णिनिः ३ २ ५१ ॥ कुमारघाती शिरसः शीर्पभावोनिपात्यते शीर्षघाती लक्षणेजायापत्योष्टक् ३ २ ५२ ॥ हन्तेष्टक् लक्षणवतिकर्त्तरि । जायाघ्नोना पतिघ्नीस्त्री

ष्ट्रमनुष्यकर्त्तृकेच ३ २ ५३ ॥ जायाघ्नस्तिलकालकः । पतिघ्नीपाणिरेखा पित्तघ्नंघृतं अमनुष्येति किं । श्रखुघातः शूद्रः । अथ कथम्बलभद्रः । प्रलंवघ्नः । कृतघ्नइत्यादि । मूलविभुजादित्वात्सिद्धं । चोरघातो नगरघातो हस्तीतितुबाहुलकादण् । शक्तौहस्तिकपाटयोः ३ २ ५४ ॥ हन्तेष्टक् मनुष्यकर्त्तृकार्थमिदं । हस्तिघ्नोना कपाटघ्नश्चोरः । कवाटेतिपाठान्तरं पाणिघताडघौशिल्पिनि ३ २ ५५ ॥ शिल्पिनिकिं पाणिघातः । ताडघातः राजघउपसंख्यानं राजानंहंति राजघः आढ्यसुभगस्थूलपलितनग्नांध्धप्रियेषुच्व्यर्थेष्वच्वौकृञःकरणेख्युन् ३ २ ५६ ॥ एषुच्व्यर्थेष्वच्व्यन्तेषुकर्मसूपपदेषुकृञःख्युन् । अनाढ्यमाढ्यंकुर्वंत्यनयाआढ्यंकरणी । श्रच्वौ किं श्राढ्यीकुर्वन्त्यनेन । कर्त्तरिभुवःखिष्णुच्खुकञौ ३ २ ५७ ॥ आढ्यादिषुच्व्यर्थेष्वच्व्यन्तेषुभवतेरेतौस्तः । अनाढ्यश्राढ्योभवति । श्राढ्यम्भाविष्णुः । आढ्यम्भावुकः । सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेपि क्विप् ३ २ ६१ । एभ्यःक्विवुपसर्गेसत्यसतिचसुप्युपपदे । द्युसत् सदिरप्रतेरितिषः उपनिषत् अण्डसूः प्रसूः । मित्रद्विट् प्रद्विट् मित्रध्रुट् प्रध्रुट् गोधुक् प्रधुक् अश्वयुक् प्रयुक् देववित् निवित् अग्रग्रामाभ्यांनयतेर्णोवाच्यः ॥ श्रग्रणीः ग्रामणीः भजोण्विः ३ २ ६२ ॥ अंशभाक् प्रभाक् अदोनन्ने ३ २ ६८ ॥ विट्स्यात् आममत्तीत्यामात् सस्यात् अनन्ने किं अन्नादः क्रव्येच ३ २ ६९ ॥ श्रदेर्विट् पूर्वेणासिद्धेवचनंवा सरूपेतिप्राप्ताण् वाधनार्थम् क्रव्या

तू आममांसभक्षक: दुहःकप्घश्च ३ २ ७० ॥ कामदुघा अन्येभ्योपिदृश्यन्ते ३२७५ ॥ मनिन् क्वनिप् वनिप् विच् एतेप्रत्ययाधातोस्युः। नेड्वशिकृति ७२८॥ वशादेः कृतइण्न सुशर्मा प्रातरित्वा। विड्वनोरनुनासिकस्यात् ६ ४ ४१ ॥ विजायत इति विजावा। ओण्ट अपनयने। अवावा रोट् रेट् सुगण्। क्विप्च ३ २ ७६ ॥ अयमपिदृश्यते। उखास्रत् पर्णध्वत् वाहभ्रट्। अन्तः ८ ४ २० ॥ पदान्तस्यानितेर्नस्यणत्वंस्यादुपसर्गस्यान्निमितात्परश्चेत्। हेप्राण् आशासः क्वौउपधायाइत्वंवाच्यं आशीः इरवोत्वे गीः पूः मोनोधातोः। प्रतान् प्रशान् गमः क्वौ ६ ४ ४० ॥ अनुनासिकलोपः अङ्गगत् गमादीनामितिवक्तव्यं। परीतत् संयत् ऊङ्चगमादीनामितिवक्तव्यं। लोपश्चगूः भूः स्यःकच ३ २ ७७ ॥ चात्क्विप् शंस्थः शंस्थाः सुप्यजातौणिनिस्ताच्छील्ये ३ २ ७८ ॥ अजात्यर्थधातोर्णिनिस्ताच्छील्येद्योत्ये उष्णभोजी शीतभोजी मनः ३ २ ८२ ॥ सुपिमन्यतेर्णिनिः दर्शनीयमानी आत्ममानेखश्च ३ २ ८३ ॥ स्वकर्मके मननेवर्तमानान्मन्यतेः सुपिखश् चाणिनिः पण्डितमात्मानंमन्यतेपण्डितंमन्यः। पण्डितमानी इचएकाचोम्प्रत्ययवच्च ६ ३ ६८ ॥ इजंतादेकाचोम्पात्सचस्वाद्यंवत् खिदंतेपरे अौतोम्शसोः गांमन्यः वाम्सोः स्त्रियंमन्यः स्त्रींमन्यः नृ नरंमन्यः भुवंमन्यः श्रियमात्मानं मन्यते श्रिमन्यंकुलं भाष्यकारप्रयोगाच्छ्रिशब्दस्यह्रस्वो मुममोरभावश्च भूते ३ २ ८४ ॥ अधिकारोयं वर्तमानेलडिति

यावत् करणेयजः ३ २ ८५ ॥ करणेउपपदेभूतार्थाद्यजेर्णि
निः कर्तरि सोमेनेष्टवान्सोमयाजी कर्मणिहनः ३ २ ८६ ॥
पितृव्यघाती ब्रह्मभ्रूणवृत्रेषुक्किप् ३ २ ८७ ॥ ब्रह्महा
भ्रूणहा वृत्रहा क्किप्चेत्येवसिद्धेब्रह्मादिष्वेवक्किवेवेतिद्वि
विधनियमार्थमिदम् एवमग्रेपि सुकर्मपापमंत्रपुण्येषुकृ
ञः ३ २ ८९ ॥ सुकृत् कर्मकृत् पापकृत् मंत्रकृत् पुण्य
कृत् सोमेसुञः ३ २ ९० ॥ सोमसुत् अग्नौचेः ३ २
९१ ॥ अग्निचित् कर्मण्यग्न्याख्यायाम् ३ २ ९२ ॥
कर्मण्युपपदेकर्मण्येवकारकेचिनोतेः क्किप् अग्न्याधार
स्थलविशेषस्याख्यायाम् श्येनइवचितः श्येनचित् कर्म
णीनिर्विक्रियः ३ २ ९३ ॥ कर्मण्युपपदेविपूर्वात्क्री
णातेरिनिः । कुत्सितग्रहणंकर्तव्यं सोमविक्रयी घृतवि
क्रयी दृशेः क्वनिप् ३ २ ९४ ॥ कर्मणिभूते पारंदृष्टवा
न्पारदृश्वा राजनियुधिकृञः ३ २ ९५ ॥ क्वनिप् युधि
रंतर्भावितण्यर्थः । राजानंयोधितवान् राजयुध्वा राज
कृत्वा सहेच ३ २ ९६ ॥ सहयुध्वा सहकृत्वा सप्तम्यां
जनेर्डः ३ २ ९७ ॥ तत्पुरुषेकृतिबहुलं ६ ३ १४ ॥ ङेर
लुक् सरसिजं सरोजं उपसर्गेचसंज्ञायाम् ३ २ ९९ ॥
प्रजा अनौकर्मणि ३ २ १०० ॥ अनुपूर्वाज्जनेः कर्म
ण्युपपदेर्डः पुमांसमनुरुध्यजाता पुमनुजा अन्न्येष्वपि
दृश्यते ३ २ १०१ ॥ अजः द्विजः ब्राह्मणजः अपिश
ब्दः सर्वोपाधिव्यभिचारार्थः तेनधात्वन्तरादपिकारका
न्तरेष्वपिक्वचित् परितः खातापरिखा पञ्चम्यामजातौ
३ २ ९८ ॥ जातिशब्दवर्जिते पञ्चम्यन्तेजनेर्डः संस्का

रजः अट्टष्टजः क्तक्तवतूनिष्ठा १ १ २६ ॥ एतौनिष्ठासं ज्ञौस्तः निष्ठा ३ २ १०२ ॥ भूतार्थवृत्तेर्धातोर्निष्ठास्या त् तत्रतयोरेवेतिभावकर्मणोः क्तः कर्त्तरिकृदितिकर्त्तरि क्तवतुः स्नातंमया स्तुतस्त्वयाविष्णुःविश्वंकृतवान् । अदोजग्धिर्ल्यप्तिकिति २ ४ ३६ ॥ ल्यपितादौकितिच इकारउच्चारणार्थः । जग्धम् । निष्ठायामण्यदर्थे ६ ४ ६० ॥ ण्यदर्थोभावकर्मणीततोऽन्यत्रनिष्ठायांक्षियोदीर्घः स्यात्। क्षियोदीर्घात् ८ २ ४६ निष्ठातस्यनः क्षीणवान् भावकर्मणोस्तुक्षितःकामोमया उर्णोतेर्णुवद्भावोवाच्यः। तेनएकाच्त्वान्नेट् उर्णुतः । रदाभ्यांनिष्ठातोनःपूर्वस्य चदः ८ २ ३२ ॥ रदाभ्यांपरस्यनिष्ठातस्यनोनिष्ठापेक्ष यापूर्वस्यधातोर्दस्यच ष्टृ शीर्णः भिन्नः छिन्नः । संयो गादेरातोधातोर्यण्वतः ८ २ ४३ ॥ यरावत्संयोगादे रादंतान्निष्ठातस्यनः द्राणः ग्लानः । ल्वादिभ्यः ८ २ ४४ ॥ एकविंशतेर्लूञादिभ्यः प्राग्वत् । लूनः ज्या ग्रहि ज्या । हलः ६ ४ २ ॥ अंगावयवाद्धलःपरंयत्संप्रसार णंतदंतस्यांगस्यदीर्घः जीनः । दुग्वोर्दीर्घश्च ॥ दुगतौ दूनः गुपुरिषोत्सर्गे गूनः । पूञोविनाशे ॥ पूनायवाः विनष्टाइत्यर्थः पूतमन्यत् । सिनोतेर्ग्रासकर्मकर्तृकस्य सिनोग्रासः ग्रासतिकिं सितापासेनसूकरी कर्मकर्त्तृके तिकिं सितोग्रासोदेवदत्तेन । ओदितश्च ८ २ ४५ ॥ प्राग्वत् भुजोभुग्नः टु ओश्वि शूनः । द्रवमूर्तिस्पर्शयोः श्यः ६ १ २४ ॥ द्रवस्यमूर्तौकाठिन्येस्पर्शेचार्थेश्यैङः संप्रसारणंस्यान्निष्ठायाम् । श्योऽस्पर्शे ८ २ ४७ ॥

श्यैङ निष्ठातस्य नः स्यादस्पर्शे ॥ शीनं घृतं अस्पर्शे किं शीतं जलं द्रवमूर्त्तिस्पर्शयोरिति किं संश्यानो वृश्चिकः शीतात्संकुचित इत्यर्थः । प्रतेश्च ६ १ २५ ॥ संप्रसारणं निष्ठायां । प्रतिशीनः । विभाषाभ्यवपूर्वस्य ६ १ २६ ॥ तथा अभिश्यानं घृतं अभिशीनं अवश्यानः अवशीनो वृश्चिकः व्यवस्थितविभाषेयं तेनेह न समवश्यानः । अंचोनपादाने ८ २ ४८ ॥ निष्ठातस्य नः । यस्य विभाषा ७ २ १५ ॥ यस्य क्वचिद्वा विहितस्ततो निष्ठाया इण् न उदितो वेति क्वायां वेट्त्वादिह नेट् ससक्तः अनपादाने किं उदक्तमुदकं कूपात् । दिवोऽविजिगीषायाम् ८ २ ४९ ॥ द्यूनः विजिगीषायां तु द्यूतं । निर्वाणोऽवाते: ८ २ ५० ॥ अवाते इति च्छेदः निर्पूर्वाद्वातेर्निष्ठातस्य नत्वं स्याद्वातश्चेत्कर्त्ता न निर्वाणोऽग्निर्मुनिर्वा वाते तु निर्वातो वातः । शुषः कः ८ २ ५१ ॥ निष्ठातस्य कः शुष्कः । पचो वः ८ २ ५२ ॥ पक्वः । क्षायो मः ८ २ ५३ ॥ क्षामः । स्त्यः प्रपूर्वस्य ६ १ २३ ॥ प्रात्स्त्यः संप्रसारणं निष्ठायां । प्रस्त्योऽन्यतरस्याम् ८ २ ५४ ॥ निष्ठातस्य मो वा प्रस्तीमः प्रस्तीतः प्रात्किं स्त्यानः । अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः ८ २ ५५ ॥ एते निपात्यंते त्रिफला फुल्लः निष्ठातस्य लत्वं निपात्यते क्तवत्वेकदेशस्यापीदं निपातनमिष्यते फुल्लवान् अनुपसर्गात्किं आदितश्च ७ २ ५६ ॥ आकारेतो निष्ठाया इण् न । त्तिच ७ २ ८९ ॥ चरफलोरत उत् तादौ किति प्रफुल्तः प्रक्षीबितः प्रकृशितः प्रोल्लाघितः । उत्फुल्लसंफुल्लयोरु

पसंख्यानम् उदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् ८ २ ५६ ॥ निष्ठातस्यनः नुन्नः नुत्तः विन्नः वित्तः । उन्दी । श्वीदितोनिष्ठायाम् ७ २ १४ ॥ श्वयतेरीदितश्चनिष्ठा याइरान उन्नः उत्तः इत्यादि । नध्याख्यापृमूर्छिमदाम् ८ २ ५७ ॥ एभ्योनिष्ठातस्यनोन । ध्यातः ख्यातः । पूर्तः । राल्लोपः ६ ४ २१ ॥ छ्वोरुलादावनुनासिकादौ चप्रत्यये मूर्त्तः मत्तः वित्तोभोगप्रत्यययोः ८ २ ५८ ॥ विन्दतेर्निष्ठांतस्यनिपातोऽयंभोग्येप्रतीतेचार्थे ॥ वित्तः पुरुषः अनयोः किं विन्नः भिन्नं शकलं ८ २ ५९ ॥ भिन्नमन्यत् ऋणमाधमर्ण्ये ८ २ ६० ॥ ऋतमन्यत् । स्फायः स्फीनिष्ठायाम् ६ १ २२ ॥ स्फीतः डाविनिष्ठा याम् ७ २ ४७ ॥ निरःकुषोनिष्ठायाइट् यस्यविभाषे तिनिषेधेप्राप्ते पुनर्विधिः निष्कुषितः वसतिक्षुधोरिट् ७ २ ५२ ॥ आभ्यांक्त्वानिष्ठयोर्नित्यमिट् उषितः क्षुधि तः अञ्चेः पूजायाम् ७ २ ५३ क्त्वानिष्ठयोरिट् अञ्चि तः गतौतुअक्तः लुभोऽविमोहने ७ २ ५४ क्त्वानिष्ठयोरि ट् नतुगार्ध्ये लुभितः गार्ध्येतुलुब्धः क्लिशः क्त्वानिष्ठयो ७ २ ५० ॥ इट्वा क्लिशितः क्लिष्टः पूङश्च ७ २ ५१ ॥ क्त्वानिष्ठयोरिड्वा पूङः क्त्वाच १ २ २२ ॥ निष्ठासे ट् किन्नस्यात् पवितः पूतः क्त्वाग्रहणमुत्तरार्थं नोपधा दित्यत्रहिक्त्वैवसंबध्यते निष्ठाशीङ्स्विदिमिदिक्ष्विदि धृषः १ २ १९ ॥ सेट्किन्न शयितः आदिकर्मणिनिष्ठा वक्तव्या आदिकर्मणिक्तः कर्त्तरिच ३ ४ ७० ॥ चाद्भा वकर्मणोः विभाषाभावादिकर्मणोः ७ २ १७ ॥ आदि

तोनिष्ठायाइडूत्रा प्रस्वेदितश्चैत्रः प्रस्वेदितन्तेन ञिष्वि
देतिभ्वादिरत्रगृह्यते ञीद्भिःसाहचर्यात् स्विद्यतेस्तुस्वि
दितइत्येव ञिमिदा ञिक्ष्विदा दिवादीभ्वादीच प्रमेदि
तः प्रक्ष्वेदितः प्रधर्षितः धर्षितन्तेन सेट्किं प्रस्विन्नः
प्रस्विन्नन्तेनेत्यादि मृषस्तितिक्षायाम् १ २ २० ॥ सेट्
निष्ठाकिन्न मर्षितः क्षमायांकिं अपमृषितंवाक्यं अ
विस्पष्टमित्यर्थः उदुपधाद्भावादिकर्मणोरन्यतरस्याम् १
२ २१ ॥ उदुपधात्पराभावादिकर्मणोः सेण्निष्ठावाकि
न्न द्युतितं द्योतितं मुदितं मोदितं साधुना प्रद्योतितः
प्रद्युतितः प्रमुदितः प्रमोदितः। साधुः उदुपधात्किं
विदितं भावेत्यादिकिं रुचितंकार्षापणं सेट्किं क्रुष्टं।
शब्विकरणेभ्यएवेष्यते नेह गुध्यतेर्गुधितं। निष्ठायांसे
टि ६ ४ ५२ ॥ णेर्लोपः भावितः भावितवान्। दृढः
स्थूलबलयोः ७ २ २० ॥ स्थूलेबलवतिचनिपात्यते।
दधातेर्हिः ७ ४ ४० ॥ तादौकिति हितं। दोदद्घोः
७ ४ ४६ ॥ घुसंज्ञस्यदाइत्यस्यदथ् तादौकिति चर्त्वं
दत्तः। गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरूहजीर्यति
भ्यश्च ३ ४ ७२ ॥ एभ्यःकर्त्तरिक्तःस्याद्भावकर्मणोश्च।
गंगांगतः गङ्गांप्राप्तः ग्लानःसः लक्ष्मीमाश्लिष्टोहरिः।
शेषमधिशयितः। द्यतिस्यतिमास्थामित्तिकिति ७ ४
४० ॥ एषामित्तादौकिति वैकुंठमधिष्ठितः शिवमुपासि
तः। हरिदिनमुपोषितः राममनुजातः गरुडमारूढः विश्व
मनुजीर्णः पक्षेप्राप्तागंगातेनेत्यादि। क्तोधिकरणेचध्रौ
व्यगतिप्रत्यवसानार्थेभ्यः ३ ४ ७६ ॥ एभ्योधिकरणेक्तः

चाद्यथाप्राप्तं ॥ मुकुंदस्यासितमिदमिदंयातंरमापतेः ।
भुक्तमेतदनंतस्येत्यूचुर्गोप्योदिदृक्षवः ॥ १ ॥ पक्षेआसेर
कर्मकत्वात्कर्त्तरिभावेच आसितोमुकुंदः आसितंतेन ।
गत्यर्थेभ्यःकर्त्तरिकर्मणिच ॥ रमापतिरिदंयातः । तेनेदं
यातम् । भुजेःकर्मणि ॥ अनन्तेनेदंभुक्तं । वर्त्तमानेइत्य
धिकृत्य । ञीतःक्तः ३ २ १८७ ॥ क्ष्विसः । मतिबु
द्धिपूजार्थेभ्यश्च ३ २ १८८ ॥ राज्ञांमतः इष्टः बुद्धः ।
विदितः पूजितः अर्चितः चकारोऽनुक्तसमुच्चयार्थः ।
शीलितोरक्षितः क्षान्तः आक्रुष्टोजुष्टइत्यादि । नपुंस
केभावेक्तः ३ ३ ११४ ॥ क्लीवत्त्वविशिष्टेभावेकालसा
मान्येक्तः जल्पितं हसितं। सुयजोर्ङ्वनिप् ३ २ १०३
भूते सुत्वा यज्वा। जीर्यतेरतृन् ३ २ १०४ ॥ जरन् ।
जरन्तौ वासरूपन्यायेननिष्ठापि जीर्णोजीर्णवान् । छं
दसिलिट् ३ २ १०५ ॥ लिटःकानज्वा ३ २ १०६ ॥
क्वसुश्च ३ २ १०७ ॥ भूतसामान्येछंदसिलिट्तस्यकान
च्क्वसूवास्तः तङानावात्मनेपदं चक्राणः क्वोश्च ॥ ज
गन्वान् कवयस्तुबाहुलकाल्लोकेपिप्रयुज्यंते ततस्थिवासंन
गरोपकण्ठे श्रेयांसिसर्वा ण्यधिजग्मुषस्तेइत्यादि । व
स्वेकाजाद्घसां ७ २ ६७ ॥ कृतद्विर्वचनानामेकाचा
मादन्तानांघसेश्चवसोरिट्स्यान्नान्येषाम् ॥ आदिवान्
आशिवान् ददिवान् जक्षिवान् एषांकिं बभूवान् । भा
षायांसदवसश्रुवः ३ २ १०८ ॥ सदादिभ्योभूतसामान्ये
भाषायांलिड्वास्यात्तस्यचनित्यंक्वसुः । निषेदुषीमासन
बन्धधीरः अध्यूषुषस्तामभवज्जनस्य शुश्रुवान् । उपे

यिवाननाश्वाननूचानश्च ३ २ १०९ ॥ एतेनिपात्यंते । उपादिणोलिट्वातस्यक्कसुः इट् उपेयिवान् नात्रोपस र्गस्तंत्रं ईयिवान् नञोऽश्नातेःक्कसोरिडभावश्च । अना श्वान् अनोर्वचेःकर्त्तरिकानच् ॥ वेदस्यानुवचनंकृतवा न्नूचानः । लटःशतृशानचावप्रथमासमानाधिकरणे ३ २ १२४ ॥ अप्रथमान्तेनसामानाधिकरण्येलटएतौ वास्तः शबादिः पचंतंचैत्रंपश्य । आनेमुक् ३ २ ८२ अंगस्यातः पचमानंचैत्रंपश्य लडित्यनुवर्त्तमानेपुनर्ल ड्ग्रहणात्प्रथमासामानाधिकरण्येपिक्कचित् सन्द्विजः । ईदासः २ २ ८३ ॥ आनस्य आदेःपरस्य आसीनः । विदेःशतुर्वसुः ७ २ ३६ ॥ वेत्तेःपरस्यशतुर्वसुरादेशोवा । विद्वान् विदन् । तौसत् ३ २ २७ ॥ तौशतृशानचौस त्संज्ञौस्तः । लृटः सद्वा ३ ३ १४ ॥ करिष्यन्तंकरि ष्यमाणंपश्य । ताच्छील्यवयोवचनशक्तिषुचानश् ३ २ १२८ ॥ अग्नौजुह्वानः कवचंबिभ्राणः शत्रुंनिघ्नानः । आक्केस्तच्छीलतद्धर्मतत्साधुकारिषु ३ २ ३४ ॥ क्किप मभिव्याप्यवक्ष्यमाणास्तच्छीलादिषुकर्त्तृषुबोध्याः । तृ न् ३ २ १३५ ॥ कर्त्ता कटान् । स्पृहिगृहिपातिदयिनि द्रातन्द्राश्रद्धाभ्यआलुच् ३ २ १५८ ॥ आद्यास्त्रयश्चुरा दावदन्ताः स्पृहयालुः । शीङोवाच्यः ॥ शयालुः । अ लङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधु सहचरइष्णुच् २ २ १३६ ॥ अलङ्करिष्णुः । ग्लाजिस्थ श्चग्स्नुः ३ २ १३९ ॥ गिदयंनतुकित् तेनस्थईत्वंन । ग्लास्नुः गित्वान्नगुणः । जिष्णुः स्थास्नुः चाद्भुवः ।

ष्णुकः क्तितीत्यत्रगकारप्रश्लेषान्नेट् भूष्णुः । त्रसिगृधिधृ षिक्षिपेःक्नुः ३ २ १४० ॥ त्रस्नुः गृध्नुः धृष्णुः क्षिप्नुः । शमित्यष्टाभ्योघिनुण् ३ २ १४१ ॥ उकारउच्चारणार्थ इति काशिका ॥ अनुवंधइतिभाष्यं । तेनशमिनितरा शिमनीतरेत्यत्र उगितश्चेतिह्रस्वविकल्पः । नचैवंशमी शमिनावित्यादौनुम्प्रसंगः । झल्ग्रहणमपकृष्यझलंताना मेवतद्विधानात् ॥ नोदात्तोपदेशस्येतिवृद्धिनिषेधः ॥ शमी तमीत्यादि । संपृचानुरुधाङ्यमाङ्यसपरिसृ संसृ ज परिदेवि संज्वर परिक्षिप परिरट परिवद परिहद परिमुह दुष द्विष दुह दुह युजा क्रीड विविच त्यज रज भजा तिचरा पचरा मुषा ऽभ्या हन श्च ३ २ १४२ ॥ घिनुण्स्यात् संपर्कीत्यादि । वौ कषलसकत्थ स्रंभः ३ २ १४३ ॥ विकाषी । अपेच लषः ३ २ १४४ चाद्वौ अपलाषी विलाषी । चलनशब्दार्था दकर्मकाद्यु च् ४ २ १४८ ॥ चलनार्थाच्छब्दार्थाच्चयुच्स्यात् । च लनः चोपनः कंपनः शब्दनः रवणः अकर्मकात्किं प ठिताविद्यां । अनुदात्तेत श्च हलादेः । ३ २ १४९ ॥ अकर्मकाद्युच् वर्त्तनः अनुदात्तेतः किं भविता हलादेः किं एधिता अकर्मकात्किं वसितावस्त्रम् । निंद हिंस क्लिश खाद विनाश परिक्षिप परिरट परिवादि व्या भाषा सूञो वुञ् ३ २ १४६ ॥ एभ्योवुञ् निन्दकः । हिंसकइत्यादि । देविक्रुशोश्चोपसर्गे । ३ २ १४७ ॥ आदेवकः आक्रोशकः उपसर्गे किं देवयिता क्रोष्टा । लष पत पद स्थाभू वृष हन कम गम शृ भ्यउकञ् ।

३ २ १४५ ॥ लाषुकः पातुकः । जल्प भिक्ष कुट्ट लुंठ वृङः षाकन् ३ २ १५५ ॥ जल्पाकः । सनाश्‍शंसभि क्ष उः ३ २ १६८ ॥ चिकीर्षुः आशंसुः भिक्षुः । स्थेश भासपिसकसोवरच् ३ २ १७५ ॥ स्थावरः । इत्यादि यश्चयङः ३ २ १७६ ॥ यातेर्यङंताद्वरच् अतोलोपः । तस्याचःपरस्मिन्निति स्थानिवद्भावेप्राप्ते । न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु १ १ ५८ ॥ पदस्यचरमावयवेद्विर्वचनादौचकर्त्तव्येपरनिमित्तोजादेशोनस्थानिवत् । इति यलोपंप्रतिस्थानिवत्त्वनिषेधाल्लोपोव्योर्वलीतियलोपः ॥ अल्लोपस्यस्थानिवत्त्वमाश्रित्याऽतोपेप्राप्तेवरेलुप्तं नस्थानिवत् । यायावरः भ्राज भास धुर्विद्युतो र्जि पॄ जु ग्रावस्तुवः क्विप् ३ २ १७७ विभ्राट् भाः धूः विद्युत् उर्क् । पूः दृशिग्रहणस्याऽपकर्षणाज्जवतेर्दीर्घः जूः ग्रावस्तुत् । क्वि ब्वचिप्रछ्यायतस्तुकटप्रुजुश्रीणां दीर्घो ऽसंप्रसारणं च ॥ वक्तीति वाक् पृच्छतीतिप्राट् आयतंस्तौति आयतस्तूः कटंप्रवतेकटप्रूः जूरुक्तः श्रयतिहरिंश्रीः । ध्यायतेःसम्प्रसारणंच ॥ धीः दाम्नीशसयु युज स्तु तुद सि सिच मिह पत दंश नहः करणे ३ २ १८२ ॥ दावादेःष्ट्रन्करणेर्थे दात्यनेनदात्रं नेत्रं । तितुत्रतथसिसुसरकसेषु च ३ २ ९ । एषांदशानामिरान शास्त्रं योत्रं योक्त्रं स्तोत्रं तोत्रं सेत्रं सेक्त्रं मेढ्रं पत्रं दंष्ट्रा नद्ध्री । हलसूकरयोः पुवः ३ २ १८३ ॥ पूङ्पूञोःकरणेष्ट्रन्तच्चेत्करणंहलसूकरयोरवयवः हलस्यसूकरस्यवापोत्रं मुखमित्यर्थः । अ

र्त्रि लू धू सू खन सह चर इत्रः ३ २ १८४ ॥ अरित्रं लवित्रं धवित्रं सवित्रं खनित्रम् सहित्रं चरित्रं पुवःसंज्ञायां ३ २ १ ८५ ॥ पवित्रं ॥ अथोणादयः ॥ कृवापाजिमिस्वदिसाध्यशूभ्यउण् करोतीतिकारुः वायुः पायुः गुदं जायुरौषधं मायुः पित्तं स्वादुः साध्नोतिपरकार्यमितिसाधुः आशु शीघ्रं हरिमितयोर्द्रुवः द्रुगतौ अस्मात् हरिमितयोरुपपदयोः कुः सचडित् हरिभिर्द्रुयतेहरिद्रुर्वृक्षः मितं द्रवतीतिमितद्रुः समुद्रः शतेच शतधाद्रवतीतिशतद्रुर्नदीभेदः । अंड्रूद्रुन्भूजंबूकफेलूकर्कन्धूदिधिपूः ॥ एतेकूप्रत्ययांतानिपात्यन्ते । शमेढः ॥ बाहुलकातूइत्संज्ञाढस्यएया देशइट्चनभवति शंढःस्यात्पुंसिगोपतौ कमेरठः ॥ कमठःकच्छपेपुंसिभाण्डभेदेनपुंसकमितिमेदिनी । रमेर्वृद्धिश्च ॥ रामठंहिंगुः । शमेःखः ॥ शंखः । कणेष्ठः ॥ कण्ठः । अमंताड्डः ॥ अमितिप्रत्याहारः । दण्डोऽस्त्रीलगुडेपिस्यादित्यमरः ॥ रण्डामूषिकपर्ण्यांचविधवायांचयोषितीतिमेदिनी । खण्डोऽस्त्रीशकलेनेक्षुविकारमणिभेदयोरितिमेदिनी । मनज्ञाने मण्डःपंचांगुलेशंकुभेदेक्लीवंतुमस्तुनीतिमेदिनी । पतिचण्डिभ्यामालञ् ॥ पातालन्नागलोकेस्याद्विवरेवडवानलेइतिमेदिनी । चण्डालोमातङ्गः ॥ प्रज्ञादित्वादणिचांडालोपीत्युज्ज्वलदत्तः । तत्व ॥ कुलालवरुडकर्मारनिषादचंडालमित्रामित्रेभ्यश्छन्दसीतिचण्डालशब्दास्स्वार्थेणविदधतावार्त्तिकेनतद्भाष्येणचसहविरोधात् । गन्गम्यद्योः ॥ गङ्गा अङ्गःपुरोडाशः । भृजःकिन्नुट्च ॥ भृजोगन्किरस्यान्तस्यनुट्

च । भृंगाः । षिट्गाऽलिधूम्याटाः । शृ गातेर्ह्रस्वश्च ॥ शृंगं । अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिणीभ्योमन् ॥ एभ्यश्चतुर्दशभ्यामन् । अर्मश्चक्षूरोगः ॥ स्तोमः सोमः होमः । सर्मोगमनं घर्मः ॥ क्षेमंकुशलं क्षोमं । भाम श्चादित्यः ॥ यामः वामः । शोभनदुष्टयोः ॥ पद्मं । यक्ष्मो रोगराजः नेमः । अवतेष्टिलोपश्च ॥ मन्प्रत्ययस्याऽयंटिलोपोनतुप्रकृतेः । अन्यथाऽडिदित्येवब्रूयात् । ज्वरत्वरास्त्रिव्यविमवामुपधायाश्च ६ ४ २० ॥ एषामुपधावकारयो रूट्क्कौझलादावनुनासिकादौचप्रत्यये । अत्रङ्कितीतिनानुवर्त्तते ॥ अवते स्तुनिकृतेओतुरितिदर्शनात् । स्वरादिपाठादव्ययत्वम् अवतीओम् । ग्रासेराच ॥ ग्रामः अविसिविसिशुषिभ्यःकित् ॥ एभ्यःमन् । ऊमं नगरं । स्यूमोरश्मिः । सिमःसर्वः ॥ शुष्ममग्निसमीपयोः । घर्मः घृधातोर्निपातोयं । ग्रीष्मः ॥ ग्रसतेर्निपातोयं । अशूपुषिलटिकणिखटिविशिभ्यःक्वन् ॥ अश्वः पुष्वःस्याद्वतुसूर्ययोः । लट्वः पक्षिभेदःफलंच ॥ कणवपापं । खट्वा विश्वं । कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः ॥ यौतिइतियुवा । वृषाइन्द्रः । तक्षा राजा ॥ धन्वामरुः । धन्वशरासनं । द्युवासूर्य्यः ॥ प्रतिदीव्यत्यस्मिन्प्रतिदिवादिवसः । उषिकुषिगाऽर्त्तिभ्यस्थन् ॥ ओष्ठः कोष्ठः । गाथा ॥ अर्थोभिधेयरैवस्तुप्रयोजननिवृत्तिष्वित्यमरः पातृतुदिवचिरिचिसिचिभ्यस्थक् ॥ पीथोरविर्घृतंपीथं । तीर्थंशास्त्राऽध्वरक्षेत्रोपायोपाध्यायमंत्रिषु । अवतार र्षिजुष्टांभःस्त्रीरजःसुचविश्रुतमितिविश्वः ॥ तुथोग्निः

उपर्यंतामभेदः । रिक्थम् ॥ वाहुलकाद्रृचेरपि । रिक्थमृ
कृथंधनंवसु त्रिकृथं । ग्लानुदिभ्यांडौः ॥ ग्लौः । नौः ॥
च्विरव्ययम् ॥ डौरित्येव ग्लौकरोति । कृमेजन्तइतिसि
द्धेनियमार्थमिदं ॥ उणादिप्रत्ययान्तश्च्व्यन्तएवेति । ग
मेर्डोः ॥ गौर्नाऽऽदित्येवलीवर्दकिरणक्रतुभेदयोः । स्त्री
तुस्याद्दिशिभारत्यांभूमौतुसुरभावपि ॥ नृस्त्रियोःस्वर्गव
ज्रांवुरश्मिदृग्वाणलोमसु । वाहुलकात्द्युतेरपिडोः द्यौ
स्त्रीस्वर्गांतरिक्षयोः । एतेर्डैः ॥ राः । भ्रमेश्चडूः ॥ भ्रूः ।
चाद्रुमेः । च्यग्रेगूः ॥ उदेर्नलोपश्च ॥ चाद्युच् । ओदनः
गमेर्गश्च ॥ चाद्युच् । गगनम् । कृपृवृजिमंदिनिधाञः
क्युः ॥ किरणः । पुरणःसमुद्रः ॥ वृजनमरिक्षं मंदनं
स्तोत्रं । निधनंकुलनाशयोः । धृपेर्धिपचसंज्ञायां ॥
धिपणोगुरुः । धिपणाधीः ॥ (तृन्तृचौसिक्षदादिभ्यः
संज्ञायां ॥ शंसादिभ्यःक्षदादिभ्यश्चक्रमात्तृन्तृचौस्तस्तौ
चाऽनिटौ । शंस्ता शंस्तरौ शंस्तरः ॥ क्षदिःसौत्रोधा
तुः । क्षत्तास्यात्सारथौद्वास्थेवैश्यायामपिशूद्रजे । वहु
लमन्यत्रापि । मन् मन्ता ॥ हन् । हन्ता । इत्यादि)
नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ ॥ ए
तेतृन्तृजन्तानिपात्यन्ते । नप्ता इत्यादि । सावसेर्ऋन्
स्वसा । यतेर्वृद्धिश्च ॥ भार्यास्तुभ्रातृवर्गस्ययातरःस्युः
परस्परं । नञिचनंदेः ॥ ननन्दतीतिननान्दा । इहवृ
द्धिर्नानुवर्त्ततेइत्येके । ननान्दातुस्वसापत्युर्ननंदानन्
दिनीचसेतिशब्दःर्णवः दिवेर्ऋः देवादेवरः । स्वामिनो
देवृदेवरौ । नयतेर्डिच्च ॥ ना । नरौ । च्यर्चिशुचिहु

सृपिक्ष्यादिक्ष्यादिभ्यःइसिः ॥ अर्चिःशोचिरुभक्कीवेप्रका शोद्योतआतपः । हविः सर्पिः । इस्मन्त्रक्विपुच्च ३ ४ १७ ॥ छादेःह्रस्वःस्यात् । छदिःपटल छर्दिः । वृंहेर्नलो पश्च ॥ वर्हिर्नाकुशशुष्मणोः । द्युतेरिसिन्नादेश्चजः ॥ ज्योतिः । जनेरुसिः ॥ जनुर्जननजन्मानीत्यमरः ऋर्त्ति पृत्रपियजितनिधनितपिभ्योनित् ॥ अरुः । परुर्ग्रंथिः वपुः यजुः तनुषी धनुः ॥ धनुरस्त्रियां । तपुःसूर्याग्नि शत्रुषु । एतेर्णिच्च ॥ आयुः आयुषी । चक्षेःशिच्च ॥ चक्षुः मुहेःकिच्च ॥ मुहुःपुनरव्ययं । पानीविषिभ्यःपः ॥ रक्ष त्यस्मादात्मानमितिपापं । तद्योगात्पापः ॥ नेपः । पु रोहितः । वेप्यः पानीयं । स्तुवोदीर्घश्च ॥ स्तूपः समु च्छ्रायः । सुशॄभ्यांनिच्च ॥ चात्कित् । सूपः । वाहुल कादूत्वंशूर्प्पः । कुयुभ्यांच ॥ कुवन्तिमंडूकाअस्मिन्निति कूपः । युवन्तिवध्नन्तिअस्मिन्निति यूपः । खष्पशिल्प शष्पवाष्परूपपर्पतल्पाः । सप्रैतेपप्रत्ययान्तानिपात्यंते । स्तनिहृषिपुषिगदिमदिभ्योणेरित्नुच् ॥ अयामन्तेतिणे रय् । स्तनयित्नुः । हर्षयित्नुः । पोषयित्नुः । गदयित्नुः मदयित्नुः । मदिरा । अशेःसरः ॥ अक्षरं । वसेश्च ॥ वत्सरः । संपूर्वाच्च ॥ संवत्सरः । परिवत्सरः । कृशृश लिकलिगर्दिभ्योऽभच् ॥ करभः । शरभः । शलभः । क लभःकरिशावकः ॥ गर्दभः । ऋषिवृषिभ्यांकित् ॥ ऋ षभः । वृषभः । रासिवल्लिभ्यांच ॥ रासभः । वल्लभः नियोर्मिः ॥ नेमिः । अर्त्तेरुच्च ॥ ऊर्मिः । भुवःकित् ॥ भूमिः । अंगेर्निर्नलोपश्च ॥ अग्निः । वहिश्रिस्रुयुद्रु

ग्लाह्रात्वरिभ्योनित् ॥ वह्निः । श्रेणिः । श्रोणिः । यो
निः । द्रोणिः । ग्लानिः । ह्रानिः । तूर्णिः । पातेर्डतिः ।
पतिः । सूडःक्रिः ॥ सूरिः । अदिशदिभूशुभिभ्यःक्रिन्
अद्रिः शद्रिः । शर्करा भूरिः । प्रचुरं शुभ्रिः ब्रह्मा ।
वलिमलितनिभ्यःकयन् ॥ वलयः मलयः तनयः । मा
छाससिभ्योयः ॥ माया छाया सस्यं वाहुलकात्सव्यंद
क्षिणवामयोः । जनेर्यक् ॥ येविभाषा जन्यंयुद्धं जाया
सर्वधातुभ्यइन् ॥ पचिरग्निः तुडिः तुण्डिः वलिः वटिः
यजिः काशतइतिकाशिः । पतिः मल्लिः केलिः मसीप
रिणामे मसिः ॥ बोधिः नंदिः कलिः हरिर्विष्णावहा
विन्द्रेभेकेसिंहेहयेरवौ ॥ चन्द्रेकीलेप्लवंगेचयमेवातेचकी
र्तितः ॥ १ ॥ इगुपधात्कित् ॥ कृपिः ऋपिः शुचिः ।
मनेरुच्च ॥ अतः मुनिः । जनिघसिभ्यामिण् ॥ जनि
र्जननं घासिर्भक्ष्यमग्निश्च । अचइः ॥ रविः तरिः प
विः कविः अरिः । कुण्डिकंप्योर्नलोपश्च ॥ कुडिः क
पिः । इषेःकूसुः ॥ इक्षुः । कृपेर्वर्णे ॥ नक्रस्यात् कृष्णः
दाभाभ्यांनुः ॥ दानुर्दाता भानुः । विषेःकिच्च ॥ विष्णुः
सितनिजनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् ॥ सेतुः
तंतुः जंतुः गंतुः मस्तुर्दधिमंड । सक्तुः ओतुः धातुः ।
क्रोष्टा । अवितृस्तृतंत्रिभ्यईः ॥ अवीर्नारीरजस्वला ।
तरीः स्तरीः तंत्रीः । यापोःकिद्द्वेच ॥ ययीः पपीःस्या
त्सोमसूर्ययोः । वातप्रमीः ॥ निपातोयं । लक्षेर्मुट्च
लक्ष्मीः । सर्वधातुभ्योमनिन् ॥ कर्म चर्म भस्म जन्म
शर्म स्थाम । वृंहेर्नोच्च ॥ नकारस्यअकारः ब्रह्मतत्त्वंत

पोवेदोब्रह्माविप्रःप्रजापतिः । नामन्सीमन्व्योमन्रोमन् लोमन्पाप्मन्ध्यामन् ॥ सप्रैतेनिपात्यन्त्ये । सातिभ्यां मनिन्मनिणौ ॥ साम आत्मा । हनिमशिभ्यांसिकन् ॥ हंसिकाहंसयोषिति मक्षिका । गिरउडच् ॥ गरुडः । शृदृभसोऽदिः ॥ शरत् । दरद्धृदयकूलयोः भसज्जघनं त्यजितनियजिभ्योडित् ॥ त्यद् तद् यद् । एतेस्तुट्च एतद् । युष्यसिभ्यांमदिक् ॥ त्वं अहं । इन्देःकमिन्न लोपश्च ॥ इदं कायतेर्डिमिः किं सर्वधातुभ्यःष्ट्रन् वस्त्रं अस्त्रं शस्त्रं । अमिचिमिदिशसिभ्यः क्त्रः ॥ अंत्रं चित्रं मित्रं शस्त्रं पुवोह्रस्वः पुत्रः । स्त्यायतेर्ड्रट् स्त्री । सूचेः स्मन् सूक्ष्मम् पातेर्डुम्सुन् पुमान् वसेस्तिः ॥ वस्तिर्ना भेरधोद्वयोः । सावसः स्वस्ति । वौतसेः ॥ वितस्तिर्द्वा दशांगुलावित्यमरः । सर्वधातुभ्योऽसुन् ॥ चेतः सरः । पयः पयसीत्यादि । अशेर्देवनेयुट्च ॥ देवनेस्तुतौ यशः उब्जेर्वलेबलोपश्च ॥ ओजः । श्रयतेःस्वांगेशिरःकिच्च ॥ श्रयतेः शिरआदेशोऽसुन्किच्च शिरः अर्तेरुच्च ॥ उरः । भूरंजिभ्यांकित् ॥ भुवः रजः । वसर्णिच्च ॥ वासोवस्त्रं चन्देरादेश्चच्छः छंदः । पचिवचिभ्यांसुट्च ॥ पक्षसीतु स्मृतौपक्षौ वक्षः । नञिहनएहच ॥ अनेहा । अनेहसौ विधाञोवेधच ॥ वेधाः । चन्द्रेमोडित् ॥ चन्द्रोपपदान्मा ङोऽसिःसचडित् चंद्रमाः । उषःकित् ॥ उषः अप्सराः सर्त्तेरप्पूर्वादसिः ॥ प्रायेणाऽयंभूम्नि ॥ अप्सरसः । वसेः कनसिः ॥ उशना । अदिभुवोडुतच् ॥ अद्भुतं । गुधे ऊमः गोधूमः । तृहःक्नोहलोपश्च ॥ तृणं । उदिचेर्डसिः

उच्चैः नौदीर्घश्च नीचैः पूञोयण्णुग्घ्रस्वश्च यत्प्रत्ययः पुण्यं उदिदृणातेरजजौपूर्वपदांत्यलोपश्च उदरम् डित्व नेर्मुट्चोदात्तः अजलचडिद्धातोर्मुट् । मुखं अमेःसन् अंसः मुहेः खोमूर्च मूर्खः नहेर्हलोपश्च नखः शीङोह्रस्वश्च शिखा माङऊखोमयच मयूखः जनेष्टन्लोपश्च जटा । क्लिशेरन्ललोपश्च केशः फलेरितजादेश्चपः पलितं कृञा दिभ्यःसञ्ज्ञायांवुन् करकः कटकः नरकः नरकोनारको पिचेद्विरूपकोशः चीकयतेराद्यन्तविपर्ययश्च ॥ कीचकः जनेररष्ठच जटरं ह्रयतेः कन्यन्हिरच हिरण्यं कृञः पासः कर्पासः विल्वादित्वात्कार्पासं ऊर्णोतेर्डः ऊर्णा दधाते र्यन्नुट्च धान्यं चतेरूरन् चत्वारः प्रातत्तेररन् प्रातः अमेस्तुट्च अन्तः दहेर्गोलोपोदश्चनः दहेर्गप्रत्ययोधातो रन्त्यस्यलोपोदस्यनः नगः हन्तेरच् घुरच घोरं तरतेड्रिः त्रयः ग्रहेरनिः ग्रहणिः प्रथेरमच् प्रथमः चरेश्च चरमः मंगेरलच् ॥ मंगलम् ॥ इत्युणादिः ॥ उणादयोवहुलम् ३ ३ १ ॥ एतेवर्त्तमानेसंज्ञायांबहुलंस्युः ॥ केचिदविहि ताअप्यूह्याः ॥ सञ्ज्ञासुधातुरूपाणिप्रत्ययाश्चततःपरे ॥ कार्याद्विद्यादनूबंधमेतच्छास्त्रमुणादिषु ( दासगोघ्नौसं प्रदाने ३ १ ७३ ॥ एतौनिपात्येते । दासंतिअस्मैदासः गांहंतिअस्मैगोघ्नः । अतिथिः ) तुमुन्ण्वुलौक्रिया यांक्रियार्थायां ३ ३ १० ॥ क्रियार्थायांक्रियायामुपप देभविष्यदर्थेधातोरेतौस्तः ॥ मान्तत्वादव्ययत्वम् ॥ कृ ष्णंद्रष्टुंयाति कृष्णंदर्शकोयाति । कालसमयवेलासुतुमु न् ३ ३ १६७ ॥ कालःसमयोवेलावाभोक्तुं । भावे ३

३ १८ ॥ सिद्धावस्थापन्नेधात्वर्थेवाच्येधातोर्घञ् ॥ पाकः । अकर्त्तरिचकारकेसंज्ञायाम् ३ ३ १९ ॥ कर्त्तृभिन्नेकारकेघञ् । घञिचभावकरणयोः ६ ४ २७ ॥ रञ्जेर्नलोपः रागः अनयोः किं रज्यत्यस्मिन्नितिरंगः । निवासचितिशरीरोपसमाधानेष्वादेश्चकः ३ ३ ४१ ॥ एषुचिनोतेर्घञादेश्चकः । उपसमाधानंराशीकरणं निकायः । आकायः कायः । गोमयनिकायः ॥ एरच् ३ ३ ५६ ॥ इवर्णान्तादच् । चयः । ऋदोरप् ३ ३ ५७ ॥ ऋवर्णान्तादुवर्णान्तादप् ॥ करः गरः शरः यवः । लवः स्तवः पवः । घञर्थेकविधानं ॥ प्रस्थः विघ्नः । ड्वितःक्त्रिः ३ ३ ८८ ॥ भावेस्वभावात् ॥ क्त्रेर्मम्नित्यम् ४ ४ २० ॥ क्त्रिप्रत्ययान्तान्मप्निर्वृत्तेर्थे । पाकेन निर्वृत्तं । पक्त्रिमं डुवप् ॥ उप्त्रिमं । ट्वितोऽथुच् ३ ३ ८९ ॥ अयमपिभावे ॥ टुवेपृकंपने । वेपथुः श्वयथुः । यजयाचयतविच्छप्रच्छरक्षोनङ् । ३ ३ ९० ॥ यज्ञः । याच्ञा यत्नः विश्नः प्रश्नः रक्ष्णः स्वपोनन् ३ ३ ९१ ॥ स्वप्नः । उपसर्गेघोःकिः ३ ३ ९२ ॥ प्रधिः उपाधिः । स्त्रियांक्तिन् ३ ३ ९४ ॥ स्त्रीलिंगेभावादौक्तिन् ॥ घञोपवादः । कृतिः स्तुतिः । ॠल्वादिभ्यःक्तिन्निष्ठावद्वक्तव्यः ॥ तेननत्वं कीर्णिः । गीर्णिः धूनिः लूनिः पूनिः संपदादिभ्यःक्विप् ॥ संपत् विपत् आपत् क्तिन्नपीष्यते ॥ संपत्तिःविपत्तिः । आपत्तिः । ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च ३ ३ ९७ ॥ एतेनिपात्याः । कृञः ३ ३ १०० ॥ क्यप् ॥ कृत्या । शच ३ ३ १०० ॥ कृ

अ:शः। चात्क्तिन् ॥ प्रकरणं प्रक्रिया कृतिः ।
३ ३ १०१ ॥ इष्टेर्निपातोयं। अःप्रत्ययात् ३
प्रत्ययांतेभ्यःस्त्रियामकारप्रत्ययः चिकीर्षा पुत्रः
गुरोश्चहलः ३ ३ १०२॥ गुरुमतोहलंतात्स्त्रियामप्र
ईहा ऊहा। षिद्भिदादिभ्योङ् ३ ३ १०४ ॥ जृ
श्योङिगुणः॥ जरा त्रपूष् त्रपा भिदा विदारणा
भित्तिरन्या छिदा मृजा। क्रपेःसंप्रसारणंच ॥
आतश्चोपसर्गे ३ ३ १०६ ॥ अङ्स्यात् उपद
न्तर्द्धा। ण्यासश्रंथोयुच् ३ ३ १०७॥ आसप
कारणा। रोगाख्यायांण्वुल् बहुलम् । ३ ३
प्रच्छर्दिका प्रवाहिका विचर्चिका क्वचिन्न शि
धात्वर्थनिर्देशेण्वुल्वक्तव्यः । आसिका । इकृश्
तुनिर्देशे॥ पचिः पचतिः। वर्णात्कारः निर्दे
अकारः ककारः रादिफः रेफः नपुंसकेभावेक्तः॥
३ ३ ११५॥ हसितं हसनं। करणाधिकरणयोश्
११७॥ ल्युट् अनुमानः अनुमानी । पुंसिसं
प्रायेण ३ ३ ११८॥ छादेर्घेद्व्युपसर्गस्य। ६ ४
द्विप्रभृत्युपसर्गहीनस्यछादेर्ह्रस्वोघे दन्तच्छदः ।
र्वन्त्यस्मिन्नित्याकरः । अवतृस्त्रोर्घञ् ३ ३ १
अवतारः अवस्तारोजवनिका। हलश्च ३ ३
हलंताद्घञ्घापवादः। रमंतेयोगिनोऽस्मिन्निति
अपमृज्यतेऽनेनव्याध्याधिकमित्यपामार्गः। ईषद्
कृच्छ्राकृच्छ्रार्थेषुखल् ३ ३ १२६॥ एषुदुःखसुखार्थे
खल्। तयोरेवेतिभावेकर्मणिच॥ कृच्छ्रे दुष्कर

वता ॥ अकृच्छ्रे ईषत्करः सुकरः । आतोयुच् ३ ३ १२८ खलोपवादः ईषत्पानःसोमोभवता दुष्पानः सुपानः आवश्यकाधमर्ण्ययोर्णिनिः ३ ३ १७० ॥ अवश्यंकारी शतंदायी । कृत्याश्च ३ ३ १७१ ॥ तथाधातोः । अवश्यसेव्योहरिः । शतदेयं । क्तिच्क्तौचसंज्ञायाम् ३ ३ १७४ ॥ आशिषि वातिर्वायुः ॥ शिवोदेयादेनंशिवदत्तः । अलंखल्वोःप्रतिषेधयोःप्राचांक्त्वा ३ ७ १८ ॥ प्राचामितिपूजार्थम् । प्रतिषेधयोरलंखल्वोरुपपदयोः क्त्वा दोदद्घोः ॥ अलंदत्त्वा घुमास्थेतीत्वं पीत्वाखलु । अलंखल्वोः किं माकार्षीः प्रतिषेधयोःकिं अलंकारः समानकर्तृकयोःपूर्वकाले ३ २ २१ ॥ समानकर्तृकयोर्धात्वर्थयोःपूर्वकालेविद्यमानाद्धातोःक्त्वा । अव्ययकृतोभावे ॥ भुक्त्वाव्रजति द्वित्वमतंत्रम् । स्नात्वाभुक्त्वापीत्वाव्रजति । नक्त्वासेट् १ २ १८ ॥ सेट्क्त्वाकित्न शयित्वा सेट्किं । कृत्वा । रलोव्युपधाद्धलादेःसंश्च १ २ २६ ॥ इवर्णोवर्णोपधाद्धलादेरलंतात्परौक्त्वासनौसेटौवाकितौ स्तः ॥ द्युतित्वा द्योतित्वा ॥ लिखित्वा लेखित्वा ॥ व्युपधात्किं वर्त्तित्वा रलःकि । सेवित्वा हलादेःकिं । एषित्वा सेट्किं भुक्त्वा । उदितोवा ७ २ ५६ ॥ उदितःपरस्यक्त्वइट्वा शमित्वा शांत्वा देवित्वा क्त्वःशूडनुनासिकेतिउट् ॥ द्यूत्वा । दधातेर्हिः ॥ हित्वा । जहातेश्चक्त्वि ७ ४ ४३ ॥ हित्वा हाङस्तुहात्वा समासेऽनञ्पूर्वेक्त्वोल्यप् ७ १ ३७ ॥ अव्ययपूर्वपदेऽनञ्समासेक्त्वोल्पवादेशः तुक् प्रकृत्य अनञ् किं अकृत्वा अव्ययपूर्व

पदादिकं परमकृत्वा । वाल्यपि ६ ४ ३१ ॥ अनुदा त्तोपदेशवनतितनोत्यादीनामनुनासिकलोपः । सचव्य वस्थितः मान्तानिटांवा । नांतानिटांनित्यं आगम्य । आगत्य प्रहत्य अदोजग्धिः प्रजग्ध्य । नल्यपि ३ ४ ६९ ॥ घुमास्थेतीत्वं प्रदाय । प्रमायेत्यादि । आभी क्ष्ण्येणमुलूच ३ ४ २२ ॥ पौनःपुन्येद्योत्येक्त्वाविषये णमुलूक्त्वाच । नित्यवीप्सयोः ८ १ ४ ॥ आभीक्ष्ण्येवी प्सायांचद्योत्येपदस्यद्वित्वंस्यात् । आभीक्ष्ण्यन्तिङन्ते ष्वव्ययसंज्ञककृदंतेषुच । पचति पचति स्मारं स्मारंन मतिगुरुं स्मृत्वास्मृत्वा । पायं २ भोजं २ श्रावं २ । अन्यथैवंकथमित्थंसुसिद्धाप्रयोगश्चेत् ३ ४ २७ ॥ एषु कृञो णमुल्स्यात् । सिद्धोऽप्रयोगोऽस्यएवंभूतश्चेत्कृञ् व्य र्थत्वात्प्रयोगानर्हइत्यर्थः । अन्यथाकारं । एवंकारं । कथंकारं इत्थंकारंभुंक्ते इत्थंभुक्तइत्यर्थः । सिद्धेति किं शिरोऽन्यथाकृत्वाभुंक्ते । यावतिविंदजीवोः ३ ४ ३० ॥ यावद्वेदंभुंक्ते यावल्लभतेतावदित्यर्थः । यावज्जी वमधीते । निमूलसमूलयोःकषः ३ ४ ३४ ॥ कर्मण्यु पपदे । कषादिषुयथाविध्यनुप्रयोगः ३ ४ ४६ ॥ य स्मात्णमुलुक्तःसएवानुप्रयोक्तव्यः । निमूलकाषंकषति । समूलकाषंकषति । निमूलसमूलंकषतीत्यर्थः । शुष्कचू र्णरूक्षेषुपिषः ३ ४ ३५ ॥ एषुकर्मसुपिषेर्णमुल् । शुष्क पेषंपिनष्टि शुष्कंपिनष्टीत्यर्थः । चूर्णपेषं । रूक्षपेषं । समूलाकृतजीवेषुहन्कृञ्ग्रहः ३ ४ ३६ ॥ कर्मणीत्येव समूलघातंहन्ति अकृतकारंकरोति । जीवग्राहंगृह्णाति

जीवंतंगृह्लातीत्यर्थः । करणेहनः ३ ४ ३७ ॥ पादघातंहंति पादेनहन्तीत्यर्थः स्नेहनेपिषः ३ ४ ३८ ॥ स्निह्यतेयेनतस्मिन्करणेपिषेर्णमुल् उदपेषंपिनष्टि उदकेनपिनष्टीत्यर्थः । हस्तेवर्त्तिग्रहोः ३ ४ ३९ ॥ हस्तार्थेकरणे । हस्तवर्त्तम्वर्त्तयति । करवर्त्तम् । हस्तेनगुलिकांकरोतीत्यर्थः । हस्तग्राहंगृह्लाति । करग्राहं पाणिग्राहं । स्वेपुषः ३ ४ ४० ॥ करणइत्येव । स्वइत्यर्थग्रहणं । तेनस्वरूपेपर्यायेविशेषेषुचणमुल् ॥ स्वपोषंपुष्णाति । धनपोषं गोपोषं । समासत्तौ ३ ४ ५० ॥ तृतीयासप्तम्योर्णमुल्सन्निकर्षे केशग्राहंयुध्यन्ते हस्तग्राहंयुध्यन्ते । स्वाङ्गेतस्प्रत्ययेकृभ्वोः ३ ४ ६१ ॥ त्क्त्वाणमुलौस्तः । मुखतःकृत्य मुखतःकृत्वा मुखतः कारं । मुखतोभूय मुखतोभूत्वा । मुखतोभावम् ॥ ॥ ॥

॥ इतिकृत्प्रक्रिया समाप्ता जाता ॥

प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रेप्रथमा । २ ३ ४६ ॥ नियतोपस्थितिकःप्रातिपदिकार्थः । मात्रशब्दस्यप्रत्येकंयोगः । प्रातिपदिकार्थमात्रेलिङ्गमात्राद्याधिक्येसंख्यामात्रेचप्रथमास्यात् ॥ प्रातिपदिकार्थमात्रे उच्चैः निचैः । कृष्णः श्रीः । ज्ञानं । लिङ्गमात्रे तटः । तटी तटं । परिमाणमात्रे द्रोणोव्रीहिः । वचनंसंख्या एकः द्वौ ॥ बहवः । संबोधनेच २ ३ ४७ ॥ प्रथमा हेराम कर्तुरीप्सिततमंकर्म १ ४ ४९ ॥ कर्त्तुः क्रिययाप्तुमिष्टतमङ्कारकङ्कर्मसंज्ञंस्यात् । कर्मणिद्वितीया । २ ३ २ ॥ अनुक्ते हरिंभजति अभिहितेतुकर्मादौप्रथमैव । हरिः

सेव्यते । लक्ष्म्यासेवितोहरिः ॥ शतेनक्रीतःशत्यः । अ
श्वः । प्राप्तानन्दश्चैत्रः ॥ अभिधानंचप्रायेणतिङ्कृतद्धि
तसमासैः । क्वचिन्निपातेनाभिधानं ॥ क्रमादमुन्नारदइ
त्यबोधिसः । अकथितंच १ ४ ५१ ॥ अपादानादिवि
शेषैरविवक्षितंकारकंकर्मसंज्ञंस्यात् । दुह्याच्पच्दण्डरु
धिप्रच्छिचिब्रूशासुजिमंथ्मुपां ॥ कर्मयुक्स्यादकथितंत
थास्यान्नीहृकृष्वहां गांदोग्धिपयः । वलिंयाचतेवसुधां ।
तण्डुलानोदनंपचति । गर्गान्शतंदण्डयति ॥ व्रजमव
रुणद्धिगां । माडवकंपंथानंपृच्छति वृक्षमवचिनोतिफला
नि ॥ माडवकंधर्मंब्रूते । शास्तिवा शतंजयतिदेवदत्तं ।
सुधांक्षीरनिधिंमथ्नाति ॥ देवदत्तं शतंमुष्णाति । ग्राम
मजांनयति हरतिकर्षतिवहतिवा । अर्थनिबंधेयंसंज्ञा ॥
वलिंभिक्षतेवसुधां । माणवकंधर्मंभाषते ॥ अभिधत्तेव
क्तीत्यादि । अकर्मकधातुभिर्योगेदेशःकालोभावोगंतव्यो
ध्वाचकर्मसंज्ञकइतिवाच्यम् कुरून्स्वपिति । मासमास्ते ।
गोदोहमास्ते क्रोशमास्ते । गतिबुद्धिप्रत्यवसानार्थशब्द
कर्माकर्मकाणामणिकर्तासणौ १ ४ ५२ ॥ गत्याद्यर्था
नांशब्दकर्मकाणामकर्मकाणांचाणौयः कर्तासणौकर्मस्या
त् । शत्रूनगमयत्स्वर्गंवेदार्थंस्वानवेदयत् ॥ आशयच्चा
मृतंदेवान्वेदमध्यापयद्विधिं । आसयत्सलिलेपृथ्वीं
यःसमेश्रीहरिर्गतिः । नीवह्योर्न ॥ नाययतिवाहयति
वाभारंभृत्येन । नियंतृकर्तृकस्यवहेरनिषेधः ॥ वाहय
तिरथंवाहान्सूतः ॥ आदिखाद्योर्न ॥ आदयतिखादय
तिवाअन्नंवटुना । भक्षेरहिंसार्थस्यन ॥ भक्षयत्यन्नंवटु

ना अहिंसार्थस्यकिं। भक्षयतिबलिवर्द्दान्सस्यं॥ जल्पतिप्रभृतीनामुपसंख्यानं। जल्पयतिभाषयतिपुत्रंदेवदत्तः। दृशेश्च॥ दर्शयतिहरिंभक्तान्। शब्दायतेतं। शब्दाययतिदेवदत्तेन। हृक्रोरन्यतरस्याम् १ ४ ५३॥ हृक्रोरणौयःकर्त्तासणौवाकर्मस्यात्। हारयतिकारयतिभृत्येनभृत्यंवाकटं अभिवादिदृशोरात्मनेपदेवेतिवाच्यं। अभिवादयतेदर्शयतेदेवंभक्तेनभक्तंवा। अधिशीङ्स्थासांकर्म १ ४ ४६॥ अधिपूर्वाणामेषामाधारःकर्मस्यात्। अधिशेते अधितिष्ठति अध्यास्तेवावैकुण्ठंहरिः अभिनिविशश्च १ ४ ४७॥ अभिनीत्येतत्संघातपूर्वस्यविशतेराधारःकर्मस्यात्। अभिनिविशतेसन्मार्गं॥ क्वचिन्न पापेऽभिनिवेशः। उपान्वध्याङ्वसः १ ४ ४८ उपादिपूर्वस्यवसतेराधारःकर्मस्यात् उपवसति अनुवसति अनुवसति अधिवसति आवसतिवावैकुण्ठंहरिः। अभुक्त्यर्थस्यतुन वनेउपवसति। उभसर्वतसोःकार्याधिगुपर्यादिषुत्रिषु॥ द्वितीयाम्रेडितान्तेषुततोन्यत्रापिदृश्यते। उभयतःकृष्णंगोपाः॥ सर्वतःकृष्णं। धिक्कृष्णाभक्तं उपर्युपरिलोकंहरिः। अध्यधिलोकम्॥ अधोऽधोलोकं अभितः परितः समयानिकषाहाप्रतियोगेपि। अभितःकृष्णं॥ परितःकृष्णं ग्रामंसमया निकषा हाकृष्णाभक्तम् ऋतेकृष्णं॥ वुभुक्षितंनप्रतिभातिकिञ्चित्। अंतरांऽतरेणयुक्ते २ ३ ४॥ द्वितीया अंतरात्वांमांवाहरिः अंतरेणहरिंनसुखं। कर्मप्रवचनीयाः १ ४ ८३॥ इत्यधिकृत्य। अनुर्लक्षणे १ ४ ८४॥ लक्षणेद्योत्येऽनुः

कर्मप्रवचनीयसंज्ञःस्यात् ॥ गत्युपसर्गसंज्ञापवादः । कर्मप्रवचनीययुक्तेद्वितीया २ ३ ८ ॥ जपमनुप्रावर्षत् हेतुभूतजपोपलक्षितंवर्षणमित्यर्थः । तृतीयार्थे । १ ४ ८५ ॥ अनुरुक्तसंज्ञः । नदीमन्ववसितासेना ॥ नद्या सहसंबद्धेत्यर्थः । हीने ॥ १ ४ ८६ ॥ अनुरुक्तसंज्ञः । अनुहरिंसुराः । हरेर्हीनाइत्यर्थः । उपोधिकेच १ ४ ८७ ॥ अधिकेहीनेचउपेत्ययंप्राग्वत् । अधिकेसप्तमीवक्ष्यते हीने उपहरिंसुराः । लक्षणेत्थंभूताख्यानभागवीप्सासुप्रतिपर्यनवः १ ४ ९० ॥ उक्तसंज्ञास्युः । लक्षणे वृक्षंप्रतिपर्यनुवाविद्योततेविद्युत् । इत्थंभूताख्याने ॥ भक्तोविष्णुंप्रतिपर्यनुवा । भागे ॥ लक्ष्मीर्हरिंप्रतिपर्यनुवा । हरेर्भागइत्यर्थः ॥ विप्सायां वृक्षंवृक्षंप्रतिपर्यनुवासिञ्चति एपुकिं ॥ परिषिञ्चति । अभिरभागे १ ४ ९१ ॥ भागवर्जेलक्षणादावभिरुक्तसंज्ञःस्यात् । हरिमभिवर्त्तते भक्तोहरिमभि देवंदेवमभिसिञ्चति ॥ अभागेकिं । यदत्रसमाभिष्यात्तद्दीयताम् । सुःपूजायाम् १ ४ ९४ ॥ सुसिक्तं । सुस्तुतं अनुपसर्गत्वान्नपः पूजायांकिं ॥ सुषिक्तङ्किंतवात्र । क्षेपोयं । अतिरतिक्रमणेच १ ४ ९५ ॥ चात्पूजायामतिरुक्तसंज्ञः । अतिदेवान्कृष्णः । कालाध्वनोरत्यंतसंयोगे २ ३ ५ ॥ इहद्वितीयास्यात् ॥ मासङ्कल्याणी । मासमधीते मासंगुडधानाः ॥ क्रोशंकुटिलानदी । क्रोशमधीते ॥ क्रोशङ्गिरिः अत्यंतसंयोगेकिं । मासस्यद्विरधीते । क्रोशस्यैकदेशेपर्वतः स्वतंत्रःकर्त्तातिकर्तृसंज्ञा । साधकतमङ्करणम् १ ४

क्रियासिद्धौप्रकृष्टोपकारकङ्करणसञ्ज्ञंस्यात् । कर्त्तृकरणयो
स्तृतीया २ ३ १८ ॥ अनभिहितेकर्त्तरिकरणेचतृती
यास्यात् रामेणवाणेनहतोवाली । प्रकृत्यादिभ्यउपसं
ख्यानम् ॥ प्रकृत्याचारुः । प्रायेणयाज्ञिकः ॥ गोत्रेणगा
र्ग्यः । समेनैति । विषमेणैति ॥ द्विद्रोणेनधान्यंक्रीणा
ति । पञ्चकेनपशून्गृह्णाति ॥ सुखेनदुःखेनयातीत्या
दि । दिवःकर्मच १ ३ ४३ ॥ दिवःसाधकतमंकर्मसं
ज्ञंस्याच्चात्करणसंज्ञंच । अक्षैरक्षान्वादीव्यति । सहयु
क्तेऽप्रधाने २ ३ २१ ॥ सहार्थेनयुक्तेऽप्रधानेतृतीया ।
पुत्रेणसहागतःपिता ॥ एवंसाकंसार्द्धंसमंयोगेपि । वि
नापितद्योगंतृतीया ॥ वृद्धोयूनेतिनिर्देशात् । येनाङ्ग
विकारः २ ३ २० ॥ येनाङ्गेनविकृतेनाङ्गिनोविकारोल
क्ष्यतेततस्तृतीया । अक्ष्णाकाणः ॥ अक्षिसम्बन्धिकाण
त्वविशिष्टइत्यर्थः । अपवर्गेतृतीया २ ३ ६ ॥ अपवर्गः
फलप्राप्तिः । तस्यान्द्योत्यायांकालाध्वनोरत्यंतसंयोगे
तृतीयास्यात् अन्हाक्रोशेनवानुवाकोऽधीतः ॥ अपवर्गे
किं । मासमधीतोनायातः ॥ हेतौ २ ३ २३ ॥ तृती
या दण्डेनघटः । इत्थंभूतलक्षणे २ ३ २० ॥ तृतीया ।
जटाभिस्तापसः । जठाज्ञानज्ञाप्यतापसत्वविशिष्टइत्य
र्थः ॥ संज्ञोन्यतरस्यांकर्मणि २ ३ २२ ॥ संपूर्वस्यजा
नातेःकर्मणितृतीया । पित्रापितरंवासंजानीते । कर्मणा
यमभिप्रैतिससंप्रदानम् १ ४ ३२ ॥ दानस्यकर्मणाय
मभिप्रैतिससंप्रदानसंज्ञः । चतुर्थीसंप्रदाने २ ३ १३ ॥
अनुक्ते । विप्रायगान्ददाति ॥ क्रिययायमभिप्रैत्तिसोपि

संप्रदानम्। पत्येशेते॥ परिक्रयणेसंप्रदानमन्यतरस्यां। १ ४ ४४॥ नियतकालंभृत्यास्वीकरणंपरिक्रयणन्तस्मिंसाधकतमंकारकंसंप्रदानंवा। शतेनशतायवापरिक्रीतः। तादर्थ्येचतुर्थीवाच्या मुक्तयेहरिंभजति। उत्पातेनज्ञापितेच॥ वातायकपिलाविद्युत्। नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च २ ३ १६॥ एभिर्योगेचतुर्थीस्यात्। हरयेनमः प्रजाभ्यःस्वस्ति॥ अग्नयेस्वाहा पितृभ्यःस्वधा। अलमितिपर्याप्त्यर्थग्रहणं॥ तेनदैत्येभ्योहरिरलंप्रभुःसमर्थःशक्तइत्यादि। ध्रुवमपायेपादानं १ ४ २४॥ अपायोविश्लेषस्तस्मिन्साध्येध्रुवमवधिभूतमपादानं। अपादानेपञ्चमी २ ३ २८॥ ग्रामादायाति धावतोश्वात्पततिइत्यादि। जनिकर्त्तुःप्रकृतिः १ ४ ३०॥ जायमानस्यहेतुरपादानंस्यात्। ब्रह्मणःप्रजाःप्रजायंते॥ ल्यब्लोपेकर्मण्यधिकरणेच॥ प्रासादात्प्रेक्षते। आसनात्प्रेक्षते॥ प्रासादमारुह्य आसनेउपविश्य प्रेक्षतइत्यर्थः। विभाषागुणेस्त्रियां २ ३ २५॥ गुणेहेतावस्त्रीलिंगेपंचमीवास्यात्॥ जाड्याज्जाड्येनवाबद्धः। गुणेकिं॥ धनेनकुलं अस्त्रियांकिं। बुद्ध्यामुक्तः॥ विभाषेतियोगविभागादगुणेस्त्रियांचक्वचित्। धूमादग्निमान्॥ नास्तिघटोनुपलब्धेः। पृथग्विनानानाभिस्तृतीयान्यतरस्यां २ ३ ३२॥ एभिर्योगेतृतीयास्यात्पंचमीद्वितीयेच। पृथग्रामेणरामाद्रामंवा॥ एवंविनानाना। अन्यारादितरर्त्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते २ ३ २९॥ अन्यइत्यर्थग्रहणं। इतरग्रहणंप्रपंचार्थं॥

अन्योभिन्नइतरोवाकृष्णात्। आरात्वनात्। ऋतेकृ
ष्णात् पूर्वोग्रामात् दिशिदृष्टःशब्दोदिक्शब्दः। तेनसं
प्रतिदेशकालवृत्तिनायोगेपिभवति॥ चैत्रात्पूर्वःफा
ल्गुनः। प्राक्प्रत्यग्वाग्रामात्॥ आचदक्षिणाग्रामात्।
आहिदक्षिणाहिग्रामात्। अपपरीवर्ज्जने १ ४ ८८॥
एतौवर्जनार्थैकर्मप्रवचनीयसञ्ज्ञौस्तः। आङ्मर्यादावच
ने १ ४ ८९॥ आङ्मर्यादायामुक्तसंज्ञः। वचनग्रहणादभि
विधावपि। पंचम्यपाङ्परिभिः २ ३ १०॥ एतैःक
र्मप्रवचनीयैर्योगेपंचमी। अपहरेःपरिहरेःसंसारः। प
र्यत्रवर्जने॥ साहचर्यात्। लक्षणादौतु हरिंपरि आमु
क्तेःसंसारः॥ आसकलाद्ब्रह्म। प्रतिःप्रतिनिधिप्रतिदा
नयोः १ ४ ९२॥ एतयोरर्थयोः प्रतिरुक्तसंज्ञःस्यात्।
प्रतिनिधिप्रतिदानेचयस्मात् २ ३ २५॥ अत्रकर्मप्र
वचनीययोगेपंचमी॥ प्रद्युम्नःकृष्णात्प्रति। तिलेभ्यः
प्रतियच्छतिमाषान्। षष्ठीशेषे २ ३ ५०॥ कारकप्रा
तिपदिकार्थव्यतिरिक्तःस्वस्वामिभावादिःशेषस्तत्रषष्ठी।
राजःपूरुषः॥ कर्मादिनामपिसंबंधमात्रविवक्षयांषष्ट्येव
सतांगतं। सर्पिषोजानीते। मातुःस्मरति॥ एधोदक
स्योपस्कुरुते। भजेशंभोश्चरणयोः॥ फलानांतृप्तः। क
र्तृकर्मणोःकृति २ ३ ६५॥ कृद्योगेकर्त्तरिकर्मणिचषष्ठी
कृष्णस्यकृतिः। जगतःकर्त्ताकृष्णः॥ गुणकर्मणिवेष्यते।
नेताश्वस्यस्रुघ्नंस्रुघ्नस्यवा। कृतिकिं॥ तद्धितेमाभूत्।
कृतपूर्वीकटम्। उभयप्राप्तौकर्मणि २ ३ ६६॥ उभ
योःप्राप्तिर्यस्मिन्कृतितत्रकर्मण्येवषष्ठी। आश्चर्योगवा

न्दोह्योगोपेन । कृत्यानांकर्त्तरिवा २ ३ ७१ ॥ षष्ठी । मयाममवासेव्योहरिः । क्तस्यचवर्त्तमाने २ ३ ६७ ॥ वर्त्तमानार्थस्यक्तस्ययोगेषष्ठी । नलोकेतिवक्ष्यमाणनिषेधस्यापवादः ॥ राज्ञांमतःबुद्धःपूजितोवा । अधिकरणवाचिनश्च २ ३ ६८ ॥ क्तस्ययोगेषष्ठी । इदमेषांशयितम् ॥ नलोकाव्ययनिष्ठाखलर्थतृनाम् २ ३ ६९ ॥ एषांयोगेषष्ठीन । लादेशाः । कुर्वन् कुर्वाणः सृष्टिंहरिः उहरिंदिदृक्षुः ॥ अलंकरिष्णुर्वा । उक दैत्यान् घातुकोहरिः । कमेरनिषेधः ॥ लक्ष्म्याःकामुकः ॥ अव्ययम् ॥ जगत्सृष्ट्वा निष्ठा दैत्यान्हतवान् । विष्णुनाहतादैत्याः खलर्थः । इषत्करःप्रपञ्चोहरिणा । तृन्नितिप्रत्याहारः । शतृशानचावितितृशब्दादारभ्यतृनोनकारात् । शानच् ॥ सोमंपवमानः । चानश् ॥ आत्मानंमण्डयमानः शतृ । वेदमधीयन् ॥ तृन् । कर्त्तालोकान् । द्विषःशतुर्वा मुरस्यमुरंवाद्विषन् । सर्वोयंकारकषष्ठ्याःप्रतिषेधः ॥ शेषेषष्ठीतुस्यादेव । ब्राह्मणस्यकुर्वन् ॥ नरकस्यजिष्णुः । अकेनोर्भविष्यदाधमर्ण्ययोः २ ३ ७० ॥ भविष्यत्यकस्यभविष्यदाधमर्ण्यार्थेनश्चयोगेषष्ठीन । सतःपालकोवतरति ॥ व्रजंगामी । शतंदायी ॥ निमित्तपर्यायप्रयोगेसर्वासांविभक्तीनांप्रायदर्शनम् ॥ किन्निमित्तंवसति । केननिमित्तेन ॥ कस्मैनिमित्तायेत्यादि ॥ एवंकिंकारणं कोहेतुः । किंप्रयोजनमित्यादि ॥ प्रायग्रहणादसर्वनाम्नःप्रथमाद्वितीयेनस्तः ज्ञानेननिमित्तेनहरिःसेव्यः । ज्ञानायनिमित्तायेत्यादि । षष्ठ्यातसर्थप्रत्ययेन २ ३ ३०

ग्रामस्यदक्षिणतः । पुरः । पुरस्तात् ऊपरिउपरिष्टात् ॥ एनपाद्वितीया २ ३ ३१ ॥ एनपेतियोगविभागात्षष्ठ्यपि । दक्षिणेनग्रामं । ग्रामस्यवा एवमुत्तरेण । दूरान्तिकार्थैःषष्ठ्यन्यतरस्यां । २ ३ ३४ ॥ एतैर्योगेषष्ठीपंचमीच दूरंनिकटंवाग्रामस्यग्रामाद्वा । दिवस्तदर्थस्य २ ३ ५८ ॥ द्यूतार्थस्यक्रयविक्रयरूपव्यवहारार्थस्यचदिवःकर्मणिषष्ठी । शतस्यदीव्यति । तदर्थस्यकिं ॥ ब्राह्मणंदीव्यति । स्तौतीत्यर्थः । विभाषोपसर्गे २ ३ ५९ शतस्यशतंवाप्रदीव्यति । आधारोऽधिकरणं १ ४ ४५ कर्त्तृकर्मद्वारातन्निष्ठक्रियायाआधारःकारकमधिकरणसंसंज्ञंस्यात् । सप्तम्यधिकरणेच २ ३ ३६ ॥ चाद्दूरान्तिकार्थेभ्यः । औपश्लेषिकोवैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा । कटेआस्ते स्थाल्यांपचति ॥ मोक्षेइच्छास्ति सर्वस्मिन्नात्मास्ति । वनस्यदूरे ॥ अंतिकेवा । क्तस्येन्विषयस्यकर्मण्युपसंख्यानम् ॥ अधीतीव्याकरणे । साध्वसाधुप्रयोगेच ॥ साधुःकृष्णोमातरि । असाधुर्मातुले ॥ निमित्तात्कर्मयोगे ॥ चर्मणिद्वीपिनंहंतिदन्तयोर्हन्तिकुंजरं केशेषुचमरींहन्तिसीम्निपुष्कलकोहतः ॥ यस्यचभावेनभावलक्षणम् । २ ३ ३७ ॥ यस्यक्रिययाक्रियांतरंलक्ष्यतेततःसप्तमी ॥ गोषुदुह्यमानासुगतः । षष्ठीचानादरे २ ३ ३८ ॥ अनादराधिक्येभावलक्षणेषष्ठीसप्तम्यौस्तः । रुदतिरुदतोवाप्राव्राजीत् ॥ रुदन्तंपुत्रादिकमनादृत्यसन्यस्तवानित्यर्थः । स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च २ ३ ४० ॥ एभिर्योगेषष्ठीसप्तम्यौस्तः । ग

वांगोपुत्रास्वामी। आयुक्तकुशलाभ्यांचासेवायां २ ३ ३० ॥ आभ्यांयोगेषष्ठीसप्तम्यौस्तः। आयुक्तोव्यापारः आयुक्तःकुशलोवाहरिपूजनेहरिपूजनस्यवा। आसेवायांकिं॥ आयुक्तोगौःशकटे॥ ईषद्युक्तइत्यर्थः। यतश्च निर्द्धारणं २ ३ ४१ ॥ जातिगुणक्रियासंज्ञाभिःसमुदायादेकदेशस्यपृथक्करणंयतस्ततःषष्ठीसप्तम्यौस्तः। नृणां नृषुवाब्राह्मणःश्रेष्ठः। गवांगोषुवाकृष्णागौर्बहुक्षीरा॥ गच्छतांगच्छत्सुवाधावन्शीघ्रः छात्राणांछात्रेषुवामैत्रः पटुः। पञ्चमीविभक्ते २ ३ ४२ ॥ विभागोविभक्तं निर्द्धार्यमाणस्ययत्रभेदएवतत्रपंचमी। माथुराःपाटलिपुत्रेभ्यश्चाढ्यतराः। साधुनिपुणाभ्यामर्चायांसप्तम्यप्रतेः २ ३ ४३ ॥ मातरिसाधुर्निपुणोवा। अर्चायांकिं॥ निपुणोराज्ञोभृत्यः। इहतत्वकथनेतात्पर्यम्॥ अप्रत्यादिभिरितिवक्तव्यम्। साधुर्निपुणोवामातरम्प्रतिपर्यनुवा अधिरीश्वरे १ ४ ८७ ॥ स्वस्वामिसम्बन्धेधिः कर्मप्रवचनीयः। यस्मादधिकंयस्यचेश्वरवचनन्तत्रसप्तमी २ ३ ९ अत्रकर्मप्रवचनीययुक्तेसप्तमी। उपपरार्द्धे हरेर्गुणाः। परार्द्धादधिकाइत्यर्थः ऐश्वर्येतुस्वस्वामिभ्यांपर्यायेणसप्तमी अधिभुविरामः अधिरामेभूः इति विभक्त्यर्थाः इतिकारकं॥ समासःपञ्चधा तत्रसमसनं समासः सचविशेषसञ्ज्ञाविनिर्मुक्तःकेवलसमासःप्रथमः प्रायेणपूर्वपदार्थप्रधानोऽव्ययीभावोद्वितीयः। प्रायेणोत्तरपदार्थप्रधानस्तत्पुरुषस्तृतीयः तत्पुरुषभेदः कर्मधारयःकर्मधारयभेदोद्विगुः प्रायेणान्यपदार्थप्रधानोबहुव्रीहिश्च

तुर्थः प्रायेणोभयपदार्थप्रधानोद्वन्द्वःपञ्चमः ॥ समर्थः पदविधिः २ १ १ ॥ पदसंबन्धीयोविधिः ससमर्था श्रितोबोध्यः प्राक्कडारात् समासः २ १ ३ ॥ कडाराः कर्मधारयइत्यतः प्राक्समासइत्यधिक्रियते सहसुपा २ १ ४ ॥ सुप्सुपासहवासमस्यते समासस्त्वात्प्रातिपदिकत्वेसुपोलुक् । परार्थाभिधानंवृत्तिः कृत्तद्धितसमासैकशेषसनाद्यन्ताधातुरूपाः पंचवृत्तयः वृत्त्यर्थावबोधकंवाक्यंविग्रहः सचलौकिकोऽलौकिकश्चद्विधा ॥ तत्रपूर्वंभूत इतिलौकिकः । पूर्वअम्भूतसुइत्यलौकिकःभूतपूर्वः भूतपूर्वेचरडितिनिर्देशात्पूर्वनिपातः । इवेनवासमासोविभक्त्यलोपश्च वागर्थाविव वागर्थाविव ॥ इतिकेवलसमासः अव्ययीभावः अधिकारोयं प्राक्तत्पुरुषात् । अव्ययंविभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु २ १ ६ ॥ विभक्त्यर्थादिषुवर्त्तमानमव्ययंसुबन्तेननित्यंसमस्यते । प्रायेणाविग्रहोनित्यसमासः । प्रायेणास्वपदविग्रहोवा विभक्तौ हरिङि अधिङितिस्थिते । प्रथमानिर्दिष्टंसमासउपसर्जनम् १ २ ४३ ॥ समासशास्त्रे प्रथमानिर्दिष्टमुपसर्ज्जनंस्यात् । उपसर्जनपूर्वम् २ २ ३० ॥ समासेउपसर्जनंप्राक्प्रयोज्यम् । इत्यधेःप्राक्प्रयोगः ॥ सुपोलुक् । एकदेशविकृतस्यानन्यत्वात्प्रातिपदिकसंज्ञायांस्वाद्युत्पत्तिः ॥ अव्ययीभावश्चेत्यव्ययत्वात्सुपोलुक् ॥ अधिहरि । अव्ययीभावश्च १ ४ १८ ॥ नपुंसकंस्यात् । गाःपातीतिगोपाः ॥ तस्मिन्नित्यधिगो

पम्। नाव्ययीभावादतोंत्वपञ्चम्याः २ ४ ८३॥ अदन्ता द्व्ययीभावात्सुपोनलुक्तस्यपञ्चमींविनाऽमादेशः॥ कृष्णस्यसमीपंउपकृष्णम्। तृतीयासप्तम्योर्बहुलम् २ ४ ८४॥ अदन्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलमम्भावः। उपकृष्णेनउपकृष्णं॥ बहुलग्रहणात्सुमद्रमुन्मत्तगङ्गमित्यादौनित्यमम्भावः॥ मद्राणांसमृद्धिःसुमद्रम् यवनानांव्यृद्धिर्दुर्यवनम्। मक्षिकाणामभावोनिर्मक्षिकं हिमस्यात्ययोऽतिहिमं। निद्रासंप्रतिनयुज्यतेऽतिनिद्रम्॥ हरिशब्दस्यप्रकाशइतिहरि। विष्णोःपश्चादनुविष्णु॥ योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानियथार्थाः॥ रूपस्ययोग्यमनुरूपम्॥ अर्थमर्थंप्रतिप्रत्यर्थम्॥ शक्तिमनतिक्रम्ययथाशक्ति॥ अव्ययीभावेचाकाले ६ ३ ८५॥ सहस्यसःस्यादव्ययीभावेनतुकाले। हरेःसादृश्यं सहरि। कालेतुसहपूर्वाह्णम्॥ जेष्ठस्यानुपूर्व्येणेत्यनुजेष्ठम्। चक्रेणयुगपत्सचक्रम्॥ सदृशः सख्यासस्खि। क्षत्राणांसंपत्तिःसक्षत्रं। तृणमप्यपरित्यज्यसतृणम्॥ अग्निग्रन्थपर्यन्तमधीतेसाग्नि यथासादृश्ये २ १ ७॥ असादृश्येएवयथाशब्दःसमस्यते तेनेहन। यथाहरिस्तथाहरः॥ यावदवधारणे २ १ ८॥ यावन्तःश्लोकास्तावन्तोऽच्युतप्रणामाइतियावच्छ्लोकम्। सुप्प्रतिनामात्रार्थे २ १ ९॥ शाकस्यलेशःशाकप्रति। विभाषा २ १ ११॥ अधिकारोयम्। अपपरिवहिरंचवः पञ्चम्याः २ १ १२॥ अपविष्णुसंसारः। अपविष्णोः॥ परिविष्णु। परिविष्णोः॥ वहिर्वनं। वहिर्वनात्। प्राग्वनम्। प्राग्वनात्॥

तिष्ठद्गुप्रभृतीनिच २ १ १७ ॥ एतानिनिपात्यन्ते ।
तिष्ठन्तिगावोयस्मिन्कालेसतिष्ठद्गुदोहनकालः ॥ पारे
मध्येषष्ठ्यावा २ १ १८ ॥ पारमध्यशब्दौषष्ठ्यन्तेनसह
वासमस्यते । एदन्तत्वंचानयोर्निपात्यते ॥ पारेगङ्गं ।
गङ्गापारं । मध्येगङ्गं ॥ गङ्गामध्यम् । महाविकल्पेन
वाक्यमपि । संख्यावंश्येन २ १ १९ ॥ वंशोद्विधा ।
विद्ययाजन्मनाच ॥ तत्रभवोवंश्यः । तद्वाचिनासहसं
ख्यासमस्यते ॥ द्वौमुनिवंश्यौद्विमुनि । व्याकरणस्यत्रि
मुनि ॥ विद्यातद्वतामभेदविवक्षायान्तुत्रिमुनिव्याकरण
म् । एकविंशतिभारद्वाजम् । नदीभिश्च २ १ २० ॥
नदीभिःसंख्यावासमस्यते । समहारेचायमिष्यते पञ्च
गङ्गं द्वियमुनम् ॥ अन्यपदार्थेचसंज्ञायाम् २ १ २१ ॥
अन्यपदार्थेसुवंतंनदीभिः सहनित्यंसमस्यतेसंज्ञायां वि
भाषाधिकारेपिवाक्येनसंज्ञानवगमादिहनित्यसमासः ।
उन्मन्तगङ्गंनामदेशः । लोहितगङ्गं ॥ तद्धिताः ४ १
७६ ॥ आपंचमसमाप्तेरधिकारोयम् । अव्ययीभावेशर
त्प्रभृतिभ्यः ५ ४ १०७ ॥ शरदादिभ्यष्टच्स्यात्समासान्तो
ऽव्ययीभावे । शरदःसमीपमुपशरदम् ॥ प्रतिविपाशम्
शरद् । विपाश् अनस् मनस् उपानह् ॥ दिव् हिमवत्
अनडुह् ॥ दिश् दृश् विश् चेतस् चतुर् त्यद् तद् यत्
कियत् जरायाजरस्च उपजरसम् अनश्च ५ ४ १०८ ॥
अनन्तादव्ययीभावाट्टच्स्यात् नस्ताद्धिते ६ ४ १४४ ॥
नान्तस्यभस्यटेर्लोपस्ताद्धिते ॥ उपराजम् अध्यात्मम्
नपुंसकादन्यतरस्याम् ४ ५ १०९ ॥ अन्नंतंयत्क्लीवंत

दन्ताद्व्ययीभावाट्टच्स्यात् उपचर्मम् उपचर्म झयः ५।४।११२॥ झयन्ताद्व्ययीभावाट्टच्स्यात्॥ उपसमित् उपसमिधम्॥ नदीपौर्णमास्याग्रहायणीभ्यः ५।४।११०॥ वाटच्स्यात्॥ उपनदम्॥ यस्येतिचेति इलोपः॥ उपनदीत्यादि॥ गिरेश्चसेनकस्य ५।४।११३॥ टच्वास्यात्॥ उपगिरम्॥ उपगिरि॥ प्रतिपरसमनुभ्योक्ष्णः॥ टच्स्यात्॥ अक्ष्णोभिमुखम् प्रत्यक्षम्। अक्ष्णः परम्परोक्षम्॥ अतएवसमासः॥ परोक्षेलिडितिनिपातनात्परस्यौकारः। इत्यादि॥ इत्यव्ययीभावः॥ तत्पुरुषः २।१।२२॥ अधिकारोयम्प्राग्बहुव्रीहेः। द्विगुश्च २।१।२३॥ तत्पुरुषसंज्ञः॥ द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः २।१।२४ द्वितीयान्तंश्रितादिप्रकृतिकैः सुबन्तैःसहवासमस्यते॥ कृष्णंश्रितःकृष्णश्रितः। इत्यादि॥ तृतीयातत्कृतार्थेनगुणवचनेन २।१।३०॥ तृतीयान्तंतृतीयान्तार्थकृतगुणवचनेनार्थेनचसहप्राग्वत्॥ शंकुलयाखंडः। शकुलाखंडः॥ धान्येनार्थोधान्यार्थः॥ तत्कृतेतिकिं॥ अक्ष्णाकाणः॥ पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः २।१।३१॥ तृतीयांतमेतैःप्राग्वत्॥ मासपूर्वः॥ मातृसदृशः॥ पितृसमः॥ ऊनार्थः॥ माषोनंकार्षापणम्। माषविकलम्॥ वाक्कलहः॥ आचारनिपुणः॥ गुडमिश्रः॥ आचारश्लक्ष्णः॥ अवरस्योपसंख्यानम्॥ मासावरः॥ अन्नेनव्यंजनम् २।१।३४॥ संस्कारकद्रव्यवाचकन्तृतीयान्तमन्नेनसहप्राग्वत्॥ दध्नाउपसिक्तम्ओदनन्द

ध्योदनं । भक्ष्येणमिश्रीकरणम् २ १ ३५ ॥ गुडेनमि
श्राधानागुडधानाः । कर्तृकरणेकृताबहुलम् २ १ ३२ ॥
कर्त्तरिकरणेचतृतीयाकृदन्तेनबहुलंप्राग्वत् । हरिणात्रा
तोहरित्रातः नखभिन्नः ॥ कृद्ग्रहणेगतिकारकपूर्वस्यापि
ग्रहणम् नखनिर्भिन्नः । चतुर्थीतदर्थार्थबलिहितसुखर
क्षितैः २ १ ३६ ॥ चतुर्थ्यंतार्थाययत्तद्वाचिनार्थादिभिश्चचतु
र्थ्यंतंप्राग्वत् । यूपायदारुयूपदारु ॥ तदर्थेनप्रकृतिविकार
भावएवेष्टिः ॥ तेनेहन रंधनायस्थाली अश्वघासादयस्तु
षष्ठीतत्पुरुषाः । अर्थेननित्यसमासोविशेष्यलिङ्गताचेति
वक्तव्यं द्विजायायंद्विजार्थःसूपः द्विजार्थायवागूः द्विजार्थं
पयः । भूतबलिः ॥ गोहितं । गोसुखं ॥ गोरक्षितं पञ्च
मीभयेन २ १ ३७ ॥ चोराद्भयं । चोरभयं ॥ स्तोकां
तिकदूरार्थकृच्छ्राणिक्तेन २ १ ३९ ॥ पंचम्याःस्तोका
दिभ्यः ६ ३ २ ॥ अलुगुत्तरपदे । स्तोकान्मुक्तः ॥ अ
ल्पान्मुक्तः । अंतिकादागतः ॥ अभ्याशादागतः । दूरा
दागतः ॥ विप्रकृष्टादागतः । कृच्छ्रादागतः ॥ षष्ठी २
२ ८ ॥ सुबन्तेनप्राग्वत् । राज्ञःपुरुषः ॥ राजपुरुषः ।
याजकादिभिश्च २ २ ९ ॥ षष्ठ्यंतंसमस्यते । वक्ष्यमा
णस्यापवादः । ब्राह्मणयाजकः ॥ देवपूजकः । याज
कपूजकपरिचारकपरिवेषकस्नातकाध्यापकोत्सादकोद्व
र्त्तकहोतृपोतृभर्त्तृरथगणकपत्तिगणकानि ॥ गुणात्तरेणत
रलोपश्च ॥ तरवंतंयद्गुणवाचितेनसमासः । सर्वेषांश्वे
ततरःसर्वश्वेतः ॥ सर्वेषांमहत्तरःसर्वमहान् । नर्निर्द्धार
णेन २ २ १० ॥ षष्ठीनसमस्यते । नृणांद्विजःश्रेष्ठः ॥

पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन २ २ ११॥ पूरणाद्यर्थैःसदादिभिश्चषष्ठीनसमस्यते। सतांषष्ठः काकस्यकार्ष्ण्यम्। सुहितार्थास्तृप्त्यर्थाः॥ फलानांसुहितः। सत्॥ द्विजस्यकुर्वन्कुर्वाणोवा। ब्राह्मस्यकृत्वा पूर्वोत्तरसाहचर्यात्कृदव्ययमेवगृह्यते॥ तेनतदुपरीत्यादिसिद्धं। ब्राह्मणस्यकर्त्तव्यं॥ तक्षकस्यसर्पस्य। क्तेन चपूजायां २ २ १२॥ मतिवुद्धिसूत्रेणविहितोयःक्तस्तदंतेनषष्ठीनसमस्यते राज्ञांमतोवुद्धःपूजितोवा। अधिकरणवाचिनाच २ २ १३॥ क्तेनषष्ठीनसमस्यते। इदमेषामासितंगतंभुक्तंवा। कर्मणिच २ २ १४॥ उभयप्राप्तौकर्मणीतियाषष्ठीसानसमस्यते। आश्चर्योगवांदोहोगोपेन॥ तृजकाभ्यांकर्त्तरि २ २ १५॥ कर्त्रर्थतृजकाभ्यांषष्ठ्यानसमासः। अपांस्रष्टा॥ वज्रस्यभर्ता। ओदनस्यपाचकः॥ कर्त्तरिच २ २ १६॥ कर्त्तरिषष्ठ्याअक्रेननसमासः। भवतःशायिका॥ पूर्वापरधरोत्तरमेकदेशिनैकाधिकरणे २ २ १॥ अवयविनासहपूर्वादयः समस्यंतेएकत्वसंख्याविशिष्टश्चेदवयवी। षष्ठीसमासापवादः पूर्वंकायस्यपूर्वकायः। अपरकायः एकदेशिनाकिं पूर्वंनाभेःकायस्य एकाधिकरणेकिं॥ पूर्वश्छात्राणां। अर्द्धंनपुंसकं २ २ २॥ समांशवाच्यर्द्धशब्दोनित्यंक्लीवे समाग्वत्। अर्द्धंपिप्पल्याअर्द्धपिप्पली॥ एकविभक्तावषष्ठ्यंतवचनमित्युपसर्जनसंज्ञाभावाद्ध्रस्वोन। क्लीवे किं॥ ग्रामार्द्धः। द्रव्यैक्यएव अर्द्धंपिप्पलीनां॥ द्वितीतृतीयचतुर्थतुर्याण्यन्यतरस्याम् २ २ ३॥ एतान्येकदे

शिनासहप्राग्वद्वा । द्वितीयंभिक्षायाः ॥ द्वितीयभिक्षा एकदेशिनाकिं । द्वितीयंभिक्षायाभिक्षुकस्य ॥ अन्यतरस्यांग्रहणसामर्थ्यात्पूरणगुणेतिनिषेधंबाधित्वापक्षेषष्ठीसमासः । भिक्षाद्वितीयं ॥ प्राप्तापन्नेचद्वितीयया २ २ ४ ॥ पक्षेद्वितीयाश्रितेतिसमासः । प्राप्तोजीवनं ॥ प्राप्तजीवनः । जीवनप्राप्तः ॥ आपन्नजीवनः । जीवनापन्नः । इहसूत्रेद्वितीययाअइतिछित्वाअकारोपिविधीयते ॥ तेनजीविकांप्राप्तास्त्रीप्राप्तजीविका । आपन्नजीविका ॥ कालाःपरिमाणिना २ २ ५ ॥ परिछेद्यवाचिनासुबन्तेनसहकालाःसमस्यन्ते । मासोजातस्ययस्यसमासजातः ॥ सप्तमीशौंडैः २ २ ४० ॥ सप्तम्यंतंशौंडादिभिःप्राग्वत् । अक्षेषुशौंडः ॥ अक्षशौंडः । शौंडधूर्त्तकितवव्याडप्रवीणसंवीतान्तराधिपपटुपण्डितकुशलचपलनिपुणानि । द्वितीयातृतीयेत्यादियोगविभागादन्यत्रापिद्वितीयादिनाम्प्रयोगवशात्समासोज्ञेयः ॥ दिक्संख्येसंज्ञायां २ १ ५० ॥ विशेषणंविशेष्येणबहुलमित्येवसिद्धेसंज्ञायामेवेतिनियमार्थंसूत्रं । पूर्वेषुकामशमी ॥ सप्तर्षयः । तेनेहन । उत्तरावृक्षाः ॥ पञ्चब्राह्मणाः । तद्धितार्थोत्तरपदसमाहारेच २ २ ५१ ॥ तद्धितार्थेविषयेउत्तरपदेचपरतःसमाहारेचवाच्येदिक्संख्येप्राग्वत् । पूर्वस्यांशालायांभवःपूर्वाशालाइतिसमासेजाते । सर्वनाम्नोवृत्तिमात्रेपूर्वंपुंवत् ॥ दिक्पूर्वपदादसंज्ञायांञः ४ २ १०७ ॥ अस्माद्भवाद्यर्थेञःस्यादसंज्ञायां । तद्धितेष्वचामादेः ७ २ १०७ ॥ ञितिणितिचतद्धितेअचा

मादेरचोवृद्धिःस्यात्। यस्येतिच॥ पौर्वशालः॥ पूर्वा शालाप्रियायस्येतित्रिपदेवहुव्रीहौकृतेप्रियाशब्दे उत्तरप देपूर्वयोस्तत्पुरुषः। तेनशालाशब्देआकारउदात्तः। पूर्व शालाप्रियः। दिक्समाहारोनास्त्यनभिधानात्। संख्या यास्तद्धितार्थे॥ पण्णांमातृणामपत्यंपाण्मातुरः मातुरु त्संख्यासंभद्रपूर्वायाइतिवक्ष्यमाणोऽण्। पंचगावोधनंय स्येतित्रिपदेवहुव्रीहौअवान्तरतत्पुरुषस्यविकल्पेप्राप्ते। द्वन्द्वतत्पुरुषयोरुत्तरपदेनित्यसमासवचनं॥ गोरतद्धित लुकि ५ ४ ९२॥ गोंतात्तत्पुरुषाट्टच्स्यात्समासांतोन तद्धितलुकि पञ्चगवधनः॥ संख्यापूर्वोद्विगुः २ १ ५२॥ तद्धितार्थेत्यत्रोक्तःसंख्यापूर्वोद्विगुः॥ द्विगुरेकवचनं २ ४ १॥ द्विग्वर्थसमाहारएकवत्स्यात्॥ सनपुंसकं २ ४ १७॥ समाहारेद्विगुर्द्वन्द्वश्चनपुंसकंस्यात् पञ्चानाङ्गवां समाहारःपञ्चगवं॥ विशेषणंविशेष्येणवहुलं २ १ ५७॥ भेदकंभेद्येनसमानाधिकरणेनवहुलंप्राग्वत्। नीलमुत्पलंनी लोत्पलं। वहुलग्रहणात्क्वचिन्नित्यं कृष्णसर्पः क्वचिन्न। रामोजामदग्न्यः। अपरस्यार्द्धेपश्चभावोवक्तव्यः। अपर श्चासावर्द्धश्चपश्चार्द्धः। सन्महत्परमोत्तमोत्कृष्टाः पूज्यमा नैः २ १ ६१॥ सहसमस्यन्ते सद्वैद्यः आन्महतःसमानाधि करणजातीययोः ६ ३ ४६॥ महावैयाकरणः तत्पुरुषः समानाधिकरणःकर्मधारयः १ २ ४२॥ पुंवत्कर्मधारय जातीयदेशीयेषु ६ ३ ४२॥ कर्मधारयेजातीयदेशीय योश्चपरतोभाषितपुंस्कात्परऊङभावोयस्मिन्तथाभूतंपू र्वंपुंवत् पूरण्यांप्रियादिषुप्राप्तःपुंवद्भावोविधीयते महा

नवमी कृष्णचतुर्दशी महाप्रिया पूज्यमानैःकिं उत्कृष्टो गौः। पङ्कादुद्धृतइत्यर्थः ॥ उपमानानिसामान्यवचनैः २ १ ५५ ॥ घनश्यामः उपमितंव्याघ्रादिभिः सामान्याप्रयोगे २ १ ५६ ॥ पुषोव्याघ्रइवपुरुषव्याघ्रः । सामान्याप्रयोगेकिं । पुरुषोव्याघ्रइवशूरः शाकपार्थिवादीनामुत्तरपदलोपश्च शाकप्रियः पार्थिवः शाकपार्थिवः देवब्राह्मणः । कडाराःकर्मधारये २ २ ३८ ॥ कडारादयः शब्दाःकर्मधारयेवापूर्वंप्रयोज्याः। कडारजैमिनिः। जैमिनिकडारः ॥ मयूरव्यंसकादयश्च २ १ ७२ ॥ एतेनिपात्यन्ते । मयूरोव्यंसकोमयूरव्यंसकः ॥ व्यंसकोधूर्त्तः । उदक्चअवाक्चउच्चावचं । निश्चितंचप्रचितंचनिश्चप्रचम् ॥ नास्तिकिंचनयस्यसोऽकिंचनः । आख्यातमाख्यातेनक्रियासातत्ये ॥ अश्नीतपिबतेत्येवंसततंयत्राभिधीयतेसाअश्नीतपिबता । पचतभृज्जता ॥ खादतमोदता ॥ नास्तिकुतोभयंयस्यसअकुतोभयः ॥ अन्योराजा राजान्तरं ॥ चिदेवचिन्मात्रं ॥ नञ् २ २ ६ ॥ सुपा प्राग्वत् । नलोपोनञः ६ ३ ७२ ॥ नञोनस्यलोपउत्तरपदे ॥ अब्राह्मणः ॥ तस्मान्नुडचि २ ३ ७४ ॥ लुप्तनकारान्नञउत्तरपदस्याजादेर्नुट् । अनश्वः ॥ नैकधेत्यादौतुनशब्देनसहसुप्सुपेतिसमासः । कुगतिप्रादयः २ २ १८ ॥ एतेसमर्थेनानित्यंसमस्यंते । कुत्सितःपुरुषः कुपुरुषः ॥ ऊर्यादिच्विडाचश्च १ ४ ६१ ॥ ऊर्यादयः च्व्यन्ताडाजंताश्चक्रियायोगेगतिसंज्ञास्युः । उरीकृत्य । शुक्लीकृत्य ॥ पटपटाकृत्य । कारिकाशब्दस्योपसंख्यानं ।

कारिकाक्रिया ॥ कारिकाकृत्य । अनुकरणंचानितिप रम् ५ ४ ६ २ ॥ खाट्कृत्य । अनितिपरङ्किम् ॥ खाडिति कृत्वानिरष्ठीवत् । आदरानादरयोःसदसती १ ४ ६ ३ ॥ सत्कृत्य । असत्कृत्य ॥ भूषणेऽलं १ ४ ६ ४ ॥ अलंकृत्य । भूषणेकिं ॥ अलंकृत्वौदनंगतः । पर्याप्तमित्यर्थः ॥ अनु करणमित्यादित्रिसूत्रीस्वभावात्कृञ्चिपया । अन्तरप रिग्रहे १ ४ ६ ५ ॥ अंतर्हत्य । मध्येहत्वेत्यर्थः ॥ अप रिग्रहेकिं । अंतर्हत्वागतः ॥ हतंपरिगृह्यगतइत्यर्थः । कणेमनसीश्रद्धाप्रतिघाते १ ४ ६६ ॥ कणेहत्यपयः पिवति । मनोहत्य ॥ कणेशब्दःसप्तमीप्रतिरूपकोनिपा तोऽभिलाषातिशयेवर्तते । मनश्शब्दोप्यत्रैव ॥ पुरोव्य यं १ ४ ६ ७ ॥ पुरस्कृत्य । अस्तंच १ ४ ६ ८ ॥ अस्तमि तिमांतमव्ययंगतिसंज्ञंस्यात् । अस्तंगत्य ॥ १ ४ ६ ९ ॥ अच्छगत्यर्थवदेषु १ ४ ६९ ॥ अव्ययमित्येव अच्छग त्य । अच्छोद्य ॥ अभिमुखंगत्वाउक्त्वाचेत्यर्थः । अव्ययं किं । जलमच्छंगच्छति । अदोनुपदेशे १ ४ ७० ॥ अदः कृत्यादःकृतं परंप्रत्युपदेशेप्रत्युदाहरणं । अदःकृत्वाअदः कुरु ॥ तिरोंतर्द्धौ १ ४ ७१ ॥ तिरोभूय । विभाषाकृञि १ ४ ७२ ॥ तिरसोन्यतरस्यां ८ ३ ४२ ॥ सोवास्यात्कुप्वोः तिरःकृत्य ॥ तिरस्कृत्य । तिरःकृत्वा उपाजेन्वाजे १ ४ ७३ ॥ एतौकृञिवागतिसंज्ञौ । उपाजेकृत्य अन्वाजेकृत्य उपाजेकृत्वा अन्वाजेकृत्वा । दुर्बलस्यवलमाधायेत्यर्थः ॥ १ ४ ७४ ॥ साक्षात्प्रभृतीनिच १ ४ ७४ ॥ कृञिवागतिसंज्ञा स्युः ॥ च्व्यर्थइति वक्तव्यम् । साक्षात्कृत्य साक्षात्कृत्वा

लवणंकृत्य । लवणंकृत्वा मांतत्वंनिपातनात् । अनत्या
धानउरसिमनसी १ ४ ७५ ॥ उरसिकृत्य । उरसिकृत्वा ।
अभ्युपगम्येत्यर्थः । मनसिकृत्य मनसिकृत्वा । निश्चित्ये
त्यर्थः ॥ अत्याधानमुपश्लेषस्तत्रन । उरसिकृत्वापाणिंशे
ते ॥ मध्येपदेनिवचने च १ ४ ७५ ॥ एतेकृञिगतिसंज्ञा
वास्युरनत्याधाने । मध्येकृत्य ॥ मध्येकृत्वा । पदेकृत्य
पदेकृत्वा निवचनेकृत्य ॥ निवचनेकृत्वा । वाचंनियम्ये
त्यर्थः ॥ नित्यंहस्तेपाणावुपयमने १ ४ ७७ ॥ कृञि ।
उपयमनंविवाहः ॥ स्वीकारमात्रमित्यन्ये । हस्तेकृत्य ॥
पाणौकृत्य । प्राध्वंवंधने १ ४ ७८ ॥ प्राध्वमित्यव्ययं ।
प्राध्वंकृत्य ॥ वंधनेनानुकूलंकृत्वेत्यर्थः । प्रार्थनादिना
त्वानुकूल्यकरणेप्राध्वंकृत्वा ॥ जीविकोपनिषदावौपम्ये
१ ४ ७९ ॥ जीविकामिवकृत्वाजीविकाकृत्य । औप
म्येकिं ॥ जीविकांकृत्वा । प्रादिग्रहणमगत्यर्थम् । सु
पुरुषः । प्रादयोगताद्यर्थेप्रथमया ॥ प्रगतआचार्यप्रा
चार्यः । अत्यादयःक्रांताद्यर्थेद्वितीयया ॥ अतिक्रांतो
मालामितिविग्रहे । एकविभक्तिचापूर्वनिपाते १ २ ४४ ॥
विग्रहेयन्नियतविभक्तिकन्तदुपसर्जनन्नतुतस्यपूर्वनिपा
तः । गोस्त्रियोरुपसर्जनस्य १ २ ४८ ॥ उपसर्जनंयो
गोशब्दःस्त्रीप्रत्ययांतंचतदन्तस्यप्रातिपदिकस्यह्रस्वः ।
अतिमालः । अवादयःकुष्टाद्यर्थेतृतीयया ॥ अवक्रुष्टः
कोकिलयाऽवकोकिलः । पर्यादयोग्लानाद्यर्थेचतुर्थ्या ॥
परिग्लानोध्ययनायपर्यध्ययनः ॥ निरादयःक्रांताद्यर्थे
पंचम्या । निष्क्रांतःकौशांब्याःनिःकौशांबिः । तत्रोप

पदंसप्तमीस्थं ॥ उपपदमतिङ् २ २ १९ ॥ उपपदंसमर्थेननित्यंसमस्यतेअतिङंतश्चसमासः । कुंभंकरोतीति कुंभकारः । अतिङ्किं । माभवान्भूत् । माङिलुङीति सप्तमीनिर्देशान्माङुपपदं ॥ गतिकारकोपपदानांकृद्भिः समासवचनंप्राक्सुबुत्पत्तेः । व्याघ्री । कच्छपी । अश्वक्रीतीत्यादि । अमैवाव्ययेन । २ २ २० ॥ अमैवतुल्यविधानंयदुपपदंतदेवाव्ययेनसहसमस्यते । स्वादुंकारं । स्वादुमिणमुलूइतिणमुल् । नेह । कालसमयवेलासुतुमुन् । कालःसमयोवेलावाभोक्तुं ॥ अमैवेतिकिं । अग्रेभोजम् । अग्रेभुक्त्वा । विभाषाग्रेप्रथमपूर्वेष्वितिक्त्वाणमुलौ । अमाचान्येनचतुल्यविधानमेतत् । तृतीयाप्रभृतीन्यन्यतरस्याम् २ २ २१ ॥ उपदंशस्तृतीयायामित्यादीन्युपपदान्यमंतेनाव्ययेनसहवासमस्यंते । मूलकेनोपदंशंभुंक्ते मूलकोपदंशम् । उपदंशस्तृतीयायामितिणमुल् । क्त्वाच २ २ २२ ॥ तृतीया प्रभृतीन्युपपदानिक्त्वातेनसहवा समस्यंते । उच्चैःकृत्य । उच्चैःकृत्वा अव्ययेयथाभिप्रेताख्यानेकृञःक्त्वाणमुलौ । तत्पुरुषस्यांगुलेः संख्याव्ययादेः ५ ४ ८६ ॥ संख्याव्ययादेरंगुल्यंतस्यतत्पुरुषस्यसमासांतोच्स्यात् । द्वेअंगुलीप्रमाणमस्यद्व्यंगुलं । निरंगुलं । अहःसर्वैकदेशसंख्यातपुण्याच्चरात्रेः ५ ४ ८७ ॥ एभ्योरात्रेरच्स्यात् । चात्संख्याव्ययादेः । अहर्ग्रहणन्द्वन्द्वार्थम् । रात्राह्नाहाःपुंसि २ ४ २९ ॥ एतेपुंस्येव । अहश्चरात्रिश्चाहोरात्रः । सर्वरात्रः । पूर्वरात्रः । संख्यातरात्रः । संख्यापूर्वंरात्रंक्लीवं ॥ द्विरात्रं । अतिरात्रः

राजाहःसखिभ्यष्टच् ५ ४ ९१ ॥ एतदंतात्तत्पुरुषाट्टच् । परमराजः । कृष्णसखः । अह्नष्टखोरेव ६ ४ १४५ ॥ टिलोपः । उत्तमाहः । अह्नोह्नएतेभ्यः ५ ४ ८८ ॥ सर्वादिभ्योऽहन्शब्दस्याह्नादेशःसमासान्तेपरे । अह्नोदन्तात् ८ ४ ७॥ अदंतपूर्वपदस्थान्निमित्तादह्नोनस्यणः । सर्वाह्णः । नसंख्यादेःसमाहारे ५ ४ ८९ ॥ अह्नोह्नादेशोन । द्व्यहः । उत्तमैकाभ्यांच ५ ४ ९० ॥ अह्नोह्नादेशोन । उत्तमशब्दोंत्यार्थः । पुण्यशब्दमाह । पुण्यसुदिनाभ्यामह्नःक्लीबतेष्टा ॥ पुण्याहं । सुदिनाहं एकाहः । अग्र्याख्यायामुरसः ५ ४ ९३ ॥ टच् । अश्वानामुरइवअश्वोरसं । मुख्योश्वइत्यर्थः । ग्रामकौटाभ्यांचतक्ष्णः ५ ४ ९४ ॥ ग्रामतक्षः । कौटतक्षः अतेःशुनः ५४९६ ॥ अतिश्वोवराहः । उपमानादप्राणिषु ५ ४ ९७॥ अप्राणिविषयोपमानवाचिनःश्वुनष्टच् । आकर्षःश्वेवआकर्षश्वः । उत्तरमृगपूर्वाच्चसक्थ्नः ५ ४ ९८ ॥ चादुपमानात् । उत्तरसक्थं । मृगसक्थं । पूर्वसक्थं । फलकमिवसक्थिफलकसक्थं । नावोद्विगोः ५ ४ ९९॥ द्विनावं । त्रिनावं । अर्द्धाच्च ५ ४ १०० ॥ अर्द्धनावं । खार्याःप्राचाम् ५ ४ १०१ ॥ द्विगोरर्द्धाच्चखार्याष्टज्वा द्विखारं द्विखारि अर्द्धखारं अर्द्धखारी । द्वित्रिभ्यामंजलेः ५ ४ १०२ ॥ द्व्यंजलं । द्व्यञ्जलिः । ब्रह्मणोजानपदाख्यायां ५ ४ १०४ ॥ ब्रह्मांतातत्पुरुषाट्टच् । सुराष्ट्रे ब्रह्मासुराष्ट्रब्रह्मः । कुमहद्भ्यामन्यतरस्यां ५ ४ १०५ ॥ कुब्रह्मः । कुब्रह्मा । महाब्रह्मः । महाब्रह्मा ॥ प्रकारव

चने जातीयर् ॥ महाप्रकारोमहाजातीयः । ह्यष्टनःसंख्या यामबहुव्रीह्यशीत्योः ६ ३ ४७ ॥ आत्स्यात् । द्वादश । अष्टादश । अबहुव्रीह्यशीत्योःकिं । द्वित्राः । ह्यशीतिः । प्राक्शताद्वक्तव्यं । नेह द्विशतं । त्रेस्त्रयः ६ ३ ४८ ॥ त्रिशब्दस्यत्रयसादेशःस्यात्पूर्वविषये । त्रयोदशः । त्रयो विंशतिः ॥ विभाषाचत्वारिंशत्प्रभृतौसर्वेषां । ६ ३ ४९ ह्यष्टनोस्त्रेश्चप्रागुक्तंवाचत्वारिंशदादौपरे । द्विचत्वा रिंशत् । द्वाचत्वारिंशत् । अष्टचत्वारिंशत् । अष्टा चत्वारिंशत् । त्रिचत्वारिंशत् । त्रयश्चत्वारिंशत् ॥ एवम्पञ्चाशत्षष्टौ्प्रतिनवतिषु ॥ परवल्लिङ्गन्द्वन्द्वत त्पुरुषयोः २ ४ २६ ॥ कुक्कुटमयूर्याविमे । मयूरीकुक्कुटा विमौ । अर्द्धपिप्पली । द्विगुप्राप्तापन्नालंपूर्वगतिसमा सेषुन ॥ पंचसुकपालेषुसंस्कृतः । पंचकपालःपुरोडाशः ॥ प्राप्तोजीविकांप्राप्तजीविकः । आपन्नजीविकः । अलं कुमारिः ॥ अतएवज्ञापकात्समासः । निष्कौशांबिः ॥ पूर्ववदश्ववडवौ २ ४ २७ ॥ द्वित्वमतंत्रं । अश्ववडवौ । अश्ववडवान् । अपथंनपुंसकं २ ४ ३० ॥ तत्पुरुषइ त्येव । अन्यत्रतुअपथोदेशः । कृतसमासांतग्रहणान्नेह । अपन्थाः । अकारान्तोत्तरपदोद्विगुःस्त्रियामिष्टः ॥ पं चपूली । अवन्तोवा ॥ पंचखट्वं । पंचखट्वी । पात्रा द्यंतस्यन ॥ पंचपात्रं त्रिभुवनं । चतुर्युगं ॥ छायाबा हुल्ये २ ४ २२ ॥ छायांतस्तत्पुरुषोनपुंसकंस्यात्पूर्वप दार्थबाहुल्ये । इक्षूणांछायाइक्षुछायं । सभाराजामनु ष्यपूर्वा २ ४ २३ ॥ राजपर्यायपूर्वोऽमनुष्यपूर्वश्चसभा

तस्तत्पुरुषोनपुंसकंस्यात् । इनसभं ईश्वरसभं ॥ अम नुष्यशब्दोरूढ्यारक्षःपिशाचादीनाह । रक्षःसभं पिशाच सभं । विभाषासेनासुराच्छायाशालानिशानां २ ४ २५ एतदन्तस्तत्पुरुषःक्लीवंवा ॥ ब्राह्मणसेनं । ब्राह्मणसे ना ॥ इत्यादि । अशालाच २ ४ २४ ॥ संघातार्था यासभातदन्तस्तत्पुरुषःक्लीवंस्यात् । स्त्रीसभं ॥ स्त्रीसं घातइत्यर्थः । अशालाकिं॥ धर्मसभा । धर्मशालेत्यर्थः । अर्द्धर्चाःपुंसिच । २ ४ ३१ ॥ अर्द्धर्चादयःपुंसिक्लीवेच स्युः । अर्द्धर्चम् ॥ अर्द्धर्चः । एवंध्वजतीर्थशरीरमंडपयू षदेहांकुशकलशसूत्रपात्रादयः ॥ सामान्येनपुंसकं । मृ दुपचति ॥ प्रातःकमनीयम् ॥ इतितत्पुरुषः ॥ शेषोब हुव्रीहिः २ २ २३ ॥ अधिकारोयंप्राग्द्वंद्वात् । अनेक मन्यपदार्थे २ २ २४ ॥ अनेकंप्रथमांतमन्यपदार्थेवर्त्त मानंवासमस्यतेसबहुब्रीहिः ॥ सप्तमीविशेषणेबहुब्रीहौ २ २ ३५ ॥ सप्तम्यंतंविशेषणंचबहुब्रीहौपूर्वंस्यात् ॥ हलदन्तात्सप्तम्याःसञ्ज्ञायां ६ ३ ॥ हलन्तादन्ताच्चस प्तम्याअलुक् । कण्ठेकालः ॥ अतएवज्ञापकाद्व्यधिकरण पदोबहुब्रीहिः । प्राप्तमुदकंयंप्राप्तोदकोग्रामः । ऊढरथो ऽनड्वान् । उपहृतपशूरुद्रः ॥ उद्धृतौदनास्थाली । पीतांब रोहरिः । वीरपुरुषोग्रामः ॥ प्रादिभ्योधातुजस्यवाच्यो वाचोत्तरपदलोपः । प्रपतितपर्णः । प्रपर्णः ॥ नञोऽ स्त्यर्थानांवाच्योवोत्तरपदलोपः । अविद्यमानपुत्रोऽपुत्रः । स्त्रियाःपुंवद्भाषितपुंस्कादनूङ्समानाधिकरणेस्त्रियामपू रणीप्रियादिषु ६ ३ ३४ ॥ उक्तपुंस्कात्परऊङभावो

यत्रतथाभूतस्यस्त्रीवाचकशब्दस्यपुंवाचकस्येवरूपंस्यात् समानाधिकरणेस्त्रीलिंगेउत्तरपदेनतुपूरण्याम्प्रियादौचप रतः ॥ गोस्त्रियोरितिह्रस्वः ॥ चित्रगुः ॥ रूपवद्भार्यः ॥ अनूङः किं । वामोरूभार्यः ॥ पूरण्यांतु । अप्पूरणीप्र माण्योः ५ ३ १५६ ॥ पूरणार्थप्रत्ययातंयत्स्त्रीलिंगंत दन्तात्प्रमाण्यंताच्चबहुव्रीहेरप्स्यात् । कल्याणीपंचमी यासांरात्रीणांताःकल्याणीपंचमारात्रयः ॥ स्त्रीप्रमाणीय स्यस्त्रीप्रमाणः। पुंवद्भावनिषेधोप्प्रत्ययश्चप्रधानपूरण्या मेव ॥ रात्रीपूरणीत्वाच्चाचेत्युक्तोदाहरणेमुख्या । अन्य त्रतु ॥ नद्यृतश्च ५ ३ १५३ ॥ नद्युत्तरपदादृदन्तोत्तर पदाच्चबहुव्रीहेःकप् ॥ पुंवद्भावः । केणः । ७ ३ १३ ॥ ह्रस्वः । इतिप्राप्ते ॥ नकपि ७ ४ १४ ॥ ह्रस्वः । कल्या णपंचमीकःपक्षः । अत्रातिरोहितावयवभेदस्यपक्षस्या न्यपदार्थतयारात्रिरप्रधानं ॥ बहुकर्तृकः । अप्रियादि षुकिं । कल्याणीप्रियः । प्रिया । मनोज्ञा । कल्याणी सुभगा । दुर्भगा ॥ भक्ति । सचिवा । स्वसा । कान्ता । क्षान्ता । समा चपला । दुहिता । वामा । अबला ॥ तनया । समान्येनपुंसकं ॥ दृढंभक्तिर्यस्यसदृढभक्तिः । स्त्रीत्वविवक्षायांतुदृढाभक्तिः ॥ तसिलादिष्वाकृत्वसुचः ६ ३ ३५ ॥ तसिलादिषुकृत्वसुजंतेषुस्त्रियाःपुंवत् । परिगणनंकर्तव्यं ॥ त्रतसौ । तरप्तमपौ । चरट्जातीयरौ ॥ कल्पप्देशीयरौ । रूपप्पाशपौ ॥ थाल् । ति ल्थ्यनौ । एषुपरेषुस्त्रियाःपुंवत् ॥ बह्वीषुइत्ति । बहुत्रः । बहुतइत्यादि । त्वतलोर्गुणवचनस्य ॥ शुक्लत्वं । शुक्ल

ता ॥ भस्याढेतद्धिते ॥ हस्तिनीनांसमूहोहास्तिकं अढे किं । रौहिणेयः । कुक्कुट्यादीनामण्डादिषु ॥ कुक्कुटाण्डम् । मृगपदं ॥ मृगक्षीरं । काकशावः ॥ क्यङ्मानिनोश्च ६ ३ ३६ ॥ पुंवत् । एनीवाचरतिएतायते ॥ श्येनीवाचरतिश्येतायते । दर्शनीयांस्त्रियंमन्यतेदर्शनीयमानिनी ॥ नकोपधायाः ६ ३ ३७ ॥ स्त्रियाःपुंवत् । पाचिकाभार्यः । रसिकाभार्यः ॥ मद्रिकायते । मद्रिकामानिनी ॥ कोपधप्रतिषेधेतद्धितवुग्रहणम् । नेह ॥ पाकभार्यः । संज्ञापूरण्योश्च ६ ३ ३८ ॥ नपुंवत् । दत्ताभार्यः । पञ्चमीभार्यः ॥ वृद्धिनिमित्तस्यचतद्धितस्यारक्तविकारे ६ ३ ३९ ॥ वृद्धिशब्देनविहितायावृद्धिस्तद्धेतुर्यस्तद्धितोरक्तविकारार्थस्तदन्तास्त्रीनपुंवत् । स्रौघ्नीभार्यः ॥ रक्तेतु काषायकन्थः । विकारेतु हैममुद्रिकः । स्वांगाच्चेतः ६ ३ ४० ॥ स्वांगाद्यईकारस्तदन्तास्त्रीनपुंवत् । सुकेशीभार्यः ॥ स्वांगात्किं पटुभार्यः ईतः किं अकेशभार्यः अमानिनीतिवक्तव्यम् सुकेशमानिनी ॥ जातेश्च ६ ३ ४१ ॥ नपुंवत् ब्राह्मणीभार्यः शूद्राभार्यः ॥ संख्ययाव्ययासन्नादूराधिकसंख्याःसंख्येये ॥ २ २ २५ ॥ संख्यार्थयासंख्ययाव्ययादयःसमस्यंतेसवहुब्रीहिः ॥ वहुब्रीहौसंख्येयेडजवहुगणात् ५ ४ ७३ ॥ संख्येयेयोवहुब्रीहिस्तस्माड्डच्समासान्तः दशानांसमीपेयेसन्तितेउपदशाः अवहुगणात्किं उपवहवः उपगणाः ॥ तिविंशतेर्डिति ६ ४ १४२ ॥ विंशतेर्भस्यतेर्लोपोडिति आसन्नाविंशाः विंशतेराशन्नाइत्यर्थः ॥ अदूरात्रिंशाः अधिकचत्वारिं

शाः द्वौवात्रयोवाद्वित्राः दिङ्नामान्यंतराले २ २ २६ ॥ दिशोनामान्यन्तरालेवाच्येप्राग्वत् दक्षिणस्याः पूर्वस्याश्च दिशोन्तरालंदक्षिणपूर्वा । तत्रतेनेदमितिसरूपे २ २ २७ ॥ सप्तम्यंतेग्रहणविषयेसरूपेपदेतृतीयांतेचप्रहरणविषयेइदंयुद्धंप्रवृत्तमित्यर्थेसमस्यतेकर्मव्यतिहारे । इच्कर्मव्यतिहारे ॥ अन्येषामपिदृश्यते ६ ३ ३७ ॥ दीर्घः केशेषुकेशेषुगृहित्वाइदंयुद्धंप्रवृत्तं केशाकेशि ॥ दण्डैश्चदण्डैश्चप्रहृत्येदंयुद्धंप्रवृत्तंदण्डादण्डि मुष्टीमुष्टि । तेनसहेतितुल्ययोगे २ २ २९ ॥ तुल्ययोगेवर्त्तमानंसहेत्येततृतीयांतेनप्राग्वत् । वोपसर्जनस्य ६ ३ ८२ ॥ बहुव्रीहेरवयवस्यसहस्यसःस्याद्वा । पुत्रेणसहसपुत्रः सहपुत्रोवागतः ॥ प्रकृत्याशिषि ६ ३ ७३ ॥ सहशब्दः । स्वस्तिराज्ञेसहपुत्राय सहामात्याय अगोवत्सहलेष्विति वक्तव्यं सगवे सवत्साय सहलाय ॥ बहुव्रीहौसक्थ्यक्ष्णोः स्वांगात्षच् ५ ४ ११३ ॥ स्वांगवाचिसक्थ्यक्ष्यन्ताद्बहुव्रीहेःषच् दीर्घसक्थः जलजाक्षी ॥ स्वांगात्किं दीर्घसक्थिशकटं ॥ स्थूलाक्षावेणुयष्टिः । अक्ष्णोदर्शनादिति वक्ष्यमाणोच् ॥ द्वित्रिभ्यांषमूर्द्ध्नः ५ ४ ११५ ॥ आभ्यांमूर्द्ध्नःषःस्यात्बहुव्रीहौ । द्विमूर्द्धः त्रिमूर्द्धः । अंतर्बहिर्भ्यांचलोम्नः ५ ४ ११७ ॥ अप्स्यात् अन्तर्लोमः । बहिर्लोमः । पादस्यलोपोऽहस्त्यादिभ्यः ५ ४ १३८ ॥ हस्त्यादिवर्जितादुपमानात्परस्य पादस्यलोपः । व्याघ्रस्येव पादौयस्यव्याघ्रपात् ॥ अहस्त्यादिभ्यः किं । हस्ति नइवपादौयस्यहस्तिपादः ॥ कुसूलपादः । संख्यासुपूर्वस्य ।

५ ४ १४० ॥ पादशब्दस्यलोपः द्विपात् सुपाद् । उद्वि भ्यांकाकुदस्य ५ ४ १४८ ॥ लोपः । उत्काकुत् विकाकुत् पूर्णाद्विभाषा ५ ४ १४९ ॥ पूर्णकाकुत् पूर्णकाकुदः । सुहृद्दुर्हृदौमित्रामित्रयोः ५ ४ १५० ॥ सुहृन्मित्रं दुर्हृदमित्रः । नेतुर्नक्षत्रेअप्वक्तव्यः ॥ मृगोनेतायासांरात्रीणांताःमृगनेत्राः रात्रयः । अञ्नासिकायाःसंज्ञायांनसंचास्थूलात् ५ ४ ११८ ॥ नासिकांताद्वहुव्रीहेरच्नासिकाशब्दश्चनसंप्राप्नोतिनतुस्थूलपूर्वात् । पूर्वपदात्संज्ञायामगः ७ ४ ३ ॥ पूर्वपदस्थान्निमित्तात्परस्यनस्यणोनतुगकारव्यवधाने द्रुरिनासिका अस्यद्रुणसः खुरखराभ्यांवानस् । खुरणाः खरणाः पक्षेअजपीष्यते ॥ खुरणसः खरणसः ॥ उपसर्गाच्च ५ ४ ११९ ॥ उन्नसः । वेर्ग्रोवक्तव्यः । विगतानासिकाऽस्य विग्रः । ख्यश्च ॥ विख्यः ॥ नञ्दुःसुभ्योहलिसक्थ्योरन्यतरस्याम् ५ ४ १२१ ॥ अहलः । अहलिः असक्थः असक्थिः एवं दुःसुभ्यां शक्त्योरितिपाठान्तरं । अशक्तः । अशक्तिः । नित्यमसिच्प्रजामेधयोः ५ २ १२२ ॥ नञ्दुःसुभ्यएव । अप्रजाः । अमेधाः दुर्मेधाः सुमेधाः ॥ धर्मादनिच्केवलात् ५ ४ १२४ ॥ केवलपूर्वपदाद्योधर्मशब्दस्तदन्ताद्वहुव्रीहेरनिच् कल्याणधर्मा केवलात्किं । परमस्वोधर्मोयस्येतित्रिपदेवहुव्रीहौमाभूत् ॥ परमस्वधर्मः इच्कर्मव्यतिहारे केशाकेशि । मुशलामुशलि ॥ प्रसंभ्यांजानुनोर्ज्ञुः ५ ४ १२९ ॥ प्रज्ञुः संज्ञः । उदध्वाद्विभाषा ५ ४ १३० ॥ उर्ध्वज्ञुः । ऊर्ध्वजानुः । उधसोनङ् ५ ४ १३१ ॥ कुण्डो

ध्री । धनुषश्च ५ ४ १३२ ॥ धनुरन्ताद्बहुव्रीहेरनङा देशः । शार्ङ्गधन्वा । वासंज्ञायां ५ ४ १३३ ॥ शतधन्वा । शतधनुः । जायायानिङ् ५ ४ १३४ ॥ जायांतस्यबहुव्रीहेर्निङादेशः । लोपोव्योर्वलि ६ १ ६६ ॥ युवतिर्जायाऽस्ययुवजानिः । गंधस्येदुत्पूतिसुसुरभिभ्यः ५ ४ १३५ ॥ उद्गंधिः पुतिगंधिः सुगन्धिः उपमानाच्च पद्मस्येवगंधोऽस्यपद्मगन्धिः । वयसिदन्तस्यदतृ ५ ४ १४३ ॥ संख्यासुपूर्वस्येत्येव । द्विदन् चतुर्दन् सुदन् । अग्रांतशुद्धशुभ्रवृषवराहेभ्यश्च ५ ४ १४ ॥ एभ्योदन्तस्यदतृवा । कुड्मलाग्रदन्तः कुड्मलाग्रदन् । उरःप्रभृतिभ्यःकप् ॥ व्यूढोरस्कः प्रियसर्पिष्कः ॥ अर्थान्नञः ॥ अनर्थकं । नञः किं । अपार्थम् । इनःस्त्रियां ५ ४ १५२ ॥ इन्नताद्बहुव्रीहेःकप् बहुदण्डिकानगरी अनिनस्मन् ग्रहणान्यर्थवताचानर्थकेनचतदन्तविधिंप्रयोजयंति । बहुवाग्मिका । शेषाद्विभाषा ५ ४ १५४ ॥ अनुक्तसमासांताद्बहुव्रीहेःकब्वा । महायशाः । महायशस्कः । अनुक्तेत्यादिकिं । व्याघ्रपाद् । आपोन्यतरस्यां ७ ४ १५ ॥ कपिह्रस्वः । बहुमालाकः बहुमालकः बहुमालः । नसञ्ज्ञायां ५ ४ १५५ ॥ शेषादितिप्राप्तःकब् विश्वेदेवाअस्यविश्वदेवः । ईयसश्च ५ ४ १५६ ॥ ईयसंतोत्तरपदान्नकप् बहवः श्रेयांसोस्यबहुश्रेयान् ॥ गोस्त्रियोरितिह्रस्वेप्राप्ते ॥ ईयसोबहुव्रीहेर्न ॥ बहुश्रेयसी ॥ बहुव्रीहेःकिम् ॥ अतिश्रेयसी ॥ वन्दितेभ्रातुः ५ ४ १५७ ॥ पूजार्थभ्रात्रंतान्नकप् ॥ प्रशस्तोभ्राताऽस्यप्रशस्तभ्राता ॥ सुभ्राता ॥

वन्दितेकिम् ॥ मूर्खभ्रातृकः ॥ नद्यतश्चेतिकप् ॥ सर्वनामसंख्येययोर्वहुव्रीहौपूर्वनिपातः ॥ सर्वश्वेतः ॥ द्विशुक्कः ॥ संख्यायाअल्पीयस्याः ॥ द्वित्राः । द्वन्द्वेपि ॥ द्वादश ॥ वाप्रियस्य ॥ गुडप्रियः प्रियगुडः गड्वादेःपरासप्तमी ॥ गडुकण्ठः ॥ क्वचिन्न । वहेगडुः । निष्ठा २ २ ३६ ॥ निष्ठान्तंवहुव्रीहौपूर्वंस्यात् ॥ कृतकृत्यः जातिकालसुखादिभ्यःपरानिष्ठावाच्या ॥ सारंगजग्धी मासजाता॥ सुखजाता ॥ वाहिताग्न्यादिषु ॥ आहिताग्निः । अग्न्याहितः ॥ आकृतिगणोयम् ॥ इतिवहुव्रीहिः ॥ चार्थेद्वंद्वः २ २ २९ ॥ अनेकंसुवंतंचार्थेवर्तमानंवासमस्यतेसद्वंद्वः ॥ समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । तत्रेश्वरंगुरुंचभजस्वेतिपरस्परानिरपेक्षस्यानेकस्यैकस्मिन्नन्वयःसमुच्चयः । भिक्षामटगांचानयेतिअन्यतरस्यानुषङ्गिकत्वेनान्वयोऽन्वाचयः । अनयोरसामर्थ्यात् समासोन ॥ धवखदिरौच्छिंधीतिमिलितानामन्वयइतरेतरयोगः । संज्ञापरिभाषमितिसमूहःसमाहारः ॥ राजदन्तादिषुपरं २ २ ३१ ॥ एषुपूर्वप्रयोगार्हंपरंस्यात् । दन्तानांराजाराजदन्तः । धर्म्मादिष्वनियमः ॥ अर्थधर्मौ । धर्मार्थौ ॥ दम्पतीजम्पतिजायापती ॥ जायाशब्दस्यदम्भावोजंभावश्चवानिपात्यते । आकृतिगणोयम् ॥ द्वंद्वेघि २ २ ३२ ॥ पूर्वंस्यात् ॥ हरिहरौ अजाद्यदंतं २ २ ३३ ॥ ईशकृष्णौ । अल्पाच्तरम् २ २ ३४ शिवकेशवौ । ऋतुनक्षत्राणांसमाक्षराणामानुपूर्व्येण ॥ हेमन्तशिशिरवसंताः । कृत्तिकारोहिण्यौ ॥ समाक्षरा

णांकिम्। ग्रीष्मवसंतौ॥ लघ्वक्षरंपूर्वं॥ कुशकाशं। अभ्यर्हितंच। तापसपर्वतौ॥ वर्णानामानुपूर्व्येण॥ ब्राह्मणक्षत्रियविट्शूद्राः। भ्रातुर्ज्यायसः। युधिष्ठिरार्जुनौ। द्वंद्वश्चप्राणितूर्यसेनांगानाम् २ ४ २॥ एषां द्वंद्वएकवत्॥ पाणिपादं॥ मार्दङ्गिकपाणविकम्॥ रथिकाश्वारोहम्॥ अध्ययनतोविप्रकृष्टाख्यानां २ ४ ५ अध्ययनेनप्रत्यासन्नाआख्यायेषांतेषांद्वंद्वएकवत्॥ पदककमकं॥ जातिरप्राणिनां २ ४ ६॥ प्राणिवर्जजातिवाचिनांद्वंद्वएकवत्। धानाशष्कुलि। प्राणिनांतु॥ विट्शूद्राः॥ विशिष्टलिङ्गोनदीदेशोऽग्रामाः २ ४ ७॥ ग्रामवर्जनदीदेशवाचिनांभिन्नलिङ्गानांद्वन्द्वएकवत्॥ उध्यश्चइरावतीचउध्येरावति। गङ्गाशोणं कुरवश्चकुरुक्षेत्रञ्चकुरुकुरुक्षेत्रम्॥ क्षुद्रजन्तवः २ ४ ८॥ एषान्द्वन्द्वएकवत्। यूकालिक्षं आनकुलात्क्षुद्रजन्तवः॥ येषांच विरोधः शाश्वतिकः २ ४ ९॥ प्राग्वत्। अहिनकुलं॥ गोव्याघ्रं काकोलूकमित्यादौपरत्वाद्विभाषावृक्षेतिप्राप्तं चकारेणबाध्यते॥ शूद्राणामनिरवसितानां २ ४ १०॥ अबहिष्कृतानांशूद्राणान्द्वन्द्वः प्राग्वत्॥ तक्षायस्कारं। पात्राद्बहिष्कृतानांतुचण्डालमृतपाः॥ गवाश्वप्रभृतीनि च २ ४ ११॥ यथोच्चारितानिसाधूनि दासीदासमित्यादि। विभाषावृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् २ ४ १२॥ वृक्षादीनांसप्तानान्द्वन्द्वोऽश्ववडवेत्यादिद्वन्द्वत्रयञ्चप्राग्वद्वा। वृक्षादौविशेषाणामेवग्रहणम्॥ प्लक्षन्यग्रोधम् प्लक्षन्यग्रोधाः।

रुरुपृषतम् रुरुपृषताः । कुशकाशं कुशकाशाः व्रीहियवं । व्रीहियवाः । दधिघृतं दधिघृते । गोमहिषं गोमहिषाः शुकवकं । शुकवकाः अश्ववडवं अश्ववडवौ ॥ पूर्वापरं पूर्वापरे । अधरोत्तरं अधरोत्तरे । फलसेनावनस्पतिमृगशकुनिक्षुद्रजंतुधान्यतृणानांवहुप्रकृतिरेवद्वंद्व एकवदितिवाच्यम् । वदराणिचामलकानिचवदरामलकम् नेह ॥ वदरामलके रथिकाश्वारोहावित्यादि नदधिपयआदीनि २ ४ १४ ॥ नएकवत्स्युः दधिपयसी इध्मावर्हिषी ॥ निपातनादीर्घः । ऋक्सामे वाङ्मनसे । आनङृतोद्वन्द्वे ६ ३ २५ ॥ विद्यायोनिसंवंधवाचिनांऋदन्तानांद्वन्द्वेआनङ्स्यादुत्तरपदे । होतापोतारौ । मातापितरौ । पुत्रइत्यनुवृत्तेः । पितापुत्रौ । देवताद्वन्द्वे च ६ ३ ६३ ॥ इहोत्तरपदेपूर्वपदस्यानङ् मित्रावरुणौ । वायोःप्रयोगेप्रतिषेधः ॥ अग्निवायू वाय्वग्नी । ईदग्नेः सोमवरुणयोः ६ ३ २७ ॥ देवताद्वन्द्वइत्येव अग्नेःस्तुत्स्तोमसोमाः ८ ३ ८३ ॥ अग्नेःपरेषामेषांसस्यषः समासे अग्निष्टुत् अग्निष्टोमः । अग्नीषोमौ । अग्नीवरुणौ ॥ इद्वृद्धौ ६ ३ २८ ॥ वृद्धिमत्युत्तरपदेअग्नेरिदादेशोदेवताद्वन्द्वे । अग्नामरुतौदेवतेअस्यआग्निमारुतंकर्म अग्नीवरुणौदेवतेअस्यआग्निवारुणम् देवताद्वन्द्वेचेत्युभयपदवृद्धिः ॥ विष्णौन आग्नावैष्णवं । दिवोद्यावा ६ ३ २९ ॥ देवताद्वन्द्वेउत्तरपदे द्यावाभूमी ॥ मातरपितरावुदीचां ६ ३ ३२ ॥ उदीचांकिं मातापितरौ । द्वन्द्वाच्चुदषहांतात्समाहारे ५ ४ १०६ ॥ चवर्गान्ताद

पहांताच्चद्वन्द्वाट्टच्समाहारे। वाक्त्वचम् त्वक्स्रजम्। शमीदृपदं। वाक्त्विपम् छत्त्रोपानहम्। समाहारेकिम्। प्रावृट्शरदौ इतिद्वन्द्वसमासः॥ अथैकशेषः॥ विरूपाणामपिसमानार्थानाम्॥ वक्रदण्डश्चकुटिलदण्डश्चवक्रदण्डौ। कुटिलदण्डौ वृद्धोयूनातल्लक्षणश्चेदेवविशेषः १ २ ६५॥ यूनासहोक्तौगोत्रंशिष्यतेगोत्रयुवप्रत्ययमात्रकृतञ्चेत्तयोः कृत्स्नंवैरूप्यंस्यात्। गार्ग्यश्चगार्ग्यायणश्चगार्ग्यौ। वृद्धःकिं गर्गगार्ग्यायणौ यूनाकिं। गर्गगार्ग्यौ। कृत्स्नङ्किम्॥ गार्ग्यवात्स्यायनौ॥ स्त्रीपुंवच्च १ २ ६६॥ यूनासहोक्तौवृद्धास्त्रीशिष्यतेतदर्थश्चपुंवत्॥ गार्गीचगार्ग्यायणौचगर्गाः॥ पुमान्स्त्रिया १ २ ६७॥ सहोक्तौशिष्यतेतल्लक्षणएवविशेषश्चेत्। हंसीचहंसश्चहंसौ। भ्रातृपुत्रौस्वसृदुहितृभ्याम् १ २ ६८॥ भ्राताचस्वसाचभ्रातरौ॥ पुत्रश्चदुहिताचपुत्रौ॥ नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् १ २ ६९॥ अक्लीबेनसहोक्तौक्लीबंशिष्यतेतच्चवाएकवत्स्यात्तल्लक्षणएवविशेषश्चेत् शुक्लःपटः। शुक्लापटी। शुक्लंवस्त्रं। तदिदंशुक्लं। तानीमानिशुक्लानि॥ पितामात्रा १ २ ७०॥ मात्रासहोक्तौपितावाशिष्यते। माताचपिताचपितरौ॥ मातापितरौ॥ श्वशुरःश्वश्र्वा १ २ ७०॥ सहोक्तौवाशिष्यते। श्वशुरौ श्वश्रूश्वशुरौ॥ त्यदादीनिसर्वैर्नित्यम् १ २ ७२ सर्वैःसहोक्तौत्यदादीनिशिष्यन्ते। सचदेवदत्तश्चतौ॥ त्यदादीनांमिथः सहोक्तौयत्परन्तच्छिष्यते॥ सचयश्चयौ पूर्वशेषोपिदृश्यतइतिभाष्यम्॥ सचयश्चतौ त्यदादि

तःशेषेपुंनपुंसकतोलिङ्गवचनानि ॥ साचदेवदत्तश्चतौ । तच्चदेवदत्ताचयज्ञदत्तश्चतानि ॥ ग्राम्यपशुसंघेष्वतरुणेषु स्त्री १ २ ७३ ॥ एषुसहविवक्षायांस्त्रीशिष्यते । गावइमाः । ग्राम्येतिकिं । रुरवइमे पशुग्रहणाक्किम् ब्राह्मणाः । संघेषुकिं एतौगावौ ॥ अतरुणेकिं । वत्साइमे । अनेकशफेष्वितिवाच्यम् ॥ अश्वाइमे इत्येकशेषः ॥ ऋक्पूरब्धूः पथामानक्षे ५ ४ ७५ ॥ ऋगाद्यन्तस्यसमासस्य अप्रत्ययोन्तावयवः अक्षेयाधूस्तदन्तस्यन अर्द्धर्चः । अनृचवह्वृचावध्येतर्येव नेह । अनृक्साम । वह्वृक्सूक्तं । विष्णुपूरम् विमलापंसरः ॥ द्व्यन्तरुपसर्गेभ्योऽपईत् ६ ३ ९७ ॥ द्वीपम् अन्तरीपम् । प्रतीपं समीपम् । अवर्णान्ताद्वा । प्रेपं प्रापं ऊदनोर्देशे ६ ३ ९८ ॥ अनूपोदेशः । राजधुरा अक्षेतु अक्षधूः दृढधूरक्षः । सखिपथः । रम्यपथोदेशः ॥ अच्प्रत्यन्ववपूर्वात्सामलोम्नः ५ ४ ७५ प्रतिसामं अनुसामं अवसामं । प्रतिलोमं अनुलोमं । अवलोमं । कृष्णोदक्पाण्डुसंख्यापूर्वायाभूमेरजिष्यते । कृष्णभूमः उदक्भूमः । पाण्डुभूमः द्विभूमः त्रिभूमः प्रासादः ॥ संख्यायानदीगोदावरीभ्यांच ॥ पञ्चनदं सप्तगोदावरं अजितियोगविभागादन्यत्रापि । पद्मनाभः । अक्ष्णोऽदर्शनात् ५ ४ ७६ ॥ अचक्षुःपर्यायादक्ष्णोऽच्स्यात् गवामक्षीवगवाक्षः ॥ अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवनक्तंदिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगो

ष्ठश्वाः ५।४।७७ ॥ एतेपञ्चविंशतिरजन्तानिपात्यंते। आद्यास्त्रयोवहुव्रीहयः। अविद्यमानानिचत्वार्यस्यअ चतुरः। विगतानिचत्वार्यस्यविचतुरः। सुचतुरः॥ त्र्यु पाभ्यांचतुरोऽजिष्यते। त्रिचतुराः चतुर्णांसमीपेउपचतु राः ततएकादशद्वन्द्वाः। स्त्रीपुंसौ धेन्वनडुहं ऋक्सामे। वाङ्मनसे। अक्षिणीचभ्रुवौचअक्षिभ्रुवं। दाराश्च गावश्च दारगवम्॥ ऊरूचअष्ठीवन्तौचऊर्वष्ठीवम्। निपातना ट्टिलोपः। पदष्ठीवं निपातनात्पादशब्दस्यपद्भावः। नक्तं चदिवाचनक्तन्दिवं। रात्रौचदिवाचरात्रिंदिवं। रात्रे र्मान्तत्वन्निपात्यते अहनिचदिवाचअहर्दिवं। विप्सायां द्वन्द्वोनिपात्यते। अहनिअहनीत्यर्थः। सरजसमितिसा कल्पेऽव्ययीभावः वहुव्रीहौतुसरजः पङ्कजं। निश्चितंश्रेयो निःश्रेयसं। तत्पुरुषएव। नेह। निःश्रेयान्पुरुषः। पुरु षस्यायुः पुरुषायुषं। ततोद्विगू द्व्यायुषंत्र्यायुषम् ततोद्व न्द्वः। ऋग्यजुषं। ततस्त्रयःकर्मधारयाः। जातोक्षः महो क्षः वृद्धोक्षः शुनःसमीपंउपशुनं टिलोपाभावःसम्प्रसा रणञ्चनिपात्यते गोष्ठेश्वागोष्ठश्वः॥ ब्रह्महस्तिभ्यांवर्च सः ५।४।७८॥ अच् ब्रह्मवर्चसं। हस्तिवर्चसं। पल्यरा जभ्यांच। पल्यवर्चसं राजवर्चसं॥ अवसमन्धेभ्यस्तमसः ५।४।७९॥ अवतमसं। संतमसम् अन्धतमसम् अन्ववं तप्ताद्रहसः ५।४।८१॥ अनुरहसं अवरहसं। तप्तरहसं प्रते रुरसः सप्तमीस्थात् ५।४।८२॥ उरसीतिप्रत्युरसम्। अनुग वमायामे ५।४।८३॥ एतन्निपात्यतेदीर्घत्वे अनुगवं यानं यस्यचायामइतिसमासः॥ उपसर्गादध्वनः ५।४

८५ ॥ प्रगतोध्वानंप्राध्वोरथः । नपूजनात् ५ ४ ६९ पूजनार्थात्परेभ्यःसमासांतानस्युः । सुराजा अतिराजा । स्वतिभ्यामेव । नेह परमराजः ॥ किमःक्षेपे ५ ४ ७० कुत्सितोराजा किंराजा किंसखा किंगौः । नञस्तत्पुरुषात् ५ ४ ७१ ॥ अराजा तत्पुरुषात्किं अधुरंशकटं । पथोविभाषा ५ ४ ७२ ॥ अपथं अपन्थाः तत्पुरुषादित्येव अपथोदेशः ॥ इतिसमासान्ताः ॥ अलुगुत्तरपदे ६ ३ १ ॥ इत्यधिकृत्य ॥ ओजः सहोम्भस्तमसस्तृतीयायाः ६ ३ २ ॥ ओजसाकृतमित्यादि । अंजसउपसंख्यानं । अंजसाकृतं ॥ आत्मनश्च ६ ३ ६ ॥ तृतीयायाअलुक् । पूरणइतिवक्तव्यम् पूरणप्रत्ययांतेउत्तरपदेइत्यर्थः ॥ आत्मनापंचमः । वैयाकरणाख्यायांचतुर्थ्याः ६ ३ ७ ॥ आत्मनइत्येव आत्मनेपदम् । आत्मनेभाषा ॥ परस्यच ॥ परस्मैपदं परस्मैभाषा । हलदंतादितिङेरलुक् । त्वचिसारः ॥ गवियुधिभ्यांस्थिरः ८ ३ ९५ ॥ सस्यषः । गविष्टिरः । युधिष्ठिरः ॥ अरण्येतिलकाः । अत्रसंज्ञायामितिसप्तमीसमासः ॥ हृद्युभ्यांच ॥ हृदिस्पृक् । दिविस्पृक् । मध्याद्गुरौ ६ ३ ११ ॥ मध्येगुरुः । अंताच्च अंतेगुरुः । अमूर्द्धमस्तकात्स्वांगादकामे ६ ३ १२ ॥ कण्ठेकालः । उरसिलोमा । अमूर्द्धमस्तकात्किं ॥ मूर्द्धशिखः । अकामेकिं । मुखेकामोस्यमुखकामः । तत्पुरुषेकृतिबहुलं ६ ३ १४ ॥ स्तंबेरमः । कर्णेजपः ॥ शयवासवासिष्वकालात् ६ ३ १८ ॥ वालुकु खेशयः । खशयः । ग्रामेवासः ग्रामवासः ॥ ग्रामेवासी ग्रामवासी । षष्ठ्याआ

क्रोशे ६ ३ २१ ॥ चोरस्यकुलं ह्याक्रोशेकिं । ब्राह्मण कुलं । वाग्दिक्पश्यद्भ्योयुक्तिदण्डहरेषु ॥ वाचोयुक्तिः दिशोदंडः । पश्यतोहरः ॥ ग्रामुष्यायणामुष्यपुत्रिका मुष्यकुलिकेतिच । देवानांप्रियइतिमूर्खे ॥ अन्यत्रदेव प्रियः ॥ शेफपुच्छलांगुलेष्वुनः । शुनःशेफः ॥ शुनःपु च्छः । शुनोलांगुलः ॥ दिवश्वदासे । दिवोदासः ॥ ऋ तोविद्यायोनिसंबंधेभ्यः ६ ३ २३ ॥ होतुरन्तेवासी । विभाषास्वसृपत्योः ६ ३ २४ ॥ ऋदन्तात्षष्ठ्यावालुक् मातुःपितुभ्यामन्यतरस्यां ८ ३ ८५ ॥ स्वसुःसस्यपःस मासे । मातुःष्वसा । मातुःस्वसा ॥ पितुःष्वसा । पितुः स्वसा ॥ लुक्पक्षेतु । मातृपितृभ्यांस्वसा ८ ३ ८४ ॥ स्वसुःसस्यपःसमासे । मातृष्वसा ॥ पितृष्वसा । असमा सेतु ॥ मातुःस्वसा । पितुःस्वसा ॥ इत्यलुक्समासः ॥ घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषुङ्योनेकाचोह्रस्वः ६ ३ ४३ ॥ भाषितपुंस्काद्योङीतदंतस्यानेकाचोह्रस्वःस्यात्घ रूपकल्पप्रत्ययेचेलडादिपुचोत्तरपदेषु । ब्राह्मणितरा । ब्राह्मणीतमा । ब्राह्मणिरूपा ॥ ब्राह्मणिकल्पा । ब्राह्म णिचेली ॥ ब्राह्मणिब्रुवा । ब्राह्मणिगोत्रेत्यादि ॥ ब्रुवःप चाद्यचिवच्यादेशगुणयोरभावोनिपात्यते ॥ ङ्यःकिं दत्ता तरा भाषितपुंस्कात्किम् । आमलकीतरा ॥ कुवलीतरा । नद्याःशेषस्यान्यतरस्याम् ६ ३ ४० ॥ अङ्यंन्तनद्यन्ते काचेश्चघादिपुह्रस्वोवा ॥ब्रह्मबन्धुतरा ॥ ब्रह्मबन्धूत रा ॥ स्त्रीतरा ॥ स्त्रितरा ॥ कृन्नद्यान ॥ लक्ष्मीतरा ॥ उ गितश्च ६ ३ ४५ ॥ उगितःपरायानदीतदंतस्यघादिषु

ह्रस्वोवास्यात् ॥ विदुषितरा ह्रस्वाभावपक्षेपुंवत् । वि द्वत्तरा पादस्यपदाज्यातिगोपहतेषु ६ ३ ५२ ॥ एषू त्तरपदेषुपादस्यपदइत्यदन्तआदेशःस्यात् ॥ पादाभ्यां अजतीतिपदाजिः ॥ पदातिः अज्यतिभ्यांपादेचेतीण् प्रत्ययः पदगः पदोपहतः ॥ पद्यत्यतदर्थे ६ ३ ५३ ॥ पादस्यपत्स्याद्यतदर्थेयति पादौविध्यन्तिपद्याःशर्कराः । विध्यध्यधनुषेतियत् ॥ अतदर्थेकिं पादार्थमुदकंपाद्यं । पादार्घाभ्यांचेतियत् ॥ उदकस्योदःसंज्ञायां ६ ३ ५७ उत्तरपदे । उदमेघः । उत्तरपदस्यचेतिवक्तव्यम् ॥ क्षीरो दः । पेषंवासवाहनधिषुच ६ ३ ५८ ॥ उदपेषंपिनष्टि । उदवासः ॥ उदवाहनः । उदधिर्घटः । एकहलादौपूर यितव्येन्यतरस्यात् ६ ३ ५९ ॥ उदकुम्भः । उदककुम्भः एकेतिकिम् । उदकस्थाली ॥ पूरयितव्येतिकिं ॥ उदक पर्वतः । मन्थौदनसक्तुविन्दुवज्रभारहारवीवधगाहेषुच ६ ३ ६० उदमन्थः उदकमन्थः ॥ उदौदनः । उदकौदनः इकोह्रस्वोऽड्योगालवस्य ६ ३ ६१ ॥ इगन्तस्याड्यंत स्यह्र स्वोवाउत्तरपदे । ग्रामणिपुत्रः ॥ ग्रामणीपुत्रः । इकः किं रमापतिः अड्यः किं । गौरीपतिः ष्यङःसंप्रसारणंपुत्रप त्योस्तत्पुरुषे ६ १ १३ ॥ ष्यङन्तस्यपूर्वपदस्यसंप्रसार णंस्यात्पुत्रपत्योपरतः । संप्रसारणस्य । ६ ३ १३९ ॥ दीर्घःस्यादुत्तरपदे कौमुदगंध्यायाःपुत्रः ॥ कौमुदगंधी पुत्रः ॥ कौमुदगन्धीपतिः ॥ इष्टकेषीकामालानांचित तूलभारिषु ६ ३ ६५ ॥ इष्टकादीनांतदन्तानांचचिता दिषुह्रस्वःस्यात् ॥ इष्टकचितं । पक्केष्टकचितं ॥ इषी

कतूलं। मुंजेषीकतूलं॥ मालभारी॥ उत्पलमालभारी। ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु ६। ३। ८५॥ समानस्यसः। सज्योतिः॥ (चरणे ब्रह्मचारिणि ६। ३। ८६॥ ब्रह्मचारिणि उत्तरपदेसमानस्यसश्चरणेसमानत्वेनगम्यमाने॥ चरणःशाखाब्रह्मवेदः॥ तदध्ययनार्थंव्रतमपिब्रह्म। तच्चरतीति ब्रह्मचारी। सब्रह्मचारीइत्यादि) तीर्थेये ६। ३। ८७॥ यादौप्रत्ययेविवक्षितेसमानस्यसः। सतीर्थ्यः। एकगुरुकः। समानतीर्थेवासीतियत्प्रत्ययः। विभाषोदरे। ६। ३। ८८॥ सोदर्यः। समानोदर्यः। दृग्दृशवतुषु ६। ३। ८९॥ सदृक्। सदृशः। दृक्षेच। सदृक्षः। इदङ्किमोरीश्की। ६। ३। ९०॥ दृग्दृशवतुसु। ईदृक्। ईदृशः। कीदृक्। कीदृशः॥ दृक्षेच। ईदृक्षः। कीदृक्षः॥ अषष्ठ्यतृतीयास्थस्यान्यस्यदुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु ६। ३। ९१॥ अन्यशब्दस्यदुगागमःस्यादाशीरादिषुपरेषु। अन्यदाशीः। अन्यदाशा। अन्यदास्था। अन्यदास्थितः। अन्यदुत्सुकः। अन्यदूतिः। अन्यद्रागः। अषष्ठीत्यादिकिं। अन्यस्यान्येनवाऽऽशीः। अन्याशीः। कारकेछन्दनायांनिषेधः। अन्यस्यकारकोऽन्यकारकः॥ अन्यस्यायमन्यदीयः। अर्थेविभाषा ६। ३। १०७॥ अन्यदर्थः। अन्यार्थः॥ कोःकत्तत्पुरुषेऽचि ६। ३ १०१॥ अजादावुत्तरपदे॥ कुत्सितोऽश्वः। कदश्वः। कदन्नम्। तत्पुरुषेकिं। कूष्ट्रोराजा॥ त्रौच॥ कत्त्रयः। रथवदयोश्च ६। ३। १०२॥ कद्रथः। कद्वदः। तृणेचजा

तौ । ६ ३ १०३ ॥ कत्तृणं । कापथ्यक्षयोः ६ ३ १०४ ॥ कापथं । काक्षः । ईषदर्थे ६ ३ १०५ ॥ ईषज्जलम् काजलं । विभाषापुरुषे ६ ३ १०६ ॥ कुपुरुषः । कापुरुषः । कवंचोष्णे ६ ३ १०७ ॥ उष्णशब्देउत्तरपदे कवंकाचवास्यात् । कोष्णं । कवोष्णं । कदुष्णं ॥ पृषोदरादीनियथोपदिष्टं ६ ३ १०९ ॥ पृषोदरप्रकाराणि शिष्टैर्यथोच्चारितानितथैवसाधूनि । पृषतः उदरं । पृषोदरं । तलोपः । वारिवाहकोवलाहकः । पूर्वपदस्य वः । उत्तरपदादेश्चलत्वं । भवेद्वर्णागमाद्धंसःसिंहोवर्णविपर्ययात् । गूढोत्मावर्णविकृतेर्वर्णनाशात्पृषोदरम् ॥ मतौवह्वचोऽनजिरादीनाम् ६ ३ ११८ ॥ दीर्घःस्यात् ॥ अमरावती । अनजिरादीनांकिं । अजिरवती । वव्हचः किं । व्रीहिमती । संज्ञायामित्येव । नेह । वलयवती ॥ शरादीनांच ६ ३ १२० ॥ शरावती ॥ उपसर्गस्यघञ्यमनुष्येवहुलं ६ ३ १२१ ॥ परिपाकः । परीपाकः । अमनुष्येकिं । निषादः । नरेसंज्ञायां । ६ ३ १२९ ॥ विश्वानरः । मित्रेचर्षौ । ६ ३ १३० ॥ विश्वामित्रः । शुनोदंतदंष्ट्राकर्णकुंदवराहपुच्छपदेषु । श्वादंतः ॥ प्रनिरंतःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि ८ ४ ५॥ एभ्यःपरस्यवनस्यनस्यणत्वं । प्रवणं । विभाषौषधिवनस्पतिभ्यः । ८ ४ ६ ॥ दूर्वावणं । दूर्वावनं । शिरीषवणं । शिरीषवनं । द्व्यच्त्र्यज्भ्यामेव । नेह । देवदारुवनं । इरिकादिभ्योन । इरिकावनं । मिरिकावनं । वाहनमाहितात् ८ ४ ८ ॥ आरोप्ययदुह्यतेत

द्वाचिस्थान्निमित्ताद्वाहनस्यनस्यणः। इक्षुवाहणं। आहितात्किं। इन्द्रवाहनं। पानंदेशे ८ ४ १६ ॥ पूर्वपदस्थान्निमित्तात्परस्यपानस्यनस्यणः। क्षीरम्पानंयेषांते क्षीरपाणाः। उशीनराः। सुरापाणाः। प्राच्याः। वाभावकरणयोः ८ ४ १० ॥ क्षीरपानं। क्षीरपाणं। प्रातिपदिकान्तनुंविभक्तिषुच ८ ४ ११ ॥ पूर्वपदस्थान्निमित्तात्परस्यएषुस्थितस्यनस्यणोवा। माषवापिणौ॥ व्रीहिवापाणि। माषवापेण। पक्षेमाषवापिनावित्यादि॥ कुमतिच ८ ४ १३॥ कवर्गवत्युत्तरपदेप्राग्वत्। हरिकामिणौ। हरिकामाणि। हरिकामेण॥ पदव्यवायेपि। ८ ४ ३८॥ णत्वंन। माषकुम्भवापेन॥ अतद्धितइतिवक्तव्यं॥ आर्द्रगोमयेण। शुष्कगोमयेण॥ पारस्करप्रभृतीनिचसंज्ञायां ६ १ १५७॥ एतानि ससुट्कानिनिपात्यंते। पारस्करः। किष्किंधा। तद्बृहतोःकरपत्योश्चोरदेवतयोःसुट्तलोपश्च। तात्पूर्वं चर्त्वेनदकारोपिबोध्यः। तद्बृहतोर्दकारतकारौलुप्येतेकरपत्योस्तुसुट्। चोरदेवतयोरितिसमुदायोपाधिः। तस्करः। बृहस्पतिः। प्रायस्यचित्तिचित्तयोः॥ प्रायश्चित्तिः। प्रायश्चित्तं। वनस्पतिरित्यादि। आकृतिगणोयम्॥ इतिसमासाश्रयविधयः॥ समाप्तःसमासः

॥ श्रीगणेशाय नमः॥

समर्थानां प्रथमाद्वा ४ १ ८२॥ इदंपदत्रयमधिक्रियते। प्राग्दिशइतियावत्। प्राग्दीव्यतोऽण् ४ १ ८३॥ तेनदीव्यतीत्यतःप्रागणधिक्रियते। अश्वपत्या

दिभ्यश्च ४ १ ८४ ॥ एभ्योऽण्स्यात्प्राग्दीव्यतीयेष्वर्थेषु । अश्वपतेरपत्यादिआश्वपतं गाणपतम् । दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ४ १ ८५ ॥ प्राग्दीव्यतीयेष्वर्थेषु । दितेरपत्यादिदैत्यः । अदितेरादित्यस्यवाआदित्यः ॥ यणोमयोद्वेवाच्ये ॥ मयइतिपंचमीयणइतिषष्ठीतिपक्षे यस्यद्वित्वं । हलोयमांयमिलोपः ८ ४ ६४ ॥ वास्यात् । इत्यसतिलोपेद्वित्वेचसतित्रियंरूपं । असतिलोपेद्वित्वलोपयोर्वाद्वियं । द्वित्वाभावेलोपेचसतिएकयं । प्राजापत्यः । देवाद्यञञौ । दैव्यं । दैवं । वहिषष्टिलोपोयञ्च ॥ वाह्यः । ईकक्च ॥ कितिच ७ २ ११८ ॥ किततद्धितेऽचामादेरचोवृद्धिः । वाहीकः । गोरजादिप्रसंगे यत् । गोरपत्यादिगव्यं । उत्सादिभ्योऽञ् ४ १ ८६ ॥ औत्सः ॥ इत्यपत्यादिविकारांतार्थाःप्रत्ययाः ॥ स्त्रीपुंसाभ्यांनञ्स्नञौभवनात् ४ १ ८७ ॥ धान्यानांभवनइत्यतःप्रागर्थेष्वाभ्यामेतौस्तः । स्त्रैणः । पौंस्नः ॥ तस्यापत्यम् ४ १ ९२ ॥ षष्ट्यन्तात्कृतसंधेःसमर्थादपत्येर्थे उक्तावक्ष्यमाणाश्चप्रत्ययावास्युः ॥ ओर्गुणः ६ ४ १४६ उवर्णान्तस्यभस्यगुणस्तद्धिते । ओरादितिवक्तव्येगुणोक्तिःसंज्ञापूर्वकोविधिरनित्यइतिज्ञापयितुं । तेनस्वायंभुवमित्यादिसिद्धं । उपगोरपत्यमौपगवः । आश्वपतः दैत्यः । औत्सः । स्त्रैणः । पौंस्नः । अपत्यंपौत्रप्रभृति गोत्रं ४ १ १६२ ॥ अपत्यत्वेनविवक्षितंपौत्रादिगोत्र संज्ञंस्यात् । एकोगोत्रे ४ १ ९३ ॥ गोत्रेएकएवप्रत्ययः स्यात् । उपगोर्गोत्रापत्यमौपगवः ॥ गर्गादिभ्योयञ्

४ १ १०५ ॥ गोत्रापत्ये। गर्गस्यगोत्रापत्यंगार्ग्यः। वात्स्यः। यञञोश्च २ ४ ६४ ॥ गोत्रेयद्यञन्तमञन्तं चतद्वयवयोरेतयोर्लुक्तत्कृतेबहुत्वेनतुस्त्रियां। गर्गाः। वत्साः। गोत्रेलुगचि ४ १ ८९ ॥ अजादौप्रागदीव्यतीयेविवक्षितेगोत्रप्रत्ययस्यालुग्स्यात् ॥ गर्गाणांछात्राः। वक्ष्यमाणोवृद्धाच्छः। आपत्यस्यचतद्धितेनाति। ६ १ १५१ ॥ हलःपरस्यापत्ययस्यलोपस्तद्धितेनत्वाकारे। गार्गीयाः। अनातिकिं। गार्ग्यायणः प्राग्दीव्यतीयेकिं। गर्गेभ्योहितंगर्गीयं। अचिकिं। गर्गेभ्यआगतंगर्गरूप्यं ॥ जीवतितुवंश्येयुवा ४ १ १६३ ॥ वंश्येपित्रादौजीवतिपौत्रादेर्यदपत्यंचतुर्थादितद्युवसंज्ञमेवस्यान्नतुगोत्रसंज्ञम् गोत्राद्यून्यस्त्रियां ४ १ ९४ ॥ यून्यपत्येविवक्षिते गोत्रप्रत्ययान्तादेवप्रत्ययःस्यात्स्त्रियांतुनयुवसंज्ञा ॥ यञिञोश्च ४ १ १०१ ॥ गोत्रेयौयञिञौतदन्तात्फक् ॥ आयनेयीनीयियःफढखच्छघांप्रत्ययादीनां ७ १ २ ॥ प्रत्ययादेःफस्यआयन्ढस्यएय्खस्यईन्छस्यईय्घस्यइय्स्युः। गर्गस्ययुवापत्यंगार्ग्यायणः ॥ अतइञ्। ४ १ ९५ ॥ अपत्येर्थे। दाक्षिः ॥ बाह्वादिभ्यश्च ४ १ ९६ ॥ बाहविः। औडुलोमिः। औडुलोमी। लोम्नोपत्येपुबहुष्वकारोवक्तव्यः। बाह्वादिञोपवादः ॥ उडुलोमाः। आकृतिगणोयं ॥ अनृष्यानंतर्येविदादिभ्योञ् ४ १ १०४ येत्वत्रानृषयस्तेभ्योऽपत्येऽन्यत्रतुगोत्रे। विदस्यगोत्रंवैदः। वैदौ। विदाः। पुत्रस्याऽपत्यंपौत्रः। पौत्रौ। यञञोश्चेतिसूत्रेप्रवराध्यायप्रसिद्धंगोत्रं तेनेहन। पौत्राः ॥

एवंदौहित्रादयः ॥ शिवादिभ्योऽण् ४ १ ११२ ॥ अपत्ये । शैवः । गांगः ॥ ऋष्यंधकवृष्णिकुरुभ्यश्च ४ १ ११४ ॥ ऋषिभ्यः । वासिष्ठः । वैश्वामित्रः । अंधकेभ्यः । श्वाफल्कः । वृष्णिभ्यः । वासुदेवः । कुरुभ्यः । नाकुलः । साहदेवः ॥ मातुरुत्संख्यासंभद्रपूर्वायाः ४ १ १५ ॥ संख्यादिपूर्वस्यमातृशब्दस्यउदादेशःस्यादण्प्रत्ययश्च । द्वैमातुरः । षाण्मातुरः सांमातुरः । भाद्रमातुरः ॥ स्त्रीभ्योढक् ४ १ १२० ॥ स्त्रीप्रत्ययान्तेभ्योढक् । वैनतेयः ॥ कन्यायाःकनीनच ४ १ १६ ॥ चादण् कानीनोव्यासः कर्णश्च ॥ राजश्वशुराद्यत् ४ १ १३७ ॥ राज्ञोजातावेव ॥ येचाभावकर्मणोः ६ ४ १६८ ॥ यादौतद्धितेऽन्प्रकृत्या स्यान्नतुभावकर्मणोः । राजन्यः । जातावेवेतिकिं ॥ अन् ६ ४ १६७ ॥ प्रकृत्याऽणिपरे । राजनः । श्वशुर्य्यः । क्षत्राद्घः ४ १ १३८ ॥ क्षत्रियः । जातावित्येव । क्षात्रिरन्यः ॥ रेवत्यादिभ्यष्ठक् ४ १ १४६ ॥ ठस्येकः ७ ३ ५० ॥ अङ्गात्परस्यठस्येकादेशः । रैवतिकः ॥ गोत्रेकुंजादिभ्यश्च्फञ् ४ १ ९८ ॥ व्रातच्फञोरस्त्रियां ५ ३ ११३ ॥ व्रातवाचिभ्यश्च्फञन्तेभ्यश्चस्वार्थेञ्यप्रत्ययःस्यात् । कौंजायन्यः । कौंजायन्यौ । वहुत्वेलुग्वक्ष्यते । व्राध्नायन्यः ॥ नडादिभ्यःफक् । ४ १ ९८ ॥ गोत्रइत्येव । नाडायनः । चारायणः । अनंतरोनाडिः ॥ अश्वादिभ्यःफञ् ४ १ ११० ॥ गोत्रे । आश्वायनः ॥ इतश्चानिञः ४ १ १२२ ॥ इकारान्ताद्व्यचोऽपत्येढक्नत्विञन्तात् । दौलेयः । नैधेयः । आत्रेयः । आत्रेयो ॥ अ

त्रिभृगुकुत्सवसिष्ठगोतमांगिरोभ्यश्च २ ४ ६५ ॥ एभ्यो गोत्रप्रत्ययस्यलुक्स्यात्तत्कृतबहुत्वेनतुस्त्रियाम् । अत्र यः । भृगवः । कुत्साः । वसिष्ठाः । गोतमाः । अंगिरसः । शुभ्रादिभ्यश्च ४ १ १२३ ॥ ढक्स्यादपत्ये । शौभ्रेयः । कल्याण्यादीनामिनङ् ४ १ १२६ ॥ एपामिनङ् स्यात्ढक्च । काल्याणिनेयः । बांधकिनेयः । कुलटायावा । ४ १ १२७ ॥ इनङ्मात्रंविकल्पतेढक्तुनित्यःपूर्वेणैव । कौलटेयः । कौलटिनेयः । सतीभिक्षुकयत्रकुलटा ॥ चटकायाऐरक् ४ १ १२८ ॥ चटकादितिवाच्यम् । प्रातिपदिकग्रहणेलिंगविशिष्टस्यापिग्रहणमितिसिद्धान्ति । चटकस्यचटकायावाअपत्यंचाटकैरः । स्त्रियामपत्येलुग्वक्तव्यः । तयोरेवस्त्र्यपत्यंचटका ॥ गोधायाढ्रक् ४ १ १२९ ॥ गौधेरः । शुभ्रादित्वाड्ढक् । गौधेयः ॥ क्षुद्राभ्योवा । ४ १ १३१ ॥ अंगहीनाःशीलहीनश्चक्षुद्रास्ताभ्योढ्रक्वा । पक्षेठक् । काणेरः । काणेयः । दासेरः । दासेयः ॥ पितृष्वसुश्छण् । ४ १ १३२ ॥ अणोपवादः । पैतृष्वस्रीयः । ढकिलोपः । ४ १ १३३ ॥ पितृष्वसुर्यंढक्तन्तद्स्यापिस्यात् । मातृष्वस्रीयः । मातृष्वसेयः ॥ कुलात्खः ४ १ १३९ ॥ कुलीनः । तदन्तादपि ॥ उत्तरसूत्रेअपूर्वपदादितिलिङ्गात् । आढ्यकुलीनः ॥ अपूर्वपदादन्यतरस्यांयड्ढकञौ ४ १ १४१ ॥ कुलादित्येव । पक्षेखः । महाकुलः । महाकुलीनः ॥ माहाकुलीनः ॥ दुष्कुलाड्ढक् ४ १ १४२ ॥ वा । पक्षेखः । दौष्कुलेयः । दुष्कुलीनः ॥ स्वसुश्छः । ४ १ १४३ ॥

स्वस्रीयः ॥ भ्रातुर्व्यच्च । ४ । १ । १४४ ॥ चाच्छः । भ्रातृव्यः । भ्रात्रीयः ॥ मनोर्जातावञ्यतौषुक्च ४ । १ । १६१ समुदायार्थोजातिः । मानुषः । मनुष्यः ॥ तक्ष्णोऽणुपसंख्यानं ॥ षपूर्वहन्धृतराज्ञामणि । ६ ४ १३५ ॥ एषामणितद्धितेऽनोकारलोपः । ताक्ष्णः ॥ तिकादिभ्यःफिञ् ४ । १ । १५४ ॥ तैकायनिः ॥ वृद्धिर्यस्याचामादिस्तद्वृद्धम् १ । १ । ७३ ॥ यस्यसमुदायस्याचांमध्येआदिवृद्धिस्तवृद्धसंज्ञंस्यात् ॥ उदीचांवृद्धादगोत्रात् ४ । १ । १५७ ॥ आम्रगुप्तायनिः । प्राचांतुआम्रगुप्तिः ॥ प्राचामवृद्धात्फिन्वहुलं ४ । १ । १६० ॥ ग्लुचुकायनिः ॥ जनपदशब्दात्क्षत्रियादञ् ४ । १ । १६८ ॥ जनपदक्षत्रिययोर्वाचकादञपत्ये । पांचालः । क्षत्रियसमानशब्दाज्जनपदात्तस्यराजन्यपत्यवत् । पंचालानांराजापांचालः ॥ पूरोरण् ॥ पौरवः ॥ द्व्यञ्मगधकलिंगसूरमसादण् ४ । १ । १७० ॥ द्व्यच् । आंगः । वांगः । मागधः ॥ पांडोर्ड्यण् ॥ पांड्यः ॥ वृद्धेत्कोशलाजादाञ्ञ्यङ् ४ । १ । १७१ ॥ वृद्धात् । आम्वष्ठ्यः । इत् आवन्त्यः कौशल्यः । अजादस्यापत्यआजाद्यः ॥ कुरुनादिभ्योण्यः ४ । १ । १७२ ॥ कौरव्यः । नैषध्यः ॥ तेतद्राजाः ४ । १ । १७४ ॥ अञादयस्तद्राजसञ्ज्ञाः स्युः ॥ तद्राजस्यवहुषुतेनैवास्त्रियां २ ४ ६२ ॥ वहुष्वर्थेषुतद्राजस्यलुक्तत्कृतबहुत्वेनतुस्त्रियाम् । पंचालाइत्यादि ॥ कंवोजाल्लुक् ४ । १ । १७५ ॥ तद्राजस्य । कंवोजः कंवोजौः । कंवोजादिभ्यइतिवक्तव्यम् । चोलः शकः । केरलः यवनः ॥ अणिञोरनार्षयोगुरूपोत्तमयोःष्यङ्गो

त्रे ४ १ १७८ ॥ आदीनामन्त्यमुत्तमन्तस्यसमीपमुपोत्त
मं ॥ गोत्रेयावणिञौविहितौअनार्षौतदन्तयोगुरूपोत्त
मयोः प्रातिपदिकयोः स्त्रियांप्यङादेशः । यङश्चाप् कुमु
दगन्धेर्गोत्रापत्यंस्त्रीकौमुदगन्ध्या वाराह्या अनार्षयोः
किं वासिष्ठी । गुरुपोत्तमयोः किम् । औपगवी । गोत्रेकि
म् अहिच्छत्रेजाताआहिच्छत्री॥इत्यपत्याधिकारः। तेन
रक्तंरागात् ४ २ १ ॥ कषायेणरक्तंवस्त्रंकाषायं । मांजिष्ठं ।
रागात्किं देवदत्तेनरक्तंवस्त्रं ॥ लाक्षारोचनाट्ठक् ४
२ २ लाक्षिकः ॥ रौचनिकः ॥ शकलकर्दमाभ्यामुपसं
ख्यानम् ॥ शाकलिकः । कार्दमिकः ॥ नील्याअन् ॥
नील्यारक्तंवस्त्रंनीलं ॥ पीतात्कन् । पीतकं ॥ हरिद्राम
हारजनाभ्यामञ् ॥ हारिद्रं । महारजनं ॥ नक्षत्रेणयुक्तः
कालः ४ २ १३ ॥ तिष्यपुष्ययोर्नक्षत्राणियलोपः । ४२३ ॥
पुष्येणयुक्तंपौषंअहः । लुबविशेषे ४२४ ॥ पूर्वेणविहितस्य
लुप्षष्टीदण्डात्मकस्यकालस्यावांतरविशेषश्चेन्नगम्यते ॥
अद्यपुष्यः ॥ दृष्टंसाम ४२११७ ॥ तेनेत्येव । वसिष्ठेनदृ
ष्टंवासिष्ठंसाम वामदेवाड्ड्यड्ड्यौ ४ २ १ ९ ॥ वामदेवेन
दृष्टंवामदेव्यं ॥ परिवृतोरथः ४ २ १० ॥ वस्त्रेणपरिवृतो
वास्त्रोरथः । तत्रोद्धृतममत्रेभ्यः ४ २ १४ ॥ शरावेउद्धृतः ।
शारावओदनः ॥ संस्कृतंभक्ष्याः ४ २ १६ ॥ सप्तम्यन्ताद
णस्यात्संस्कृतेर्थेयत्संस्कृतंभक्ष्याश्चेत्तेस्युः । भ्राष्ट्रेषुसंस्कृ
ताभ्राष्ट्राःभक्षाः ॥ शूलोखाद्यत् ४ २ ७१ ॥ अणोपवादः ।
शूलेसंस्कृतंशूल्यंमांसं । उख्यम् ॥ दध्नष्ठक् । ४.२१ १९ ॥
दध्निसंस्कृतंदाधिकं ॥ सास्मिन्पौर्णमासीति ॥ ४ २ २२ ॥

इतिशब्दात्संज्ञायामितिलभ्यते। पौषीपौर्णमासीअस्मिन्पौषोमासः। साऽस्यदेवता। ४ २ २४ ॥ इन्द्रोदेवताऽस्यैन्द्रंहविः॥ पाशुपतं। वार्हस्पत्यं। त्यज्यमानद्रव्येउद्देश्यविशेषोदेवतामंत्रस्तुत्याच। ऐन्द्रोमंत्रः॥ कस्येत् ४२ २५ ॥ कशब्दस्यईकारादेशःस्यात्प्रत्ययसंनियोगेन॥ यस्येतिलोपात्परत्वादादिवृद्धिः। कोब्रह्मादेवताऽस्यकायंहविः॥ श्रीर्देवतास्यश्रायम्॥ शुक्राद्घन् ४ २ २६ ॥ शुक्रियं। सोमाट्ट्यण् ४ २ ३० ॥ सौम्यं। वाय्वृतुपित्रुषसोयत् ४ २ ३१ ॥ वायव्यं। ऋतव्यं॥ रीङृतः ७ ४ २७ अकृद्यकारेऽसार्वधातुकयकारेच्वौचपरेऋदन्तांगस्यरीङादेशः॥ यस्येतिच॥ पित्र्यं॥ उषस्यं॥ द्यावापृथिवीशुनासीरमरुत्त्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छच ४२ ३२॥ चाद्यत्। द्यावापृथिवीयं। द्यावापृथिव्यं। शुनासीरीयं। शुनासीर्यं॥ महाराजप्रोष्ठपदाट्ठञ् ४ २ ३५ महाराजिकं। प्रोष्ठपदिकं॥ देवताद्वन्द्वेच ७ ३ २१ ॥ अत्रपूर्वोत्तरपदयोराद्यचोर्वृद्धिर्ञितिणितिकितिच। आग्निमारुतं॥ नेन्द्रस्यपरस्य। ७ ३ २२ ॥ सौमेन्द्रः। परस्यकिं। ऐन्द्राग्नः॥ दीर्घाच्चवरुणस्य ७ ३ २३ ॥ नवृद्धिः। ऐन्द्रावरुणं। दीर्घात्किं॥ आग्निवारुणीमनड्वाही मालभेत पितृव्यमातुलमातामहपितामहाः ४ २ ३६ ॥ एतेनिपात्यन्ते। पितुर्भ्रातापितृव्यः॥ मातुर्भ्रातामातुलः। मातुःपितामातामहः॥ पितुःपितापितामहः॥ तस्यसमूहः ४ २ ३७ ॥ काकानांसमूहःकाकं। वकानांसमूहः। वाकम्॥ भिक्षादिभ्योऽण् ४ २ ३८ ॥ भैक्षम्। गार्भिणीनां

समूहोगार्भिणम्। इहभस्याढइतिपुंवद्भावेकृते। इनण्यनपत्ये। ६ ४ १६४॥ अनपत्यार्थेऽणिइन्प्रकृत्या॥ नतेनस्तद्धितइतिटिलोपोन। युवतीनांसमूहोयौवनम्॥ गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ्। ४ २ ३९॥ ग्लुचुकायनीनांसमूहोग्लौचुकायनकं। औक्षकमित्यादि। आपत्यस्यचेतियलोपेप्राप्ते॥ प्रकृत्याकेराजन्यमनुष्ययुवानः॥ राजन्यकम्। मानुष्यकं। वृद्धाच्चेतिवक्तव्यम्॥ वार्द्धकं। केदाराद्यञ्च ४ २ ४०॥ चाद्वुञ्। कैदार्यं। कैदारकम्। गणिकायायञ्वक्तव्यम्। गाणिक्यं ठञ्कवचिनश्च ४ २ ४१॥ चात्केदारादपि॥ कवचिनांसमूहःकावचिकं। कैदारिकं॥ ग्रामजनबन्धुभ्यस्तल् ४ २ ४३॥ ग्रामता। जनता बन्धुता॥ तलंतंस्त्रियाम्॥ गजसहायाभ्यांचेतिवक्तव्यम्। गजता सहायता॥ अह्नःखःक्रतौ अहीनःक्रतुः॥ अचित्तहस्तिधेनोष्ठक् ४ २ ४७॥इसुसुक्तान्तात्कः ७ २ ५१॥ इस् उस् उक् तएतदन्तात्परस्यठस्यकः साक्तुकं हास्तिकं। धैनुकं॥ केशाश्वाभ्यांयञ्छावन्यतरस्याम् ४ २ ४८॥ पक्षेठगणौ। कैश्यं। कैशिकं। अश्वीयं। आश्वं॥ पाशादिभ्योयः ४ २ ४९॥ पाश्या। तृण्या। धूम्या। वन्या। वात्या॥ खलगोरथात् ४ २ ५०॥ खल्या। गव्या। रथ्या॥ इनित्रकट्यचश्च ४ २ ५१॥ खलादिभ्यःक्रमात्स्युः॥ खलिनी। गोत्रा। रथकट्या। खलादिभ्यइनिर्वक्तव्यः। डाकिनी। कुटुंबिनी॥ आकृतिगणोयम्॥ तदस्यांप्रहरणमितिक्रीडायांणः ४ २ ५७॥ दण्डःप्रहरणमस्यांक्रीडायान्दा

गडा ॥ मौष्ठा ॥ घञःसास्यांक्रियेतिञः ४ २ ७० ॥ घ ञन्तात्क्रियावाचिनःप्रथमान्तादस्यामित्यर्थे स्त्रीलिंगे ञप्रत्ययः ॥ श्येनतिलस्यपातेञे ६ ३ ७१ ॥ अनयोर्मुम् स्यात्ञप्रत्ययेपरेपातशब्देउत्तरपदे । श्यैनम्पातामृगया तैलंपातास्वधा ॥ श्येनतिलस्यकिम् ॥ दंडपातोस्यांदां डपातातिथिः ॥ तदधीतेतद्वेद ४ २ ५९ ॥ न्य्वाभ्यां पदांताभ्यांपूर्वौतुताभ्यामैच् ७ ३ ३ ॥ पदांताभ्यांय कारवकाराभ्यांपरस्याचोनवृद्धिःकिंतुताभ्यांपूर्वौक्रमादै चावागमौस्तः ॥ व्याकरणमधीतेवेत्तिवावैयाकरणः । क्रमादिभ्योवुन् ४ २ ६१ ॥ क्रमकः । पदकः ॥ शिक्षकः । मीमांसकः ॥ क्रतूक्थादिसूत्रान्ताट्ठक् ४ २ ६० ॥ क्रतुविशेषवाचिनामेवग्रहणं । तेभ्योमुख्यार्थेभ्योवेदितरि तत्प्रतिपादकग्रंथपरेभ्यस्त्वधेतरि ॥ आग्निष्टोमिकः ॥ वाजपेयिकः ॥ उक्थंसामविशेषः ॥ तल्लक्षणपरोग्रन्थ विशेषोलक्षणयोक्थं ॥ तदधीतेवेदवाऔक्थिकः ॥ मु ख्यार्थात्तूक्थशब्दात्ठगणौनेष्येते । नैयायिकः ॥ वा र्त्तिकः ॥ लौकायतिकः ॥ सूत्रांतात्तुअकल्यादेरवेष्यते । सांग्रहसूत्रिकः ॥ अकल्पादेःकिं । काल्पसूत्रः ॥ विद्या लक्षणकल्पान्ताच्चेतिवक्तव्यं ॥ वायसविद्यिकः ॥ गौल क्षणिकः ॥ पाराशरकल्पिकः ॥ अंगक्षत्रधर्म्मत्रिपूर्वाद्वि द्यांतान्नेतिवक्तव्यं । आंगविद्यः । क्षात्रविद्यः । धार्म्म विद्यः ॥ त्रिविधाविद्यात्रिविद्यातामधीतेवेत्तिवात्रैविद्यः । तदस्मिन्नस्तीतिदेशेतन्नाम्नि ४ २ ६७ ॥ उदुम्बराः संत्यस्मिंदेशेऔदुम्बरोदेशः ॥ तेननिर्वृत्तं ४ २ ६८ ॥

कुशाम्बेन निर्वृत्ता कौशाम्बी नगरी ॥ तस्य निवासः ४ २ ६९ ॥ शिबीनां निवासो देशः शैबः ॥ अदूरभवश्च ४ २ ७० ॥ विदिशाया अदूरभवं वैदिशम् ॥ वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यककठकोरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसंकाशबलपक्षकर्णसुतंगमप्रगदिन्वराहकुमुदादिभ्यः ४ ३ ८० ॥ सप्तदशभ्यः सप्तदश क्रमात्स्युश्चातुरर्थ्याम् ॥ अरीहणादिभ्यो वुञ् । अरीहणेन निर्वृत्तमारीहणकं ॥ कृशाश्वादिभ्यश्छण् । कार्शाश्वीयः ॥ ऋश्यादिभ्यः कः । ऋश्यकं । कुमुदादिभ्यष्ठच् । कुमुदिकं ॥ काशादिभ्य इलः ॥ काशिलः ॥ तृणादिभ्यः सः । तृणसं । प्रेक्षादिभ्य इनिः । प्रेक्षी ॥ अश्मादिभ्यो रः । अश्मरः ॥ सख्यादिभ्यो ढञ् ॥ साखेयं ॥ संकाशादिभ्यो ण्यः ॥ सांकाश्यं ॥ बलादिभ्यो यः ॥ बल्यं ॥ पक्षादिभ्यः फक् । पाक्षायणः ॥ पथः पंथ च । पान्थायनः । कर्णादिभ्यः फिञ् । कार्णायनिः ॥ सुतंगमादिभ्य इञ् ॥ सौतंगमिः ॥ प्रगदिनादिभ्यो ञ्यः । प्रगदिन् ॥ प्रागद्यः । वराहादिभ्यः कक् ॥ वाराहकः । कुमुदादिभ्यष्ठक् ॥ कौमुदिकः ॥ जनपदे लुप् ४ २ ८१ ॥ जनपदे वाच्ये चातुरर्थिकस्य लुप् ॥ लुपि युक्तवद्व्यक्तिवचने १ २ ५१ ॥ लुपि सति प्रकृतिवल्लिंगवचने स्तः ॥ पंचालानां निवासो जनपदः पंचालाः कुरवः । अंगाः । कालिंगाः ॥ वरणादिभ्यश्च ४ २ ८२ ॥ अजनपदार्थ आरंभः ॥ वरणानामदूरभवं नगरं वरणाः । शर्करायां वा ४ २ ८३ ॥ अस्माच्चातुरर्थिकस्य लुप्स्यात् ॥ ठकूछौ च ४ २ ८४ ॥ शर्क

रायाएतौस्तः । कुमुदादौवराहादौचपाठसामर्थ्यात्पक्षे ठच्ककौ ॥ वाग्रहणसामर्थ्यात्पक्षेऔत्सर्गिकोण् । तस्य लुब्विकल्पः। षड्रूपाणि ॥ शर्करा । शार्करिकं। शार्करं। शर्करीयं ॥ शार्करिकं। शार्करकं। नद्यांमतुप् ४ २ ८५ चातुरर्थिकः। इक्षुमती ॥ कुमुदनडवेतसेभ्योड्मतुप्। ८ २ ९ ॥ झयः ८ २ १० ॥ मतोर्मस्यवः। कुमुद्वान् नड्वान् मादुपधायाश्चमतोर्वोऽयवादिभ्यः ८ २ १० ॥ मवार्णा वर्णान्तान्मवर्णाऽवर्णोपधायाच्चयवादिवर्जितात्परस्यम तोर्मस्यवः । वेतस्वान् ॥ नडशादाड्ड्वलच् । ४ २ ८८ ॥ नड्वलः । शाद्वलः । शिखायावलच् । ४ २ ८९ ॥ शिखावलः । उत्करादिभ्यश्छः ४ २ ९० ॥ उ त्करीयम् ॥ नडादीनांकुक्च । ४ २ ९५ ॥ नडकीयं ॥ क्रुंचाहूस्वत्वंच ॥ क्रुंचकीयः ॥ तक्षन्नलोपश्च ॥ तक्षकी यः ॥ ३ ॥ इतिचातुरर्थिकाः ॥ ३ ॥ शेषे ४ २ ९२ अपत्यादिचतुरर्थ्यंतादन्योर्थःशेषस्तत्राणादयःस्युः ॥ च क्षुषागृह्यते । चाक्षुषंरूपं। श्रावणःशब्दः । औपनिष दःपुरुषः । दृषदिपिष्टादार्षदाःसक्तवः । उलुखलेक्षुस्म औलूखलोयावकः । अश्वैरूह्यते आश्वोरथः । चतुर्भि रुह्यते । चातुरसकटं । चतुर्दश्यां दृश्यतेचातुर्दशंरक्षः तस्यविकारइत्यतःप्राक्शेषाधिकारः ॥ राष्ट्रावारपाराघ खौ ४ २ ९३ ॥ आभ्यांघखौस्तः । राष्ट्रेजातादिराष्ट्रियः अवारपारीणः ॥ अवारपाराद्विगृहीतादपिविपरीता च्चेतिवक्तव्यम् ॥ अवारीणः ॥ पारावारीणः इहप्रकृति विशेषात् घादयष्ट्युट्युलन्ताःप्रत्ययाउच्यन्ते । तेषांजा

तादयोर्थविशेषाः समर्थविभक्तयश्च वक्ष्यन्ते। ग्रामाद्यखञौ ४ २ ९४॥ ग्राम्यः। ग्रामीणः॥ नद्यादिभ्योढक् ४ २ ९७॥ नादेयं। माहेयं। वाराणसेयं॥ दक्षिणापश्चात्पुरसस्त्यक् ४ २ ९८॥ दाक्षिणात्यः। पाश्चात्यः। पौरस्त्यः॥ द्युप्रागपागुदक्प्रतीचोयत् ४ २ १०१॥ दिव्यं। प्राच्यं। अपाच्यं। उदीच्यं। प्रतीच्यं॥ अव्ययात्त्यप् ४ २ १०४॥ अमेहक्वतसित्रेभ्यएव॥ अमात्यः॥ इहत्यः॥ क्वत्यः। ततस्त्यः॥ तत्रत्यः। त्यब्नेर्ध्रुवेइतिवाच्यम्॥ नित्यः। निसोगते। ह्रस्वात्तादौ तद्धिते ८ ३ १०१॥ ह्रस्वादिणःसस्यपस्तादौतद्धिते। निर्गतोवर्णाश्रमेभ्योनिष्टग्रश्चांडालादिः॥ अरण्याणः। आरण्याःसुमनसः॥ दूरादेत्यः॥ उत्तरादाहञ्॥ औत्तराहः॥ ऐषमोह्यःश्वसोऽन्यतरस्याम् ४ २ १०५॥ एभ्यस्त्यब्वा। पक्षेवक्ष्यमाणौट्युट्युलौ। ऐषमस्त्यम्। ऐषमस्तनम्॥ ह्यस्त्यं। ह्यस्तनं। श्वस्त्यं। श्वस्तनम्। पक्षेशौवस्तिकंवक्ष्यते॥ वृद्धाच्छः ४ २ ११४॥ शालीयः॥ त्यदादीनिच १ १ ७४॥ वृद्धसंज्ञानिस्युः। तदीयः। वानामधेयस्यवृद्धसंज्ञा॥ देवदत्तीयः। दैवदत्तः॥ भवतष्ठक्छसौ ४ २ ११५॥ वृद्धाद्भवतएतौस्तः॥ भावत्कः। सितित्र॥ तद्धितपूर्वपदंस्यात्। जश्त्वं॥ भवदीयः। वृद्धादित्यनुवृत्तःशत्रन्तादणेव। भावतः॥ काश्यादिभ्यष्ठञ्ञिठौ ४ २ ११६॥ इकारउच्चारणार्थः। काशिकी। काशिका। वैदिकी। वैदिका॥ आपदादिपूर्वपदात्कालांतात्॥ आपदादिराकृतिगणः॥ आपत्कालि

की ॥ आपत्कालिका ॥ धन्वयोपधाद्वुञ् ४ २ १२१ ॥ धन्वविशेषवाचिनोयकारोपधाच्चदेशवाचिनोवृद्धाद्वुञ् स्यात् । ऐरावतंधन्व: । ऐरावतक: ॥ सांकाश्यकाम्पिल्पशब्दौवुञ्छणादिसूत्रेगणयान्तौ । सांकाश्यक: । काम्पिल्यक: ॥ नगरात्कुत्सनप्रावीण्ययो: ४ २ १२८ ॥ कुत्सितेप्राविण्येचनगरशब्दाद्वुञ्स्यात् । नागरकश्चौर: शिल्पीवा ॥ एतयो:किं । नागरा: । ब्राह्मणा: ॥ अरण्यान्मनुष्ये ४ २ २१ ॥ वुञ् स्यात् ॥ औपसंख्यानिकणस्यापवाद: । पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वाच्यम् ॥ आरण्यक:पंथा: ॥ अध्यायोन्यायोविहारोमनुष्योहस्तीवा ॥ गर्त्तोत्तरपदाच्छ: ४ २ १३० ॥ देशइत्येव ॥ वृकगर्त्तीयं ॥ गहादिभ्यश्च ४ २ १३८ ॥ गहीय: ॥ युष्मदस्मदोरन्यतरस्यांखञ् च ४ ३ १ ॥ चाच्छ: ॥ पक्षेऽण् । युवयोर्युष्माकंवायंयुष्मदीय: ॥ अस्मदीय: ॥ तस्मिन्नणिचयुष्माकास्माकौ ४ ३ २ ॥ युष्मदस्मदोरेतावादेशौस्त:खञिअणिच । यौष्माकीण: । अस्माकीन: ॥ यौष्माक: ॥ आस्माक: ॥ तवकममकावेकवचने ४ ३ ३ ॥ एकार्थवाचिनोयुष्मदस्मदोस्तवकममकौस्त: खञि अणिच ॥ तावकीन: ॥ तावक: ॥ मामकीन: ॥ मामक: ॥ छेतु ॥ प्रत्ययोत्तरपदयोश्च ७ २ ९८ ॥ मपर्यन्तयोरेकार्थवाचिनोस्त्वमौस्त:प्रत्यये उत्तरपदेच । त्वदीय: । मदीय: । त्वत्पुत्र: ॥ मध्यान्म: ४ ३ ८ ॥ मध्यम: ॥ असांप्रतिके ४ ३ ९ ॥ मध्यशब्दादप्रत्यय: सांप्रतिकेर्थे ॥ उत्कर्षापकर्षहीनोमध्योवैय्याकरण: । म

ध्यंदारु । नातिह्रस्वंनातिदीर्घमित्यर्थः ॥ द्वीपादनुसमुद्रंयञ् ।४।३।१०॥ समुद्रसमीपेयोद्वीपस्तद्विषयाद्द्वीपशब्दाद्यञ्स्यात् । द्वैप्यम् । द्वैप्या ॥ कालाट्ठञ् ४।३।११॥ मासिकम् । साम्वत्सरिकं ॥ अव्ययानांभमात्रेटिलोपः ॥ सायंप्रातिकः । पौनःपुनिकः । कथंतर्हिशार्वरस्यतमसोनिसिद्धये इतिकालिदासः ॥ अनुदितौपसरागेतिभारविः । समानकालीनंप्राक्कालीनमित्यादिच । अपभ्रंशाएवइतिप्रामाणिकाः । तत्रजातइतियावत्कालाधिकारः ॥ श्राद्धेशरदः ४ ३ १२ ॥ ठञ्स्यात् । ऋत्वणोपवादः । शरदिभवंशारदिकंश्राद्धम् ॥ विभाषारोगातपयोः ४ ३ १३ ॥ शारदिकः । शारदोवारोगआतपोवा ॥ निशाप्रदोषाभ्यांच ४ ३ १४ ॥ ठञ्वा । नैशिकम् । नैशम् । प्रादोषिकम् । प्रादोषम् ॥ श्वसस्तुट्च ४ ३ १५ ॥ श्वसष्ठञ्वातुट्च ॥ द्वारादीनांच ७ ३ ४ ॥ एषांनवृद्धिरैजागमश्च । शौवस्तिकम् ॥ संधिवेलाद्यृतुनक्षत्रेभ्योऽण् ४ ३ १६ ॥ संधिवेलायांभवंसांधिवेलम् । ग्रैष्मम् ॥ संधिवेला संध्या अमावास्या त्रयोदशी चतुर्दशी पौर्णमासी प्रतिपत् ॥ प्रावृषएण्यः ४ ३ १७ ॥ प्रावृषेण्यः ॥ वर्षाभ्यष्ठक् ४ १ १८ ॥ वर्षासुसाधुर्वार्षिकोवासः ॥ सर्वत्राण्चतलोपश्च ४ ३ २२ ॥ हेमन्तादण्तलोपश्चवेदलोकयोः ॥ चकारात्पक्षेऋत्वण् । हेमन्तेभवं हैमनम् । हैमन्तम् ॥ वसनम् ॥ सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौतुट्च । ४ । २ । २३ ॥ सायमित्यादिभ्यश्चतुर्भ्य अव्ययेभ्यश्च कालवाचिभ्यष्ट्युट्युलौस्त

स्तयोस्तुट्च। सायंभवं सायंतनं। चिरंतनं॥ प्राह्णप्र गयोरेदन्तत्वंनिपात्येते। प्राह्णेतनं। प्रगेतनं। दोषा तनं। दिवातनं। चिरपरुत्परारिभ्यस्त्नोवक्तव्यः। चि रत्नम्। परुत्नं। परारित्नं॥ अग्रादिपश्चाड्डिमच्॥ अग्रि मं। पश्चिमं॥ अंताच्च॥ अंतिमं॥ विभाषापूर्वाह्णा पराह्णाभ्याम् ४ ३ २४॥ आभ्यांट्युट्युलौवास्तस्तयोस्तु ट्च। पक्षेठञ्। पूर्वाह्णेतनम्। पौर्वाह्णिकं। अपराह्ण तनं। आपराह्णिकं॥ तत्रजातः ४ ३ २५॥ सप्तमी समर्थाज्जातइत्यर्थेऽणादयोघादयश्चस्युः॥ स्रुघ्नेजातः स्रौघ्नः। औत्सः। राष्ट्रियः॥ अवारपारीणइत्यादि॥ प्रावृषष्ठप् ४ ३ २६॥ एण्यस्यापवादः। प्रावृषिकः। प्रायभवः ४ ३ ३९॥ तत्रेत्येव॥ स्रुघ्नेप्रायेणबाहुल्ये नभवतिस्रौघ्नः॥ सम्भूते ४ ३ ४१॥ स्रुघ्नेसम्भवति स्रौघ्नः। कोशाड्ढञ् ४ ३ ४२॥ कौशेयंवस्त्रं॥ तत्रभ वः ४ ३ ५३॥ स्रुघ्नेभवःस्रौघ्नः॥ औत्सः। राष्ट्रियः॥ दिगादिभ्योयत्। ४ ३ ५४॥ दिश्यं। वर्ग्यं॥ शरी रावयवाच्च ४ ३ ५५॥ दन्त्यं॥ कंठ्यं॥ दृतिकुक्षिकल शिवस्त्यस्त्यहेर्ढञ् ४ ३ ५६॥ दार्त्तेयं॥ कलशिर्घ टः॥ तत्रभवंकालशेयं॥ ग्रीवाभ्योणच ४ ३ ५७॥ चाड्ढञ्॥ ग्रैवेयं ग्रैवम् गम्भीराञ्ञ्यः। ४ ३ ५८॥ गम्भीरेभवंगांभीर्यं॥ अव्ययीभावाच्च ४ ३ ५९॥ पारि मुखेभवंपारिमुख्यं॥ परिमुखादिभ्यएवेष्यते॥ नेह। औपकूलः॥ अन्तःपूर्वपदात्ठञ् ४ ३ ६०॥ अव्ययी भावादित्येव। वेश्मनिइति अन्तर्वेश्मंतत्रभवंआन्त

वैश्मिकं ॥ आन्तर्गणिकं ॥ अध्यात्मादेष्ठञिष्यते ॥ अध्यात्मेभवंआध्यात्मिकं ॥ अनुशतिकादीनांच ७ ३ २० एषामुभयपदवृद्धिर्ञितिणितिकितिच ॥ आधिदैविकं ॥ आधिभौतिकम् ॥ ऐहलौकिकं ॥ आकृतिगणोयं ॥ जिह्वामूलांगुलेश्छः ४ ३ ६२ ॥ जिह्वामूलीयं ॥ अंगुलीयं ॥ वर्गान्ताच्च ४ ३ ६३ ॥ कवर्गीयं ॥ ततआगतः ४ ३ ७४ ॥ स्रुघ्नादागतः स्रौघ्नः ॥ ठगायस्थानेभ्यः ४ ३ ७५ ॥ शुक्रशालायाआगतः शौक्रशालिकः ॥ विद्यायोनिसंवन्धेभ्योवुञ् ४ ३ ७७ ॥ औपाध्यायकः । पैतामहकः ॥ ऋतष्ठञ् ४ ३ ७८ ॥ वुञोपवादः । हौतृकं । मातृकं । भ्रातृकं ॥ पितुर्यच्च ४ ३ ७९ ॥ चाट्ठञ् । रीङृतः । यस्येतिलोपः । पित्र्यं । पैतृकं ॥ गोत्रादंकवत् ४ ३ ८० ॥ विदेभ्यआगतंवैदं । गार्गम् । दाक्षं । औपगवकं ॥ हेतुमनुष्येभ्योन्यतरस्यांरूप्यः । ४ ३ ८१ ॥ समादागतंसमरूप्यं । पक्षेगहादित्वाच्छः । समीयं । देवदत्तीयं । देवदत्तरूप्यं ॥ मयट्च ४ ३ ८२ ॥ सममयं ॥ प्रभवति ४ ३ ८३ ॥ हिमवतः प्रभवतिहैमवतीगंगा ॥ विदूराञ्ञ्यः ४ ३ ८४ ॥ विदूरात्प्रभवतिवैदूर्योमणिः । दन्तमध्योयंशाड्वलवत् । नतुनड्वलवन्मूर्द्धन्यमध्यः । नन्वर्थासंगतिः । वालवायाद्धिस प्रभवतिविदूरेतुसंस्क्रियते । सत्यं । अतएवसमाहितंभाष्येवालवायोविदूरंचेति । वालवायशब्दःप्रत्ययंलभतेविदूरादेशञ्च । सूत्रेपठितेनादेशेनानुरूपस्थानीआक्षिप्यते ॥ तद्गच्छतिपथिदूतयोः ४ ३ ८५ ॥ स्रुघ्नङ्गच्छ

तिस्रौघ्नः। पन्थादूतोवा॥ अभिनिष्क्रामतिद्वारं ४ ३ ८६॥ स्रुघ्नमभिगच्छतिस्रौघ्नंकान्यकुब्जद्वारं॥ अधिकृत्यकृतेग्रन्थे ४ ३ ८७॥ शारीरकमधिकृत्यकृतोग्रंथः। शारीरकीयः। शारीरकंभाष्यमितित्वभेदोपचारात्॥ सोऽस्यनिवासः ४ ३ ८९॥ स्रुघ्नोनिवासोस्यस्रौघ्नः॥ तेनप्रोक्तम् ४ ३ १०१॥ पाणिनिनाप्रोक्तंपाणिनीयं॥ पाराशर्यशिलालिभ्यांभिक्षुनटसूत्रयोः। ४ ३ ११०॥ णिनिःस्यात्। पाराशर्येणप्रोक्तंभिक्षुसूत्रमधीयते। पाराशरिणः। भिक्षवः। शैलालिनोनटाः॥ कर्मन्दकृशाश्वादिनिः ४ ३ १११॥ कर्मन्देनप्रोक्तम्भिक्षसूत्रमधीयतेकर्मन्दिनोभिक्षवः। कृशाश्विनोनटाः॥ उपज्ञाते ४ ३ ११५॥ पाणिनिनाउपज्ञातंपाणिनीयं॥ तस्येदं ४ ३ १२०॥ उपगोरिदमौपगवं। समिधामाधानेषेण्यण्। सामिधेन्योमंत्रः॥ रथाद्यत् ४ ३ १२१॥ रथ्यंचक्रम्॥ पत्रपूर्वादञ् ४ ३ १२२॥ अश्वरथस्येदंआश्वरथं॥ हलसीराट्ठक् ४ ३ १२४॥ हालिकम् सौरिकम् गोत्रचरणाद्वुञ् ४ ३ १२६॥ औपगवकं। चरणाद्धर्माम्नाययोरितिवक्तव्यम्। काठकं॥ संघाङ्कलक्षणेष्वञ्यञिञामण् ४ ३ १२७॥ घोषग्रहणमपिकर्त्तव्यं। अञ्। वैदःसंघोकोघोषोवा। वैदं। लक्षणं। यञ्। गार्गः। गार्गं॥ इञ्। दाक्षः। दाक्षं। परंपरासंबंधोंकः। साक्षात्तुलक्षणम्॥ ४॥ इतिशैषिकाः॥ ४॥ तस्यविकारः ४ ३ १३४॥ अश्मनोविकारेटिलोपोवक्तव्यः॥ अश्मनोविकारआश्मः॥ भास्मनः। मार्त्तिकः॥ अवयवे

चप्राण्यौपधिवृक्षेभ्यः ४ ३ १३५ ॥ चाद्विकारे। मयू
रस्यविकारोऽवयवोवामायूरः। मौर्वं। काण्डंभस्मवा।
पैप्पलं ॥ त्रपुजतुनोःपुक् ४ ३ १३८ ॥ आभ्यामणएत
योःपुक्च। त्रापुषं। जातुषं ॥ ओरञ् ४ ३ १३९ ॥
दैवदारवं ॥ अनुदात्तादेश्च ४ ३ १४० ॥ अञ्। कापि
त्थम् ॥ पलाशादिभ्योवा ४ ३ १४१ ॥ अञ्। पालाशं ॥
खादिरं। शम्याष्लञ् ४ ३ १४२ ॥ शामीलम् ॥ मय
ड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ४ ३ १४३ ॥ प्रकृति
मात्रान्मयड्वास्याद्विकारावयवयोः। अश्ममयं। आ
श्मनं। अभक्ष्येत्यादिकिं। मौद्गः। सूपः। कार्पासमा
च्छादनं ॥ नित्यंवृद्धशरादिभ्यः ४ ३ १४४ ॥ आम्र
मयं। शरमयं। एकाचोनित्यं। वाङ्मयं ॥ गोश्चपुरीषे
४ ३ १४५ ॥ गोमयम् ॥ एण्याढञ् ४ ३ १५९ ॥ ऐ
णेयं। एणस्यतुऐणं ॥ गोपयसोर्यत् ४ ३ १६० ॥ ग
व्यं। पयस्यं ॥ फलेलुक् ४ ३ १६३ ॥ विकारावयवप्र
त्ययस्य ॥ लुक्तद्धितलुकि १ २ ४९ ॥ उपसर्जनस्त्रि
प्रत्ययस्य ॥ आमलक्याःफलम्। आमलकम् ॥ प्लक्षादि
भ्योऽण् ४ ३ १६४ ॥ विधानसामर्थ्यान्नलुक् प्लाक्षं ॥ न्यग्रो
धस्यचकेवलस्य ७ ३ ५ ॥ अस्यनवृद्धिरैजागमश्च। नै
यग्रोधं ॥ जंब्वावा। ४ ३ १६५ ॥ अण्फले ॥ जाम्बवं।
पक्षेओरञ्। तस्यलुक् ॥ जंबु ॥ लुप्च ४ ३ १६६ ॥ जंब्वाः
फलप्रत्ययस्य लुब्वास्यात् ॥ लुपियुक्तवत्। जंबूः ॥ फल
पाकशुषामुपसंख्यानं। व्रीहयः। मुद्गाः पुष्पमूलेषु
बहुलं ॥ मल्लिकायाः। पुष्पंमल्लिका। जात्याःपुष्पं जाती

विदार्य्याःमूलंविदारी । वहुलग्रहणान्नेह ॥ पाटलानि पुष्पाणि ॥ साल्वानिमूलानि । वाहुलकात्क्वचिल्लुक् । अशोकम् ॥ करवीरं ॥ हरितक्यादिभ्यश्च ४ ३ १६६ फलप्रत्ययस्यलुप् । हरीतक्यादीनांलिङ्गमेवप्रकृतिवत् । हरीतक्याःफलानि हरीतक्यः ॥ इतिप्राग्दीव्यतीयाः५ ॥ प्राग्वहतेष्ठक् ४ ४ १ ॥ तद्वहतीत्यतः प्राग्ठगधिक्रियते । तदाहेतिमाशब्दादिभ्यउपसंख्यानं ॥ माशब्दःकारीतियआहसमाशब्दिकः ॥ आहौप्रभूतादिभ्यः ॥ प्रभूतमाहप्राभूतिकः ॥ पार्य्याप्तिकः ॥ पृच्छतौसुस्नातादिभ्यः । सुस्नातंपृच्छतिसौस्नातिकः । शौखशायनिकः । आनुशतिकादिः ॥ गच्छतौपरदारादिभ्यः ॥ पारदारिकः ॥ गौरुतल्पिकः ॥ तेनदीव्यतिखनतिजयतिजितं ४ ४ २ ॥ अक्षैर्दीव्यतिखनतिजयतिजितंवा आक्षिकः ॥ संस्कृतं ४ ४ ३ ॥ दध्नासंस्कृतन्दाधिकं ॥ मारिचिकं ॥ तरति ४ ४ ५ ॥ उडुपेनतरति । औडुपिकः ॥ गोपुच्छाट्ठञ् ४ ४ ६ ॥ गौपुच्छिकः ॥ नौद्व्यचष्ठन् ४ ४ ७ ॥ नाविकः । घटिकः ॥ चरति ४ ४ ८ ॥ हस्तिनाचरतिहास्तिकः । दध्नाचरतिदाधिकः शकटेनचरतिशाकटिकः ॥ पर्प्यादिभ्यःष्ठन् ४ ४ १० ॥ पर्प्पेणचरतिपर्पिकः । येनपिठेनपंगवश्चरंति संपर्पः ॥ आश्विकः । रथिकः ॥ श्वगणाट्ठञ्च । ४ ४ ११ ॥ चात्ष्ठन् ॥ श्वादेरिञि ७ ३ ८ ॥ ऐच्न । श्वाभस्त्रिः इकारादावितिवाच्यम् । श्वगणेनचरतिश्वागणिकः श्वगणिकः ॥ वेतनादिभ्योजीवति ४ ४ १२ ॥ वेतनेन जीवतिवैतनिकः । धानुष्कः ॥ हरत्युत्सङ्गादिभ्यः ४ ४ १५ ॥

उत्संगेनहरति औत्संगिकः॥ भस्त्रादिभ्यष्ठन् ४ ४ १६॥ भस्त्रयाहरतिभस्त्रिकः। षित्वाद्भस्त्रिकी॥ विभाषाविवधात् ४ ४ १७॥ ष्ठन्। पक्षेठक्। विवधेनहरति॥ विवधिकः॥ एकदेशविकृतत्वाद्वीवधादपि। वैवधिकः। विवधवीवधशब्दौउभयतोवद्धशिक्येस्कन्धवाह्येकाष्ठेवर्त्तते॥ निर्वृत्तेक्षद्यूतादिभ्यः ४ ४ १९॥ अक्षद्यूतेननिर्वृत्तंआक्षद्यूतिकंवैरं॥ संसृष्टे ४ ४ २॥ दध्नासंसृष्टंदाधिकम्॥ लवणाल्लुक् ४ ४ २४॥ लवणेनसंसृष्टोलवणः॥ सूपः॥ मुद्गादण् ४ ४ २५॥ मौद्गओदनः॥ उञ्छति ४ ४ ३२॥ वदराण्युञ्छतिवादरिकः॥ रक्षति ४ ४ ३३॥ समाजंरक्षतिसामाजिकः॥ शब्ददर्दुरंकरोति ४ ४ ३४॥ शब्दंकरोतिशाब्दिकः। दार्दुरिकः॥ पक्षिमत्स्यमृगान्हन्ति ४ ४ ३५॥ स्वरूपस्यपर्यायाणांविशेषाणांचग्रहणं॥ मत्स्यपर्यायेपुमीनस्यैव। पक्षिणोहन्तिपाक्षिकः। शाकुनिकः। मायूरिकः। मात्सिकः। मैनिकः। शाकुलिकः। मार्गिकः। हारिणिकः। सारंगिकः॥ धर्मंचरति ४ ४ ४१॥ धार्मिकः। अधर्माच्चेतिवक्तव्यं॥ आधर्मिकः॥ तदस्यपण्यं ४ ४ ५१॥ अपूपाः पण्यमस्यआपूपिकः॥ लवणाट्ठञ् ४ ४ ५३॥ लावणिकः। शिल्पं ४ ४ ५५॥ मृदङ्गवादनंशिल्पमस्यमार्दंगिकः॥ प्रहरणं ४ ४ ५७॥ असिःप्रहरणमस्यआसिकः॥ धानुष्कः॥ शक्तियष्ट्योरीकक् ४ ४ ५९॥ शाक्तिकः। याष्टीकः॥ अस्तिनास्ति दिष्टंमतिः ४ ४ ६०॥ अस्तिपरलोकइत्येवंमतिर्यस्यसआस्तिकः॥ नास्तीति

मतिर्यस्यसनास्तिकः ॥ दिष्टमितिमतिर्यस्यदैष्टिकः ॥ शीलम् ४ ४ ६१ ॥ अपूपभक्षणंशीलंयस्यआपूपिकः ॥ छत्रादिभ्योणः । ४ ४ ६२ ॥ गुरोर्दोषाणामावरणंछत्रं ॥ तच्छीलमस्येतिछात्रः ॥ तत्रनियुक्तः ४ ४ ६९ ॥ आकरेनियुक्तः ॥ आकारिकः ॥ निकटेवसति । ४ ४ ७३ ॥ नैकटिकोभिक्षुः ॥ ६ ॥ इतिठगधिकारः ॥ ६ ॥ प्राग्घितायत् ४ ४ ७५ ॥ तस्मैहितमित्यतःप्राग्यदधिक्रियते ॥ तद्वहतिरथयुगप्रासंगं ४ ४ ७६ ॥ रथंवहतिरथ्यः । युग्यः । प्रासंग्यः ॥ धुरोयड्ढकौ ४ ४ ७७ ॥ धुर्यः । धौरेयः ॥ हलसीराड्ढक् ४ ४ ८१ ॥ हलंवहतिहालिकः । सैरिकः ॥ विध्यत्यधनुषा ४ ४ ८३ ॥ द्वितीयांताद्विध्यतीत्यर्थेयन्नचेत्तत्रधनुःकरणं । पादौविध्यंतिपद्याः । शर्कराः ॥ नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु ४ ४ ९१ ॥ नावातार्यंनाव्यंजलं । वयसातुल्योवयस्यः । धर्मेणप्राप्यंधर्म्यं । विषेणवध्योविष्यः मूलेनआनाम्यंमूल्यं । मूलेनसमोमूल्यः । सीतयासमीतंसीत्यंक्षेत्रं । तुलयासंमितंतुल्यं ॥ तत्रसाधुः ४ ४ ९८ ॥ सामसुसाधुः सामन्यः । अग्र्यः । कर्मण्यः । शरण्यः ॥ सभायायः ४ ४ १०५ ॥ सभ्यः ७ ॥ इतियतोवधिः ॥ ७ प्राक्क्रीताच्छः ५ १ १ ॥ तेनक्रीतमित्यतःप्राक्छोधिक्रीयते ॥ उगवादिभ्योयत् ५ १ २ ॥ प्राक्क्रीतादित्येव । उवर्णान्ताद्गवादिभ्यश्चयत्स्याच्छस्यापवादः । नाभिनभंच । नभ्योक्षः । नभ्यमंजनं । रथनाभावेवेदं । शुनःसंप्रसारणंवाचदीर्घत्वं । शुन्यम् । शून्यम् । उधसो

नङ्च। ऊधन्यः॥ कंवलाच्चसंज्ञायां ५ १ ३॥ यत्। कंवल्यं। ऊर्णापलशतं। संज्ञायांकिं। कंवलीयाऊर्णा॥ विभाषाहविरपूपादिभ्यः ५ १ ५ ॥ आमिक्ष्यंदधि। आमिक्षीयं। पुरोडाश्यास्तंडुलाः। पुरोडाशीयाः। अपूप्यं। अपूपीयं॥ तस्मैहितं ५ १ ५ ॥ वत्सेभ्योहितोवत्सियोगोधुक्। शंकव्यंदारु। गव्यं। हविष्यं॥ शरीरावाद्यत् ५ १ ५॥ दंत्यं। कंठ्य। नस्यं। अजाविभ्यांथ्यन् ५ १ ८॥ अजथ्यायूथिः। अविथ्या॥ आत्मन्विश्वजनभोगोत्तरपदात्खः ५ १ ९ ॥ आत्मध्वानौखे ६ ४ १६९ ॥ प्रकृत्यास्तः। आत्मनेहितं। आत्मनीनं। विश्वजनीनं। कर्मधारयादेवेष्यते। अन्यत्रविश्वजनीयं। पंचजनादुपसंख्यानं। पंचजनीनं। कुमतिचइतिणः। मातृभोगीणः। आचार्यादणत्वंच। आचार्यभोगीनः॥ छयतोःपूर्णोऽवधिः॥ प्राग्वतेष्ठञ् ५ १ १८ ॥ तेनतुल्यमित्यतःप्राक्ठञधिक्रियते॥ आर्हाद्गोपुच्छसंख्यापरिमाणाट्ठक् ५ ४ १९॥ तदर्हतीत्येतदभिव्याप्यठञधिकारमध्येठञोऽपवादष्ठगधिक्रियतेगोपुच्छादीन्वर्जयित्वा॥ असमासेनिष्कादिभ्यः ५ १ २० आर्हादित्येतत्तेनक्रीतमितियावदनुवर्त्तते। निष्कादिभ्योऽसमासेठगार्हीयेष्वर्थेषु। निष्केणक्रीतादिनैष्किकं॥ समासेतुठञ्॥ परिमाणांतस्यासंज्ञाशाणयोः ७ ३ १७ उत्तरपदवृद्धिर्ञिदादौ। परमनैष्किकं॥ शताच्चठन्यतावशते ५ १ २१॥ शत्यंशतिकं। अशतेकिं॥ संख्याया अतिशदंतायाःकन् ५ १ २२॥ आर्हीयेर्थे। शतंपरि

माणमस्यशतकःसंघः वहुकः । त्यन्तायास्तुसाम्प्रतिकः । शदन्तायाः । चात्वारिंशत्कः ॥ वतोरिड्वा ५ १ २३ वत्वंतात्कनइड्वा । तावत्कः । तावतिकः ॥ कंसाट्टि ठञ् ५ १ २५ ॥ कंसिकः । अर्द्धाच्च ॥ अर्द्धिकः । अध्य र्द्धपूर्वद्विगोर्लुगसंज्ञायां । ५ ४ २८ ॥ अध्यर्द्धपूर्वाद्द्विगो श्चपरस्याहींयस्यलुक् । अध्यर्द्धकंसं । द्विकंसं । संज्ञायां तु । पांचकपालिकं ॥ तेनक्रीतं ५ १ ३७ ॥ ठञ् । गोपु च्छेनक्रीतंगौपुच्छिकं । साप्ततिकं । ठक् । नैष्किकं ॥ तस्ये श्वरः ५ १ ४२ ॥ सर्वभूमिपृथिवीभ्यामणञौस्तः ॥ अनु शतिकादीनांचेतिवृद्धिः । सर्वभूमेरीश्वरःसार्वभौमः । पार्थिवः ॥ तदस्यपरिमाणं ५ १ ५७ ॥ प्रस्थःपरिमा णमस्यप्रास्थिकोराशिः ॥ स्तोमेडविधिः ॥ पंचदशमंत्राः परिमाणमस्यपंचदशः ॥ सप्तदशः ॥ सोमयागेषुछन्दो गैःक्रियमाणापृष्ठ्यादिसंज्ञिकास्तुतिःस्तोमः ॥ पंक्तिविं शतित्रिंशच्चत्वारिंशत्पंचाशत्षष्टिसप्तत्यशीतिनवतिश तं ५ १ ५९ ॥ एतेरूढिशब्दानिपात्यंते ॥ तदर्हति ५ १ ६३ ॥ श्वेतच्छत्रमर्हतिश्वैतच्छत्रिकः ॥ दंडादिभ्यः ५ १ ६६ ॥ एभ्योयत् ॥ दंडमर्हति ॥ दंड्यः ॥ अर्घ्यः । वध्यः ॥ तेननिर्वृत्तं ५ १ ७९ ॥ अह्नानिर्वृत्तमाह्निकं ॥ १ ॥ इतिठञ्टकोरवधिः ॥ १ ॥ तेनतुल्यंक्रियाचे द्वतिः ५ १ ११५ ॥ ब्राह्मणेनतुल्यंब्राह्मणवत् ॥ अधीते । क्रियाचेत्किम् ॥ गुणतुल्येमाभूत् ॥ पुत्रेणतुल्यःस्थूलः ॥ तत्रतस्येव ५ १ ११६ ॥ मथुरायामिवमथुरावत्स्रुघ्नेप्रा कारः । चैत्रस्येवचैत्रवत् । मैत्रस्यगावः ॥ तस्यभावस्त्व

तलौ ५ १ ११९ ॥ प्रकृतिजन्यबोधेप्रकारोभावः। गोर्भावः। गोत्वम्। गोता। त्वान्तंक्लीवं। तलन्तंस्त्रियाम्॥ आचत्वात् ५ १ १२० ॥ ब्राह्मणस्त्वइत्यतःप्राक्त्वतलावधिक्रियेते। अपवादैःसहसमावेशार्थमिदं। चकारोनञ्स्नञ्भ्यामपिसमावेशार्थः॥ स्त्रियाभावःस्त्रैणं॥ स्त्रीत्वं। स्त्रीता। पौंस्नम्। पुंस्त्वं। पुंस्ता॥ पृथ्वादिभ्यइमनिज्वा ५ १ १२२ ॥ वावचनमणादिसमावेशार्थम्॥ रऋतोहलादेर्लघोः ६ ४ १६० ॥ इष्टेमेयस्सु। टेः ६ ४ १५५ ॥ लोपइष्टेमेयस्सु। पृथुमृदुभृशकृशदृढपरिवृढानामेवरत्वं। पृथोर्भावः। प्रथिमा। पार्थवं। म्रदिमा मार्दवं॥ वर्णदृढादिभ्यःष्यञ्च ५ १ १२३ ॥ चादिमनिच्। शौक्ल्यं। शुक्लिमा। दार्ढ्यम्। द्रढिमा॥ गुणवचनब्राह्मणादिभ्यःकर्मणिच ५ १ १२४ ॥ चाद्भावे। जडस्यभावःकर्मवाजाड्यं। मौढ्यं। ब्राह्मण्यम्। आकृतिगणोयम्॥ चतुर्वर्णादीनांस्वार्थेउपसंख्यानम्॥ चातुर्वर्ण्यम्। चातुराश्रम्यम्। त्रैवर्ग्यम्। षाड्गुण्यम्। सैन्यम्। सान्निध्यम्। औपम्यम्। त्रैलोक्यमित्यादि॥ स्तेनाद्यन्नलोपश्च ५ १ १२५ ॥ नेतिसंघातग्रहणम्। स्तेनस्यभावःकर्मवास्तेयम्। सख्युर्यः ५ १ १२६ सख्यम्॥ कपिज्ञात्योर्ढक् ५ १ १२७ ॥ कापेयम्॥ ज्ञातेयम्॥ पत्यन्तपुरोहितादिभ्योयक्। ५ १ २९ ॥ सैनापत्यम्। पौरोहित्यम्। राजासे। राजन्शब्दोऽसमासेयकंलभतइत्यर्थः। राज्ञोभावःकर्मवाराज्य। समासेतुब्राह्मणादित्वात्ष्यञ्। आधिराज्यम्॥ प्राणभृज्जा

तिवयोवचनोद्गात्रादिभ्योऽञ् ५।१२१॥ प्राणभृजातिः। आश्वम्। वयोवचनं। कौमारं। औद्गात्रं। औन्नेत्रं। सौष्टवम्॥ हायनांतयुवादिभ्योऽण् ५।१३०॥ द्वैहायनम्। त्रैहायनम्। यौवनम्। स्थाविरम्। श्रोत्रियस्यय लोपश्च। श्रौत्रम्। कुशलनिपुणचपलपिशुनकुतूहलक्षेत्रज्ञाः युवादिषुब्राह्मणादिषुचपठ्यंते। कौशल्यं। कौशलमित्यादि॥ इगंताच्चलघुपूर्वात् ५।१३१॥ शुचेर्भावः कर्मवाशौचम्। मौनम्॥ योपधाद्गुरूपोत्तमाद्वुञ् ५।१३२॥ रामणीयकम्। आभिधानीयकम्। सहायाद्वा। साहाय्यम्। साहायकम्॥ द्वंद्वमनोज्ञादिभ्यश्च ५।१३३ शैष्योपाध्यायिका। मानोज्ञकं॥ १०॥ इतिनञ्स्नञोरवधिः॥ १०॥ धान्यानांभवनेक्षेत्रेखञ् ५।२।१॥ मुद्गानांभवनंक्षेत्रंमौद्गीनम्॥ व्रीहिशाल्योर्ढक् ५।२।२॥ व्रैहेयम्। शालेयम्॥ यवयवकषष्टिकाद्यत् ५।२।३॥ यव्यं। यवक्यम्। षाष्टिक्यं॥ विभाषातिलमाषोमाभंगाणुभ्यः ५।२।४॥ यत्। पक्षेखञ्। तिल्यं। तैलीनम्। माष्यं। माषीणम्। उम्यं। औमीनम्। भंग्यं। भांगीनम्। अणव्यम्। आणवीनम्। तत्सर्वादेःपथ्यङ्गकर्मपत्रपात्रंव्याप्नोति ५।२।७॥ सर्वादेःपथ्यादयन्ताद्द्वितीयांतात्खः। सर्वपथान्व्याप्नोतिसर्वपथीनः। सर्वाङ्गीणः। सर्वकर्मीणः। सर्वपत्रीणः। सर्वपात्रीणः॥ हैयंगवीनंसंज्ञायाम् ५।२।२३॥ नवनीतेनिपातोयम्॥ तस्यपाकमूलेपील्वादिकर्णादिभ्यःकुणप्जाहचौ ५।२।२४॥ पीलूनांपाकः पीलूकुणः। कर्णस्यमूलंकर्णजाहं॥ पक्षात्तिः ५।२।२५ मू

लेइत्यनुवर्त्तते । पक्षस्यमूलंपक्षतिः ॥ तेनवित्तश्चुंचुप्चणपौ ५ २ २६ ॥ चकारःप्रत्ययचोरादौलुप्तनिर्दिष्टः । तेनषस्यनेत्वम् ॥ विद्ययावित्तोविद्याचुंचुः । विद्याचणः ॥ वेःशालच्शंकटचौ ५ २ २८ ॥ क्रियाविशिष्टसाधनवाचकात्स्वार्थे । विस्तृतंविशालं । विशंकटम् । सम्प्रोदश्चकटच् ५ २ २९ ॥ संकटम् । प्रकटम् । उत्कटं ॥ चाद्विकटम् ॥ अलाबूतिलोमाभंगाभ्योरजस्युपसंख्यानं । अलाबूनांरजोऽलाबूकटम् । तिलकटम् ॥ गोष्टजादयःस्थानादिपुपशुनामभ्यः ॥ गवांस्थानंगोगोष्ठम् ॥ संघातेकटच् ॥ अवीनांसंघातोऽविकटः ॥ विस्तारेपठच् ॥ अविपटः ॥ द्वित्वेगोयुगच् ॥ द्वावुष्ट्रौउष्ट्रगोयुगं ॥ पट्त्वेपड्गवच् ॥ अश्वपड्गवम् । स्नेहेतैलच् । तिलतैलम् । सर्पपतैलम् ॥ अवात्कुटारच्च ५ २ ३० ॥ चात्कटच् । अवकुटारः । अवकटः ॥ नतेनासिकायाः संज्ञायांटीटच्नाटच्भ्रटचः ५ २ ३१ ॥ अवादित्येव । नतंनमनं । नासिकायानतंअवटीटम् । अवनाटम् । अवभ्रटम् । तद्योगान्नासिकावटीटा । पुरुपोऽवटीटः ॥ उपाधिभ्यांत्यकन्नासन्नारूढयोः । ५ २ ३४ ॥ पर्वतस्यासन्नंस्थलंउपत्यका । आरूढंस्थलमधित्यका ॥ कर्मणिघटोऽठच् ५ २ ३५ ॥ कर्मणिघटतेकर्मठः ॥ तदस्य संजातंतारकादिभ्यइतच् ५ २ ३६ ॥ तारकाःसंजाता अस्यतारकितंनभः । पंडितः । आकृतिगणोयम् ॥ प्रमाणेद्वयसज्दघ्नञ्मात्रचः ५ २ ३६ ॥ उरूप्रमाणमस्यउरुद्वयसं । उरुदघ्नं । उरुमात्रं । प्रथमश्चद्वितीयश्चऊर्द्धमानेम

तौमम । ऊर्ध्वमानङ्किलोन्मानम्परिमाणंतुसर्वतः । आया
मस्तुप्रमाणंस्यात्संख्यावाह्यातुसर्वतः ॥ पुरुषहस्तिभ्या
मणच ५ २ ३८ ॥ पुरुषःप्रमाणमस्यपौरुषम् । पुरुषद्वय
सं । हास्तिनम् हस्तिद्वयसम् ॥ यत्तदेतेभ्यःपरिमाणेव
तुप् ५ २ ३९ ॥ यत्परिमणमस्ययावान् । तावान् ॥
एतावान् ॥ किमिदंभ्यांवोघः ५ २ ४० ॥ आभ्यांवतुप्
स्यचघः ॥ इदंकिमोरिश्की ६ । ३ । ९० ॥ दृग्दृशवतुषु ।
कियान् । ईयान् ॥ किमःसंख्यापरिमाणेडतिच ५ २ ४१ ॥
चाद्वतुप् । तस्यचघः । कासंख्यायेषांतेकति । कियंतः ॥
संख्यायाअवयवेतयप् ५ २ ४२ ॥ पंचअवयवाअस्य
पंचतयम् ॥ द्वित्रिभ्यांतयस्यायजवा ५ २ ४३ ॥ द्वयं । द्वि
तयं । त्रितयं । त्रयम् । उभादुदात्तोनित्यम् ५ २ ४४ ॥
उभशब्दात्तयपोयच्स्यात्सचाद्युदात्तः ॥ उभयम् ॥ त
दस्मिन्नधिकमितिदशांताड्डः ५ २ ४५ ॥ एकादश
अधिकाअस्मिन्नेकादशं ॥ शतसहस्रयोरेव ॥ नेह ॥
एकादशाऽधिकाअस्यांविंशत्यां ॥ प्रकृतिप्रत्ययार्थयोः
समानजातीयत्वएवेष्यते । नेह । एकादशमाषाअधि
काअस्मिन्सुवर्णशते ॥ शदन्तविंशतेश्च । ५ २ ४६ ॥
डःस्यादुक्तेर्थे । त्रिंशदधिकाअस्मिन्त्रिंशंशतं । विंशं ॥
तस्यपूरणेडट् ५ २ ४८ ॥ संख्यायाइत्येव । एकादशा
नांपूरणएकादशः ॥ नांतादसंख्यादेर्मट् ५ २ ४९ ॥
डटोमडागमः ॥ पंचानांपूरणःपंचमः ॥ नान्तात्किम् ।
विंशः ॥ असंख्यादेःकिं । एकादशः ॥ षट्कतिकतिप
यचतुरांथुक् ५ २ ५१ ॥ डटि ॥ षस्मांपूरणःषष्ठः ॥

कतिथः ॥ कतिपयशब्दस्यासंख्यात्वेपिग्रतएवज्ञापका
त्डट् । कतिपयथः ॥ चतुर्थः ॥ चतुरश्छयतावाद्यक्षर
लोपश्च ॥ तुरीयः । तुर्यः ॥ वहुपूगगणसंघस्यतिथुक् ।
५ २ ५२ ॥ डटि ॥ वहुतिथः ॥ वतोरिथुक् ५ २ ५३
डटि ॥ यावतिथः ॥ द्वेस्तीयः ५ २ ५४ ॥ डटोऽपवा
दः । द्वयोःपूरणोद्वितीयः ॥ त्रेःसंप्रसारणंच ५ २ ५५
तृतीयः ॥ इहहलडातिदीर्घोन ॥ द्वितीयतृतीयेतिनिर्दे
शात् ॥ विंशत्यादिभ्यस्तमडन्यतरस्याम् ५ २ ५८ ॥
डटः ॥ विंशतितमः । विंशः । एकविंशतितमः । एक
विंशः ॥ नित्यंशतादिमासार्द्धमाससंवत्सराच्च ५ २ ५७
शतस्यपूरणःशततमः । एकशततमः ॥ मासादेरतएव
ज्ञापकात्डट् । मासतमः ॥ षष्ट्यादेश्चासंख्यादेः ५ २
५८ ॥ षष्टितमः ॥ संख्यादेस्तुविंशत्यादिभ्यइतिविक
ल्पएव ॥ एकषष्टः ॥ एकषष्टितमः ॥ मतौछःसूक्तसा
म्नोः ५ २ ५९ ॥ मत्वर्थेछः ॥ अच्छावाकशब्दोऽस्त्य
स्मिन्नच्छावाकीयंसूक्तं ॥ वारवंतीयंसाम ॥ श्रोत्रियं
श्छंदोऽधीते ५ २ ८४ ॥ श्रोत्रियः ॥ वेत्यनुवृत्तेः ॥
छांदसः ॥ श्राद्धमनेनभुक्तमिनिठनौ ५ २ ८५ ॥ श्रा
द्धी । श्राद्धिकः ॥ पूर्वादिनिः ५ २ ८६ ॥ पूर्वंकृतम
नेनपूर्वी ॥ सपूर्वाच्च ५ २ ८७ ॥ कृतपूर्वी ॥ इष्टादि
भ्यश्च ५ २ ८८ ॥ इष्टमनेनेष्टी ॥ अधीती ॥ अनुप
द्यन्वेष्टा ५ २ ९० ॥ अनुपदमन्वेष्टाअनुपदीगवाम् ।
साक्षाद्द्रष्टरिसंज्ञायाम् ५ २ ९१ ॥ साक्षाद्द्रष्टासा
क्षी ॥ तदस्यास्त्यस्मिन्निति मतुप् ५ २ ९४ ॥ गावोस्या

स्मिन्वासंतिगोमान् ॥ तसौमत्वर्थे १ ४ १९ ॥ तांतसां तौभसंज्ञौस्तोमत्वर्थेप्रत्ययेपरे ॥ संप्रसारणम् ॥ विदुष्मान् ॥ गुणवचनेभ्योमतुपोलुगिष्टः ॥ शुक्लोगुणोऽस्यास्तिशुक्लःपटः ॥ कृष्णः ॥ प्राणिस्थादातोलजन्यतरस्याम् ५ २ ९६ ॥ चूडालः ॥ चूडावान् । प्राणिस्थात्किं ॥ शिखावान्दीपः । प्राण्यंगादेव ॥ नेह ॥ मेधावान् ॥ सिध्मादिभ्यश्च ५ २ ९७ ॥ लज्वा । सिध्मलः । सिध्मवान् । वातदंतबलललाटानामूङ्च ॥ वातूलः । दंतूलः ॥ बलूलः ललाटूलः ॥ वत्सांसाभ्यांकामबले । ५ २ ९८ ॥ लज्वायथासंख्यंकामवतिबलवतिचार्थे ॥ वत्सलः । अंसलः ॥ फेनादिलच्च ५ २ ९९ ॥ चाल्लच् । अन्यतरस्यांग्रहणंमतुप्समुच्चयार्थमनुवर्त्तते । फेनिलः ॥ फेनलः । फेनवान् ॥ लोमादिपामादिपिच्छादिभ्यःशनेलचः ५ २ १०१ ॥ लोमादिभ्यःशः ॥ लोमशः । लोमवान् । रोमशः ॥ रोमवान् ॥ पामादिभ्योनः ॥ पामनः ॥ अंगात्कल्याणे । अंगना ॥ लक्ष्म्याअच्च ॥ लक्ष्मणः ॥ पिच्छादिभ्यइलच् ॥ पिच्छिलः । पिच्छवान् । उरसिलः । उरस्वान् ॥ प्रज्ञाश्रद्धार्चाभ्योणः ५ २ १०१ प्राज्ञोब्याकरणं ॥ प्राज्ञा । श्राद्धः । आर्चः । वृत्तेश्च । वार्त्तः ॥ तपःसहस्राभ्यांविनीनी ५ २ १०२ ॥ विनीन्योरिकारोनकारपरित्राणार्थः ॥ तपस्वी ॥ सहस्री ॥ अणाच ५ २ १०३ ॥ तापसः । साहस्रः ॥ ज्योत्स्नादिभ्यउपसंख्यानम् ॥ ज्यौत्स्नः ॥ तामिस्रः ॥ सिकताशर्कराभ्यांच ५ २ ११४ ॥ सैकतोघटः । शार्करः ॥ देशे

लुविलचौच ५ २ १०५ ॥ चादरामतुप्च ॥ सिकताः संत्यस्मिन्देशेसिकता ॥ सिकतिलः । सैकतः ॥ सिकतावान् । एवंशर्करेत्यादि ॥ दंतउन्नतउरच् ५ २ १०६ उन्नतादंताअस्यदंतुरः ॥ ऊपसुपिमुष्कमधोरः ५ २ १०७ ऊपरः । सुपिरः । मुष्कोंडः । मुष्करः । मधुरः ॥ रप्रकरणे खमुखकुंजेभ्यउपसंख्यानम् ॥ खरः मुखरः । कुंजोहस्तिहनुः ॥ कुंजरः ॥ नगपांसुपांडुभ्यश्च । नगरं । पांसुरः पांडुरः । कच्छाह्रस्वत्वंच ॥ कच्छुरः ॥ द्युद्रुभ्यांमः ५ २ १०८ ॥ द्युमः । द्रुमः ॥ केशाद्वोन्यतरस्याम् ५ २ १०९ प्रकृतेनान्यतरस्यांग्रहणेनमतुपिसिद्धेपुनर्ग्रहणंइनिठनोः समावेशार्थम् । केशवः । केशी । केशिकः । केशवान् । अन्येभ्योपिदृश्यते । मणिवोनागविशेषः ॥ हिरण्यवो निधिविशेषः ॥ अर्णसोलोपश्च ॥ अर्णवः ॥ गांडयज गात्संज्ञायाम् ५ २ ११० ॥ ह्रस्वदीर्घयोर्यणातंत्रेणनिर्देशः । गांडीवम् । गांडिवम् ॥ अर्जुनस्यधनुः । अजगवंपिनाकः ॥ कांडांडादीरन्नीरचौ । ५ २ १११ ॥ काण्डीरः । आंडीरः ॥ रजःकृष्यासुतिपरिपदोवलच् ५ २ ११२ ॥ रजस्वलास्त्री । कृषीवलः ॥ वलइतिदीर्घः ॥ आसुतीवलः । शौंडिकः ॥ परिपद्वलः ॥ पर्षदितिपाठान्तरम् ॥ पर्षद्वलः । अन्येभ्योपिदृश्यते । भ्रातृवलः । पुत्रवलः ॥ शत्रुवलः ॥ दन्तशिखात्संज्ञायाम् । ५ २ ११३ ॥ दन्तावलोहस्ती ॥ शिखावलःकेकी ॥ अतइनिठनौ । ५ २ ११५ ॥ दन्डी । दन्डिकः ॥ व्रीह्यादिभ्यश्च ५ २ ११६ ॥ व्रीही ॥ व्रीहिकः ॥ तुन्दादिभ्यइलच्च ५२११६ ॥ चादिनिठनौ ॥

मतुप्च । तुंदिलः । तुंदी । तुंदिकः । तुंदवान् ॥ रूपादाहतप्रशंसयोर्यप् ५२१२० । आहतंरूपमस्यास्तीतिरूप्यःकार्षापणः ॥ प्रशस्तंरूपमस्यास्तीतिरूप्योगौः ॥ अन्येभ्योपिदृश्यते ॥ हिम्याःपर्वताः ॥ गुण्याब्राह्मणाः ॥ अस्मायामेधास्रजोविनिः ५ २ १ २ १ ॥ यशस्वी । यशस्वान् ॥ मायावी ॥ मायावान् ॥ ब्रीह्यादिपाठान्मायी ॥ मायिकः । स्रग्वी ॥ शृंगवृन्दाभ्यामारकन् । शृंगारकः ॥ वृन्दारकः ॥ फलबर्हाभ्यामिनच् ॥ फलिनः ॥ बर्हिणः । हृदयाच्चालुरन्यतरस्याम् ॥ हृदयालुः । हृदयी । हृदयिकः । हृदयवान् । शीतोष्णतृप्रेभ्यस्तदसहने ॥ शीतंनसंनतेशीतालुः उष्णालुः ॥ तृप्रःपुरोडाशस्तन्नसहतेतृप्रालुः । तप्पर्वमरुद्भ्याम् । पर्वतः । मरुत्तः ॥ ऊर्णायायुस् ५२१२३ ॥ उर्णायुः । वाचोग्मिनिः ५२१२४ ॥ वाग्मी ॥ आलजाटचौबहुभाषिणि ५२१२५ ॥ कुत्सितइतिवक्तव्यम् ॥ कुत्सितंबहुभाषतेवाचालोवाचाटः ॥ यस्तुसम्यग्बहुवदतितत्रवाग्मीत्येव ॥ स्वामिन्नैश्वर्ये ५२१२६ ॥ ऐश्वर्यवाचकात्स्वशब्दान्मत्वर्थेआमिनिच् ॥ स्वामी ॥ अर्शआदिभ्योच् । ५२१२७ ॥ अर्शांसिअस्यविद्यंतेअर्शसः ॥ आकृतिगणोयम् । वातातीसाराभ्यांकुक्च ५२१२९ ॥ चादिनिः । वातकी । अतिसारकी । पिशाचाच्च ॥ पिशाचकी ॥ हस्ताज्जातौ ५२१३३ ॥ हस्ती ॥ वर्णाद्ब्रह्मचारिणि ५२१३४ ॥ वर्णी । कंशंभ्यांबभयुस्तितुतयसः ५२१३८ ॥ कमित्युदकसुखयोः । शमितिसुखे । आभ्यां सप्तप्रत्ययाःस्युः । युस्यसोःसकारःपदत्वार्थः । कंवः । कंभः

कंयुः । कंतिः । कंतुः । कंतः । कंयः । एवंशंयइत्यादि ॥ तुंदिवलिवटेर्भः ५ २ १३९ ॥ तुंदिभः । वलिभः । वटिभः ॥ अहंशुभमोर्युस् ५ २ १४० ॥ अहंयुः । अहंकारवान् । शुभंयुः । शुभान्वितः ॥ इतिमत्वर्थियाः ॥ प्राग्दिशोविभक्तिः ५ ३ १४१ ॥ दिक्शब्देभ्यइत्यतःप्राग्वक्ष्यमाणाःप्रत्ययाविभक्तिसञ्ज्ञाःस्युः । अथस्वार्थिकाः ॥ किंसर्वनामबहुभ्योऽद्व्यादिभ्यः ५ ३ २ किमःसर्वनाम्नोबहुशब्दाच्चेतिप्राग्दिशोधिक्रियते ॥ पंचम्यास्तसिल् ५ ३ ७ ॥ पञ्चम्यन्तेभ्यःकिमादिभ्यस्तसिल्वा ॥ कुतिहोः ७ २ १०४ ॥ किमःकुस्तादौहादौचविभक्तौ । कुतः । कस्मात् ॥ इदमइश् ५ ३ ३ ॥ प्राग्दिशीये । इतः ॥ अन् ५ ३ ४ ॥ एतदःप्राग्दिशीये । अनेकाल्त्वात्सर्वादेशः ॥ अतः । अमुतः । यतः । ततः । बहुतः । द्व्यादेस्तु । द्वाभ्यां ॥ पर्यभिभ्यांच ५ ३ ९ ॥ तसिल् । परितः सर्वतइत्यर्थः ॥ अभितः उभयतइत्यर्थः ॥ सप्तम्यास्त्रल् ७ ३ १० ॥ कुत्र । यत्र । तत्र । बहुत्र ॥ इदमोहः ५ ३ ११ ॥ त्रलोपवादः । इह ॥ किमोऽत् ५ ३ १२ ॥ वास्यात् ॥ क्वाति ७ २ १०५३ ॥ किमः । क्व । कुत्र ॥ इतराभ्योपिदृश्यन्ते ५ ३ १४ ॥ पञ्चमीसप्तमीतरविभक्त्यन्तादपितसिलादयो दृश्यन्ते । दृशिग्रहणद्भवदादियोगएव । सभवान् । ततोभवान् । तत्रभवान् । तंभवंतं । ततोभवन्तं ॥ त्रभवंतं । एवं दीर्घायुः । देवानांप्रियः । आयुष्मान् ॥ सर्वैकान्यकिंयत्तदःकालेदा ५ ३१ १५ ॥ सप्तम्यन्तेभ्यएभ्यः

कालार्थेभ्यःस्वार्थेदास्यात् ॥ सर्वस्यसोन्यतरस्यांदि ५
३ ६ ॥ दादौप्राग्दिशीयेसर्वस्यसोवा ॥ सर्वस्मिन्काले ।
सदा । सर्वदा । एकदा । अन्यदा । कदा । यदा । तदा ।
कालेकिं । सर्वत्रदेशे ॥ इदमोर्हिल् ५ ३ १६ ॥ सप्त
म्यन्तात् ॥ एतेतौरथोः ५ ३ ४ ॥ इदमएतइत्एतौस्तो
रेफादौथकारादौचप्राग्दीशीयेपरे । अस्मिन्कालेएतर्हि ।
कालेकिं । इहदेशे । अधुना ५ ३ १७ ॥ इदमोनि
पातोयम् ॥ दानीञ्च ५ ३ १८ ॥ इदमोदानींप्रत्ययः
काले । इदानीम् ॥ तदोदाच ५ ३ १९ ॥ तदा । त
दानीम् ॥ अनद्यतनेर्हिलन्यतरस्याम् ५ ३ २० ॥ क
र्हि । कदा । यर्हि । यदा । तर्हि । तदा ॥ एतदः ५
३ ४ ॥ एतइत्एतौस्तोरेफादौथकारादौचप्राग्दिशीये ।
एतस्मिंकालेएतर्हि ॥ सद्यःपरुत्परार्यैषमःपरेद्यव्यद्यपू
र्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः
५ ३ २२ ॥ एतेनिपात्यन्ते ॥ द्युश्चोभयाद्वक्तव्यः ॥ उ
भयद्युः ॥ प्रकारवचनेथाल् ५ ३ २३ ॥ प्रकारवृत्ति
भ्यःकिमादिभ्यस्थाल् ॥ तेनप्रकारेणतथा । यथा ॥ इद
मस्थमुः ५ ३ २४ ॥ थालोपवादः । एतदोपिवाच्यः ।
अनेनएतेनवाप्रकारेणइत्थम् ॥ किमश्च । ५ ३ २५ ॥ केन
प्रकारेणकथम् ॥ इतिप्राग्दिशीयाः ॥ १२ ॥ दिक्शा
ब्देभ्यःसप्तमीपञ्चमीप्रथमाभ्योदिग्देशकालेष्वस्तातिः ५
३ २७ ॥ सप्तम्याद्यन्तेभ्योदिशिरूढेभ्योदिग्देशकाल
वृत्तिभ्यःस्वार्थेस्तातिः ॥ पूर्वाधरावराणामसिपुरधव
श्चैषाम् ५ ३ ३९ ॥ एभ्योस्तात्यर्थेसिस्तद्योगेचैषांपु

रुअधअवइत्यादेशाःस्युः ॥ अस्तातिच ५ ३ ४० ॥ पूर्वादीनांपुरादयःस्युः । पूर्वस्यां । पूर्वस्याः । पूर्वावा दिक्पुरःपुरस्तात् । अधः । अधस्तात् । अवः । विभाषा वरस्य ५ ३ ४१ ॥ अस्तातौअवास्यात् । अवस्तात् । अवरस्तात् । एवंदेशेकालेच । दिशिरूढेभ्यःकिम् । ऐंन्द्र्यांवसति । सप्तम्याद्यन्तेभ्यःकिम् । पूर्वंग्रामंगतः ॥ दिगादिवृत्तिभ्यःकिम् ॥ पूर्वस्मिन्गुरौवसति ॥ अस्तातिचेतिज्ञापकादसिरस्तातिंनबाधते ॥ दक्षिणोत्तराभ्यामतसुच् ५ ३ २८ ॥ अस्तातेरपवादः ॥ दक्षिणतः ॥ उत्तरतः ॥ विभाषापरावराभ्याम् ५ ३ २९ ॥ परतः । परस्तात् । अवरतः । अवरस्तात् ॥ अंचेर्लुक् ५ ३ ३० ॥ अंचत्यंतादिक्शब्दादस्तातेर्लुक्स्यात् । प्राक् । उदक् ॥ उपर्युपरिष्टात् ५ ३ ३१ ॥ निपातावेतौ ॥ पश्चात् ५ ३ ३२ ॥ तथा ॥ उत्तराधरदक्षिणादातिः ५ ३ ३४ ॥ उत्तरात् । अधरात् । दक्षिणात् ॥ एनवन्यतरस्यामदूरेपंचम्याः ५ ३ ३५ ॥ उत्तरादिभ्यएनवास्यादवध्यवधिमतोःसामीप्ये पञ्चम्यंतात्तुन । उत्तरेण । अधरेण । दक्षिणेन । पक्षेये धास्त्वंप्रत्ययाः । इहकेचिद्दिक्शब्दमात्रादेनपमाहुः । पूर्वेणग्रामम् ॥ दक्षिणादाच् ५ ३ ३६ ॥ अस्तातेर्विषये दक्षिणावसति । अपंचम्याइत्येव । दक्षिणादागतः ॥ आहिचदूरे ५ ३ ३७ ॥ चादाच् । दक्षिणाहि । दक्षिणा ॥ उत्तराच्च ५ ३ ३८ ॥ उत्तराहि । उत्तरा ॥ संख्यायाविधार्थेधा ५ ३ ४२ ॥ क्रियाप्रकारेवर्तमानात् संख्याशब्दात्स्वार्थेधास्यात् । चतुर्धा । एकाद्धोध्यमुजन्यतरस्या

म् ५ ३ ४४ ॥ ऐकध्यं । एकधा ॥ द्वित्र्योश्चधमुञ् ५ ३ ४५ ॥ आभ्यांधाइत्यस्यधमुञ्वा । द्वैधम् । द्विधा । त्रैधम् । त्रिधा ॥ एधाच्च ५ ३ ४६ ॥ द्वेधा । त्रेधा ॥ याप्येपाशप् ५ ३ ४७ ॥ कुत्सितोभिषग्भिषक्पाशः ॥ तीयादीकक्स्वार्थेवावाच्यः । द्वैतीयीकः । द्वितीयः । तार्तीयिकः तृतीयः । नविद्यायाः । द्वितीयाविद्येत्येव ॥ एकादाकिनिच्चासहाये ५ ३ ५२ ॥ चात्कन्लुकौ । एकः । एकाकी । एककः ॥ भूतपूर्वेचरट् ५ ३ ५३ ॥ आढ्यो भूतपूर्वआढ्यचरः ॥ षष्ठ्यारूप्यच ५ ३ ५४ ॥ षष्ठ्यंतात् भूतपूर्वेरूप्यःस्याच्चरट्च । कृष्णस्यभूतपूर्वोगौः कृष्णरूप्यः कृष्णचरः ॥ अतिशायनेतमबिष्ठनौ ५ ३ ५५ ॥ अतिशयविशिष्टार्थेएतौस्तः । अयमेषामतिशयेनाढ्यआढ्यतमः । लघुतमोलघिष्ठः ॥ तिङश्च ५ ३ ५६ ॥ तिङंतादतिशयेद्योत्येतमप्स्यात् ॥ तरप्तमपौघः १ १ २२ ॥ किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ५ ४ ११ ॥ किमएदंतात्तिङोऽव्ययाच्चयोघस्तदन्तादामुः स्यान्नतुद्रव्यप्रकर्षे किंतमाम् । प्राह्णेतमाम् । प्रगेतमाम् । पचतितमाम् । उच्चैस्तमाम् । द्रव्यप्रकर्षेतुउच्चैस्तमस्तरुः ॥ द्विवचनविभज्योपपदेतरबीयसुनौ ५ ३ ५७ ॥ द्वयोरेकस्यातिशये विभक्तव्येचोपपदेसुप्तिङंतादेतौस्तः । पूर्वयोरपवादः । अयमनयोरातिशयेनलघुर्लघुतरोलघीयान् । उदीच्याः प्राच्येभ्यःपटवः पटुतराः । पटीयांसः ॥ अजादीगुणवचनादेव ५ ३ ५८ ॥ इष्ठन्नीयसुनौ । नेह । पाचकतरः ॥ पाचकतमः ॥ प्रशस्यस्यश्रः ५ ३ ६७ ॥ इष्ठेयसोःपरतः

प्रकृत्यैकाच् ६ ४ ६३ ॥ इष्टादिष्वेकाच्प्रकृत्यास्यात् । श्रेष्ठः श्रेयान् ॥ ज्यच ५ ३ ६१ ॥ प्रशस्यस्यज्यादेशइष्ठेयसोः । ज्येष्ठः ॥ ज्यादादीयसः ६ ४ १६० ॥ आदेःपरस्य । ज्यायान् ॥ वृद्धस्यच ५ ३ ६२ ॥ ज्यादेशश्चजाद्योः । ज्येष्ठः । ज्यायान् ॥ अंतिकबाढयोर्नेदसाधौ ५ ३ ६३ अजाद्योरिष्ठेयसोः । नेदिष्ठः । नेदीयान् । साधिष्ठः । साधियान् ॥ स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणांयणादिपरम्पूर्वस्यचगुणः ६ ४ १५६ ॥ एषांयणादिपरंलुप्यतेपूर्वस्यचगुणइष्ठादिषु ॥ स्थविष्ठः ॥ दविष्ठः । यविष्ठः । ह्रसिष्ठः । क्षेपिष्ठः । क्षोदिष्ठः । एवमीयसुन् ॥ ह्रस्वक्षिप्रक्षुद्राणांपृथ्वादित्वाद्ध्रसिमा । क्षेपिमा ॥ क्षोदिमा ॥ प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणांप्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः ६ ४ १५७ ॥ प्रियादीनांप्रादयःस्युरिष्ठादिषु । प्रेष्ठः । स्थेष्ठः । स्फेष्ठः । वरिष्ठः । बंहिष्ठः । गरिष्ठः । वर्षिष्ठः । त्रपिष्ठः । द्राघिष्ठः । वृंदिष्ठः । एवमीयसुन् । प्रियोरुबहुलगुरुदीर्घाणांपृथ्वादित्वात्प्रेमेत्यादि ॥ बहोर्लोपोभूचबहोः ६ ४ १५८ ॥ बहोःपरयोरिमेयसोर्लोपःस्याद्बहोश्चभूरादेशः । भूमा । भूयान् ॥ इष्ठस्ययिट्च ६ ४ १५९ ॥ बहोःपरस्यइष्ठस्यलोपोयिडागमश्च । भूयिष्ठः ॥ विन्मतोर्लुक् ५ ३ ६५ ॥ इष्ठेयसोः परतः । अतिशयेनस्रग्वीस्रजिष्ठः । स्रजीयान् ॥ अतिशयेनत्वग्वान् त्वचिष्ठः । त्वचीयान् ॥ प्रशंसायांरूपप् ५ ३ ६६ ॥ सुबंतात्तिङंताच्च । प्रशस्तःपटुःपटुरूपः । पचतिरूपम् ॥

ईषदसमाप्तौकल्पब्देश्यदेशीयरः ५ ३ ६७ ॥ ईषदूनो विद्वान् विद्वत्कल्पः । विद्वद्देश्यः । विद्वद्देशीयः । पचतिकल्पं ॥ विभाषासुपोबहुच्पुरस्तात्तु ५ ३ ६८ ॥ ईषदूनःपटुर्बहुपटुः । पटुकल्पः । सुपः किम् ॥ यजतिकल्पम् ॥ प्रागिवात्कः ५ ३ ७० ॥ इवेप्रतिकृतावित्यतः प्राक्काधिकारः ॥ अव्ययसर्वनाम्नामकच्प्राक्टेः ५ ३ ७१ ॥ कापवादः ॥ तिङश्चेत्यनुवर्त्तते ॥ कस्यचदः ५ ३ ७२ ॥ कांताव्ययस्यदादेशोऽकच् ॥ अज्ञाते ५ ३ ७३ कस्यायमश्वोऽश्वकः ॥ उच्चकैः । नीचकैः ॥ सर्वके । पचतकि । धकित् ॥ कुत्सिते ५ ३ ७४ ॥ कुत्सितोऽश्वोऽश्वकः ॥ अल्पे ५ ३ ८५ ॥ अल्पन्तैलम् तैलकम् ॥ ह्रस्वोवृक्षोवृक्षकः ॥ अस्मिन्प्रकरणेहलादौप्रत्ययेद्वितीयादचःपरस्यलोपोवावाच्यः ॥ देवदत्तकः । देवकः ॥ लोपःपूर्वपदस्यच ॥ दत्तकः ॥ विनापिप्रत्ययंपूर्वोत्तरपदयोर्लोपोवावाच्यः ॥ सत्यभामा । भामा । सत्या ॥ कुटीशमीशुंडाभ्योरः ५ ३ ८८ ॥ ह्रस्वाकुटीकुटीरः ॥ शमीरः । शुंडारः ॥ कुत्वाडुपच् ५ ३ ८९ ॥ ह्रस्वाकुतूःकुतुपः । कुतूःकृत्तेःस्नेहपात्रंह्रस्वासाकुतुपःपुमान् ॥ कासूगोणीभ्यांष्टरच् ५ ३ ९० ॥ आयुधविशेषः कासूः । ह्रस्वासाकासूतरी । गोणीतरी ॥ वत्सोक्षाश्वर्षभेभ्यश्चतनुत्वे ५ ३ ९१ ॥ वत्सतरः । उक्षतरः । अश्वतरः । ऋषभतरः ॥ किंयत्तदोनिर्द्धारणद्वयोरेकस्यडतरच् ५ ३ ९२ ॥ अनयोःकतरोवैष्णवः । यतरः । ततरः ॥ वाबहूनांजातिपरिप्रश्नेडतमच् । ५ ३ ९३ ॥

जातिपरिप्रश्नइतिप्रत्याख्यातमाकरे । कतमोभवतांक
ठः । यतमः । ततमः । वाग्रहणमकजर्थम् ॥ एकाच्चप्रा
चाम् ५ ३ ९४ ॥ डतरच् डतमच्चस्यात् । अनयोरे
कतरोमैत्रः । एषामेकतमः ॥ इतिप्रागिवीयाः ॥ १३ ॥
इवेप्रतिकृतौ ५ ३ ९६ ॥ कन्स्यात् ॥ अश्वइवप्रतिकृ
तिरश्वकः ॥ शाखादिभ्योयः ५ ३ १०४ ॥ शाखेवशाख्यः ।
मुख्यः ॥ जघन्यः । अग्र्यः । शरण्यः ॥ कुशाग्राच्छः
५ ३ १०५ ॥ कुशाग्रीयः ॥ तत्प्रकृतवचनेमयट् ५ ४
२१ ॥ प्राचुर्येणप्रस्तुतंप्रकृतंतस्यवचनंप्रतिपादनम् । भा
वेऽधिकरणेचाल्युट् । आद्येप्रकृतमन्नंअन्नमयम् । अ
पूपमयम् । द्वितीयेअन्नयोयज्ञः । अपूपमयंपर्व ॥ सं
ख्यायाःक्रियाभ्यावृत्तिगणनेकृत्वसुच् ५ ४ १७ अभ्यावृत्ति
र्जन्म । क्रियाजन्मगणनवृत्तेःसंख्यायाःस्वार्थेकृत्वसुच् ।
पंचकृत्वोभुंक्ते । संख्यायाःकिं ॥ भूरिवारान्भुंक्ते ॥ द्वि
त्रिचतुर्भ्यःसुच् ५ ४ १८ ॥ कृत्वसुचोऽपवादः द्विर्भुंक्ते ॥ त्रि
र्भुङ्क्ते रात्रसस्य । चतुर्भुङ्क्ते ॥ एकस्यसकृच्च ५ ४ १९ ॥
सकृदादेशःचात्सुच् ॥ सकृद्भुंक्ते ॥ देवतान्तात्तादर्थ्ये
यत् ५ ४ २४ ॥ तदर्थएवतादर्थ्यम् । अतएवस्वार्थेष्यञ् ।
अग्निदेवतायैइदमग्निदेवत्यम् पितृदेवत्यम् ॥ पादा
र्घाभ्यांच ५ ४ २५ ॥ पादार्थमुदकंपाद्यं । अर्घ्यम् ॥ अ
थेर्ञ्यः ५ ४ २६ ॥ अतिथयेइदमातिथ्यं । नवस्यनूआदे
शस्त्नतनप्खाश्चवक्तव्याः ॥ स्वार्थे । नूत्नं ॥ नूतनम् ॥
नवीनम् ॥ भागरूपनामभ्योधेयः ॥ भागधेयम् । रूप
धेयम् । नामधेयम् । आग्नीध्रसाधारणादञ् ॥ आग्नी

घ्नं । साधारणम् ॥ देवात्तल् ५ ४ २७ ॥ देवएवदेवता ॥ अवेःकः ५ ४ २८ ॥ अविरेवअविकः ॥ यावादिभ्यःकन् ५ ४ २९ ॥ यावएवयावकः । मणिकः । सर्वप्रातिपदिकेभ्यः स्वार्थेकन् । वहुतरकं ॥ मृदस्तिकन् ५ ४ ३९ मृदेवमृत्तिका सस्नौप्रशंसायां ५ ४ ४० ॥ रूपपोऽपवादः । प्रशस्तामृन्मृत्सा । मृत्स्ना ॥ प्रज्ञादिभ्यश्च ५ ४ ३८ ॥ अण्स्यात् ॥ प्रज्ञएव प्राज्ञः । दैवतः । वांधवः ॥ पूगाञ्ञ्योऽग्रामणीपूर्वात् ॥ ५ ३ ११२ स्वार्थे । नानाजातीयाअनियतवृत्तयोर्थकामप्रधानाः संघाःपूगाः । लौहितध्वज्यः ॥ ञ्यादयस्तद्राजाः ५ ३ ११९ तद्राजस्येतिलुक् । लोहितध्वजाः ॥ व्रातेतिञ्यञ् । कापोतपाक्यः । कपोतपाकाः ॥ कौंजायनाइत्यादि ॥ वहूल्पार्थाच्छस्कारकादन्यतरस्याम् ५ ४ ४२ ॥ वहूनिददातिवहुशः ॥ अल्पशः ॥ वहूल्पार्थान्मंगलामङ्गलवचनम् नेह । वहुददात्यनिष्टेषु ॥ अल्पंददात्याभ्युदयिकेषु ॥ संख्यैकवचनाच्चवीप्सायां ५ ४ ४३ ॥ द्वौद्वौददातिद्विशः ॥ माषंमाषंददातिमाषशः ॥ परिमाणशब्दावृत्तावेकार्था एव ॥ संख्यैकवचनात्किं ॥ घटंघटंददाति ॥ वीप्सायां किं ॥ द्वौददाति ॥ कारकादित्येव ॥ द्वयोर्द्वयोःस्वामी ॥ प्रतियोगेपंचम्यास्तसिः ५ ४ ४४ ॥ प्रतिनाकर्मप्रवचनीयेनयोगेयापंचमीविहितातदन्तात्तसिः ॥ प्रद्युम्नः कृष्णतःप्रति ॥ आद्यादिभ्यस्तसेरुपसंख्यानम् ॥ आदौआदितः ॥ मध्यतः ॥ पृष्टतः ॥ पार्श्वतः ॥ आकृतिगणोयम् ॥ स्वरेणस्वरतः ॥ वर्णतः । कृभ्वस्तियोगेसंपद्यकर्त्तरिच्विः ५ ४ ५० ॥ अभूततद्भावइतिवक्तव्यम् ॥ विकारा

त्मतांप्राप्नुवत्यांप्रकृतौवर्त्तमानाद्विकारशब्दात्स्वार्थेच्वि र्वास्यात्करोत्यादिभिर्योगे ॥ अस्यच्वौ ७ ४ ३२ ॥ ईत् । अकृष्णःकृष्णः संपद्यतेतंकरोतिकृष्णीकरोति । ब्रह्मीभवति । गंगीस्यात् ॥ अव्ययस्यच्वावीत्वन्नेतिवाच्यम् ॥ दोषाभूतमहः । दिवाभूतारात्रिः ॥ क्यच्व्योश्च ६ ४ १५२ ॥ हलःपरस्यापत्ययस्यलोपःक्येच्वौचपरतः ॥ गार्गीभवति ॥ च्वौच ७ ४ २६ ॥ दीर्घः । शुचीभवति ॥ पटूस्यात् ॥ अरुर्मनश्चक्षुश्चेतोरहोरजसांलोपश्च ५ ४ ५१ ॥ चाच्च्विः । अरूकरोति । उन्मनीकरोति । उच्चक्षूकरोति । विचेतीकरोति । विरहीकरोति । विरजीकरोति ॥ विभाषासातिकार्त्स्न्ये ५ ४ ५२ ॥ च्विविषयेसातिर्वास्यात्साकल्ये । सात्यदाद्योः । कृत्स्नंशस्त्रमग्निःसंपद्यते ॥ अग्निसाद्भवति । अग्नीभवति ॥ कार्त्स्न्येकिं ॥ एकदेशेनशुक्लीभवतिपटः ॥ अभिविधौसंपदाच ५ ४ ५३ ॥ संपदाकृभ्वस्तिभिश्चयोगेसातिर्वाव्याप्तौ ॥ पक्षेकृभ्वस्तियोगेच्विःसम्पदातुवाक्यमेव ॥ अग्निसात्संपद्यतेअग्निसाद्भवतिशस्त्रम् ॥ अग्नीभवति ॥ जलसात्संपद्यतेजलीभवतिलवणम् ॥ तदधीनवचने ५ ४ ५४ ॥ सातिःकृभ्वस्तिभिःसंपदाचयोगे । राजसात्करोति ॥ राजाधीनमित्यर्थः ॥ देयेत्राच ५ ४ ५५ ॥ तदधीनेदेयेत्रास्यात्सातिश्चकृादियोगे । विप्राधीनंदेयंकरोतिविप्रत्राकरोति । विप्रत्रासंपद्यते । पक्षेविप्रसात्करोति ॥ देयेकिं ॥ राजसाद्भवतिराष्ट्रं ॥ देवमनुष्यपुरुषपुरुमर्त्येभ्योद्वितीयासप्तम्योर्बहुलम् ५ ४

५६ ॥ एभ्योद्वितीयान्तेभ्यःसप्तम्यंतेभ्यश्चत्रास्यात् ॥ देवत्रावन्दे । रमेया । बहुलोक्तेरन्यत्रापि । बहुत्राजीवतोमनः ॥ अव्यक्तानुकरणादृद्यजवरार्द्धादनितौडाच् ॥ ५ ४ ५७ ॥ द्व्यजवरंन्यूनंनतुततोन्यूनम् अनेकाजितियावत् तादृशमर्द्धंयस्यतस्माड्डाच्कृभ्वस्तिभिर्योगे । डाचिबहुलंद्वेभवतः ॥ डाचिविवक्षितेद्वित्वम् ॥ नित्यमाम्रेडितेडाचीतिवक्तव्यम् ॥ डाच्परंयदाम्रेडितन्तस्मिन्परेपूर्वपरयोर्वर्णयोःपररूपंस्यात् ॥ इतितपयोःपः ॥ पटपटाकरोति ॥ अव्यक्तानुकरणात्किम् । दृषत्करोति । द्व्यजवरार्द्धात्किं ॥ श्रत्करोति ॥ अवरेतिकिं । खरटखरटाकरोति । अनितौकिं ॥ पटितिकरोति ॥ कृञोद्वितीयतृतीयशंबबीजात्कृषौ ५ ४ ५८ ॥ द्वितीयादिभ्योडाच्कृञ्योगेएव । बहुलोक्तेरव्यक्तानुकरणादन्यस्यडाचिनद्वित्वम् ॥ द्वितीयंतृतीयंकर्षणंकरोतिद्वितीयाकरोति । तृतीयाकरोति । शंबाकरोति । बीजाकरोति ॥ संख्यायाश्चगुणांतायाः ५ ४ ५९ ॥ द्विगुणाकरोतिक्षेत्रं ॥ समयाच्चयापनायाम् ५ ४ ६० ॥ कृषावितिनिवृत्तं । समयाकरोति । कालंयापयतीत्यर्थः ॥ सपत्रनिष्पत्रादतिव्यथने ५ ४ ६१ ॥ सपत्राकरोतिमृगं । सपुंखशरप्रवेशनेनसपत्रंकरोतीत्यर्थः । निष्पत्राकरोति । सपुंखस्यशरस्यापरपार्श्वेनिर्गमनान्निष्पत्रंकरोतीत्यर्थः ॥ अतिव्यथनेकिं ॥ सपत्रंनिष्पत्रंवाकरोतिभूतलम् ॥ निष्कुलान्निष्कोषणे ५ ४ ६२ ॥ निष्कुलाकरोतिदाडिमं । निर्गतंकुलमंतरवयवानांसमूहोयस्मादितिबहुव्रीहेर्डाच् ।

सुखप्रियादानुलोम्ये ५ ४ ६३ ॥ सुखाकरोति । प्रि याकरोतिगुरुम् । अनुकूलाचरणेनानंदयतीत्यर्थः ॥ दुःखात्प्रातिलोम्ये ५ ४ ६४ ॥ दुःखाकरोतिस्वामिन म् । पीडयतीत्यर्थः ॥ शूलात्पाके ५ ४ ६५ ॥ शूला करोति । शूलेनपचतीत्यर्थः ॥ सत्यादशपथे ५ ४ ६६ सत्याकरोतिभांडंवणिक् । क्रेतव्यमितितथ्यंकरोतीत्य र्थः । शपथेतुसत्यंकरोतिविप्रः ॥ मद्रात्परिवापणे ५ ४ ६७ ॥ मद्रशब्दोमंगलार्थः ॥ परिवापणंमुंडनं । मद्रा करोतिकुमारम् ॥ मंगल्यमुंडनेनसंस्करोतीत्यर्थः ॥ भ द्राच्चेतिवक्तव्यम् ॥ भद्राकरोति । अर्थःप्राग्वत् ॥ परि वापणेकिम् ॥ मद्रंकरोतिभद्रंकरोति ॥ इतितद्धितप्र क्रिया ॥ १४ ॥ सर्वस्यद्वे ८ १ १ ॥ इत्यधिकृत्य ॥ प रेर्वर्जने ८ १ ५ ॥ परिपरिवंगेभ्योवृष्टोदेवः ॥ उपर्य ध्यधसःसामीप्ये ८ १ ७ ॥ उपर्युपरिग्रामम् ॥ ग्राम स्योपरिष्टात्समीपदेशेइत्यर्थः ॥ अध्यधिसुखं । सुखस्यो परिष्टात्समीपकालेदुःखमित्यर्थः ॥ अधोऽधोलोकं । लो कस्याधस्तात्समीपदेशेइत्यर्थः ॥ वाक्यादेरामंत्रितस्या सूयासंमतिकोपकुत्सनभर्त्सनेषु ८ १ ८ ॥ सुंदरसुंदर वृथातेसौन्दर्यम् । देवदेववंद्योसि । दुर्विनीतदुर्विनीत इदानींज्ञास्यसि । धानुष्कधानुष्कवृथातेधनुः । चोरचोर घातयिष्यामित्वाम् ॥ एकंबहुव्रीहिवत् ८ १ ९ ॥ द्वि रुक्तएकशब्दोबहुव्रीहिवत् । तेनसुप्लोपपुंवद्भावौ । एं केकमक्षरम् । इहद्वयोरपिसुपोर्लुकिसतिबहुव्रीहिवद्भा वादेवप्रातिपदिकत्वात्समुदायात्सुपतच्चएकवचनमेव ।

एकैकयाहुत्या ॥ आबाधेच ८ १ १० ॥ पीडायांद्वेस्तो बहुव्रीहिवच्च । गतगतः । गतगता ॥ प्रकारेगुणवच नस्य ८ १ १२ ॥ सादृश्येद्योत्येगुणवचनस्यद्वेस्तस्तच्च कर्मधारयवत् । पटुपट्वी ॥ पटुपटुः । पटुसदृशईषत्प टुरितियावत् ॥ आनुपूर्व्येद्वेवाच्ये । मूलेमूलेस्थूलः । सं भ्रमेणप्रवृत्तौयथेष्टमनेकधाप्रयोगोन्यायसिद्धः ॥ सर्पः २ । वुध्यस्व २ । सर्पः ३ । वुध्यस्व ३ ॥ कर्मव्यति हारेसर्वनाम्नोद्वेवाच्येसमासवच्चवहुलम् ॥ वहुलग्रहणा दन्यपरयोर्नसमासवत् । इतरशब्दस्यतुनित्यम् ॥ अस मासवद्भावेपूर्वपदस्थस्यसुपःसुर्वक्तव्यः ॥ अन्योन्यंविप्रा नमन्ति । अन्योन्यौ । अन्योन्येनकृतम् ॥ अन्योन्यस्मै दत्तमित्यादि ॥ स्त्रीनपुंसकयोरुत्तरपदस्थायाविभक्ते रांभावोवाच्यः । अन्योन्यांअन्योन्यंपरस्पराम् ॥ पर स्परं ॥ इतरेतरां । इतरेतरंवाइमेब्राह्मण्यौकुलेवाभो जयतः । दलद्वयेटावभावःक्लीवेचाद्विरहःस्वमोः । समा सेसोरलुक्चेतिसिद्धंवाहुलकात्त्रयं ॥ अन्योन्यमित्यादौ दलद्वयेटाप् ॥ अडुडतरेत्यदड्चप्राप्तः ॥ अन्योन्यसंस क्तमहस्त्रियामम् ॥ अन्योन्याश्रयः ॥ परस्पराक्षिसादृ श्यम् । अदृष्टपरस्परैरित्यादौसोर्लुक्चप्राप्तः ॥ सर्वंवा हुलकात्समाधेयम् ॥ इतिद्विरुक्तप्रक्रिया ॥ १५ ॥

स्त्रियाम् ४ १ ३ ॥ अधिकारोयंसमर्थानामितियाव त् ॥ अजाद्यतष्टाप् ४ १ ४ ॥ अजादीनामकारांतस्य चवाच्यंयत्स्त्रीत्वंतत्रद्योत्येटाप्स्यात् । अजा । अजा दिभिःस्त्रीत्वस्यविशेषणान्नेह । पञ्चाजी । अत्रहिस

मासार्थसमाहारनिष्ठंस्त्रीत्वं । अतः । खट्वा । अजा एडका । अश्वा । चटका । मूषिका । वाला वत्सा । होडा मंदा । विलाता । संभस्त्राजिनशणपिण्डेभ्यःफलात् । संफला । भस्त्रफलइत्यादि । सदच्काण्डप्रान्तशतैकेभ्यःपुष्पात् ॥ सत्पुष्पा । प्राक्पुष्पा प्रत्यक्पुष्पा । शूद्राचामहत्पूर्वाजातिः ॥ पुंयोगेतुशूद्री । अमहत्पूर्वाकिं । महाशूद्री । क्रुंचा । उष्णिहा । देवविशा । ज्येष्ठाकनिष्ठामध्यमेतिपुंयोगेपि । कोकिलाजातावपि । मूलान्नञः । अमूला ॥ उगितश्च ४ १ ६ ॥ ङीप् । भवन्ती । पचंती । वनोरच ४ १ ७ ॥ वन्नन्तान्नदन्ताच्चङीप्स्याद्रश्चान्तादेशः । सुत्वानमतिक्रांताअतिसुत्वरी । धातिधीवरी । शर्वरी । वनोनहशइतिवक्तव्यम् ॥ अवावाब्राह्मणी । राजयुद्धा । वहुब्रीहौवा । वहुधीवा । वहुधीवरी ॥ पादोन्यतरस्याम् ४ १ ८ ॥ द्विपदी । द्विपात् ॥ टावृचि ४ १ ९ ॥ द्विपदाऋक् । एकपदा ॥ मनः ४ १ ११ ॥ मन्नन्तान्नङीप् । सीमानौ ॥ अनोवहुब्रीहेः ४ १ १२ ॥ अन्नन्ताद्वहुब्रीहेर्नङीप् । वहुयज्वा । वहुयज्वानौ ॥ डावुभाभ्यामन्यतरस्याम् ४ १ १३ ॥ सूत्रद्वयोपात्ताभ्यांडाव्वा । सीमा । सीमे । सीमानौ । दामानौ । दामे ॥ अनउपधालोपिनोन्यतरस्याम् ४ १ २८ ॥ अन्नंताद्वहुब्रीहेरुपधालोपिनोवाङीप् । पक्षेडावूनिषेधौ । वहुराज्ञी । वहुराज्ञ्यौ । वहुराजा । वहुराजानौ ॥ प्रत्ययस्थात्कात्पूर्वस्यातइदाप्यसुपः ७ ३ ४४ प्रत्ययस्थात्ककारात्पूर्वस्याकारस्येकारःस्यादापिपरेस–

आप्सुपःपरोनचेत् । सर्विका । कारिका । अतः किं । नौका । प्रत्ययस्थात्किं । शक्नोतीतिशका । असुपः किं । वहुपरिव्राजकानगरी । मामकनरकयोरुपसंख्यानम् ॥ मामिका ॥ नरिका । त्यक्त्यपोश्च । दाक्षिणात्यिका । इहत्यिका ॥ नयासयोः ७ ३ ४५ ॥ यत्तदोरस्येन्न ॥ यका सका । यकां । तकां । त्यकनश्चनिषेधः । उपत्यका अधित्यका आशिषिवुनश्चन ॥ जीवका । भवका । उत्तरपदलोपेन । देवदत्तिका । देवका । क्षिपकादीनांच ॥ क्षिपका ध्रुवका । चटका । कन्यका ॥ तारकाज्योतिषि । वर्णकातांतवे । वर्त्तकाशकुनौप्राचाम् । अष्टकापितृदैवत्ये । सूतकापुत्रिकावृन्दारकाणांवेतिवक्तव्यं । एषांवा अकारोभवतीत्यर्थः । सूतिका । सूतकेत्यादि ॥ उदीचामातःस्थानेयकपूर्वायाः ७ ३ ४६ ॥ यकपूर्वस्यस्त्रीप्रत्ययस्यातःस्थानेयोत्तस्यकात्पूर्वस्येद्वापिपरे । केणइतिह्रस्वः । आर्यका । आर्यिका । चटकका । चटकिका । आतः किं । सांकाश्येभवा सांकाश्यिका । यकेतिकिं । अश्विका । स्त्रीप्रत्ययः किं । शुभंयिका ॥ अभाषितपुंस्काच्च ७ ३ ४८ ॥ एतस्माद्विहितस्यातःस्थानेतइद्वा ॥ गंगका । गंगिका ॥ आदाचार्याणाम् ७ ३ ४९ ॥ पूर्वविषये । गंगाका ॥ अनुपसर्जनात् ७ १ १४ ॥ अधिकारोयंयूनस्तिरित्यभिव्याप्य ॥ टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ४ १ १५ ॥ अनुपसर्जनंयाहृदादितदन्तंयददन्ततततोङीप् । कुरुचरी । उपसर्जनत्वान्नेह । वहुकुरुचरा ॥ नदट् ॥ नदी । देवट् ।

देवी । सौपर्णेयी । ऐंद्री । औत्सी । ऊरुद्वयसी । ऊरुदघ्नी । ऊरुमात्री । पंचतयी । आक्षिकी । लावणिकी यादृशी ॥ इत्वरी । नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम् । स्त्रैणी । पौंस्नी । शाक्तीकी । आढ्यंकरणी । तरुणी ॥ तलुनी ॥ यञश्च ४ १ २६ यञन्तात्प्रातिपदिकाद्ङीप् । अकारलोपेकृते ॥ हलस्तद्धितस्य ६ ४ १५० हलउत्तरस्योपधाभूततद्धितयस्यलोपईति । गार्गी ॥ प्राचांष्फतद्धितः ३ १ १७ ॥ यञन्तात्ष्फोवा ॥ षःप्रत्ययस्य १ ३ ६ ॥ प्रत्ययादिःषइत्स्यात् । आयनेयीनी त्यायनादेशः । षित्वसामर्थ्यात्षिद्गौरेतिङीष् । गार्ग्यायणी ॥ वयसिप्रथमे ४ १ २७ ॥ प्रथमवयोवाचिनोऽदन्तान्ङीप् । कुमारी । वयस्यचरमइतिवाच्यम् । वधूटी । चिरंटी ॥ द्विगोः ४ १ २१ ॥ अदन्ताद्द्विगोर्ङीप् । त्रिलोकी । अजादित्वात्त्रिफला । त्र्यनीकासेना ॥ अपरिमाणविस्ताचितकंबल्येभ्योनतद्धितलुकि ४ १ २२ ॥ अपरिमाणान्ताद्बिस्ताद्यन्ताच्चद्विगोर्नङीप्तद्धितलुकि । पञ्चभिरश्वैःक्रीतापञ्चाश्वा । आर्हीयष्ठक् । अध्यर्द्धेति लुक् । द्वौविस्तौपचति । द्विविस्ता । द्व्याचिता । द्विकंबल्या । परिमाणात्तुद्व्याढकी । तद्धितलुकिकिं ॥ समाहारेपंचाश्वी ॥ कांडांतात्क्षेत्रे ४ १ २३ ॥ क्षेत्रेयःकाडांतोद्विगुस्ततोनङीप्तद्धितलुकि । द्वेकाण्डेप्रमाणमस्याः द्विकांडाक्षेत्रभक्तिः ॥ मात्रचःप्रमाणेलोद्विगोर्नित्यमितिलुक् । क्षेत्रेकिं । द्विकाण्डीरज्जुः । पुरुषात्प्रमाणेऽन्यतरस्याम् ४ १ २४ ॥ प्रमाणेयःपुरुषस्तदन्ताद्द्विगो

ङीवृत्रास्यात्ताद्धितलुकि । द्वौपुरुषौप्रमाणमस्याद्विपुरुषी द्विपुरुषावा । परिखा ॥ ऊधसोऽनङ् ५ ४ १३१ ॥ ऊधोन्तस्यवहुव्रीहेरनङ्स्त्रियाम् ॥ वहुव्रीहेरूधसोङीष् ४ १ २५ ॥ ऊधोन्ताद्वहुव्रीहेः । कुंडोध्नी । स्त्रियांकिं । कुंडोधोधैनुकं ॥ दामहायनान्ताच्च । ४ १ २६ ॥ संख्यादेर्वहुव्रीहेर्दामन्ताद्धायनान्ताच्चङीप् । द्विदाम्नी । द्विहायनीवाला । त्रिचतुर्भ्यांहायनस्यणत्वंवाच्यम् ॥ वयोवाचकहायनस्यङीपूणत्वंचेष्यते । त्रिहायणी । चतुर्हायणी । वयसोन्यत्र । त्रिहायना । चतुर्हायनाशाला ॥ अन्तर्वत्यतिवतोर्नुक् ४ १ ३२० ॥ नांतरवान्ङीप् । अंतर्वत्नी । पतिवत्नी । गर्भभर्तृसंयोगएवेष्यते । अन्यत्रतु । अन्तरस्त्यस्यांशालायांघटः । पतिमतिपृथिवी ॥ पत्युर्नोयज्ञसंयोगे ४ १ ३३ ॥ वसिष्टस्यपत्नी ॥ विभाषासपूर्वस्य ४ १ ३४ ॥ पतिशब्दांतस्यनोवा । गृहपत्नी । गृहपतिः । दृढपत्नी । दृढपतिः ॥ नित्यंसपत्न्यादिषु ४ १ ३५ सपत्नी । एकपत्नी । वीरपत्नी ॥ पूतक्रतोरैच ४ १ ३६ ॥ पूतक्रतोःस्त्री । पूतक्रतायी ॥ वृषाकप्यग्निकुसितकुसिदानामुदात्तः ४ १ ३७ ॥ एषामुदात्तऐआदेशोङीपूच । वृषाकपेःस्त्री । वृषाकपायी । अग्नायी । कुसितायी । कुसिदायी ॥ मनोरौवा ४ १ ३८ मनुशब्दस्यौकारादेशःस्यादुदात्तैकारश्चवाङीपूच । मनयी । मनावीमनुः ॥ वर्णादनुदात्तात्तोपधात्तोनः ४ १ ३९ वर्णवाचीयोनुदात्तान्तस्तोपधस्तदन्ताद्वाङीप्नस्यनः ॥ एता । एनी । रोहिता । रोहिणी । षिद्गौरादिभ्यश्च ४

१ ४१ ॥ ङीप् । नर्त्तकी । गौरी । अनडुही । अनड्वाही ।
पिप्पल्यादयश्च ॥ आकृतिगणोयम् ॥ मत्स्यस्यङ्याम् ॥
यलोपः । मत्सी ॥ जानपदकुंडगोणस्थलभाजनागका
लनीलकुशकामुककवराद्वृत्यमत्रावपनाकृत्रिमाश्राणा
स्थौल्यवर्णानाच्छादनाऽयोविकारमैथुनेच्छाकेशवेशेषु ४
१ ४२ ॥ एकादशभ्यःक्रमाद्वृत्यादिष्वर्थेषुङीप् । जान
पदी । वृत्तिश्चेत् । अन्याजानपदा । अजन्तरत्वानुङि
आद्युदात्तः । कुंडी । अमत्रंचेत् । कुण्डान्या । गोणी
आवपनंचेत् । गोणान्या । स्थलीअकृत्रिमाचेत् ।
लान्या । भाजीश्राणाचेत् । भाजान्या । यवागूरु
श्राणाविलेपितरलाचसाइत्यमरः । नागी । स्थूलाचेत्
नागान्या । कालीवर्णश्चेत् कालान्या । नीली । अनाच्छा
दनंचेत् । नीलान्या । नीलारक्ताशाटीत्यर्थः । कुशी ॥
अयोविकारश्चेत् । कुशान्या । कामुकीमैथुनेच्छावती
चेत् । कामुकान्या । कवरी । केशानांसन्निवेशविशेष
श्चेत् । कवरान्या ॥ शोणात्प्राचाम् ४ १ ४३ ॥ शोणी ।
शोणा ॥ वोतोगुणवचनात् ४ १ ४४ ॥ उदन्ताद्गुण
वाचिनोवाङीप् । मृद्वी । मृदुः । उतःकिं । शितिः ।
गुणेतिकिम् । आखुः । खरुसंयोगोपधान्न । खरुः ।
पाण्डुः ॥ बह्वादिभ्यश्च ४ १ ४५ ॥ वाङीप् । बह्वी ।
बहुः । कृदिकारादक्तिनः ॥ रात्री । रात्रिः । सर्वतो
क्तिन्नर्थादित्येके । शकटी । शकटिः ॥ पुंयोगादाख्या
याम् ४ १ ४८ ॥ यापुमाख्यापुंयोगात्स्त्रीयांवर्ततेततो
ङीप् । गोपस्यस्त्रीगोपी । पालकान्तान्न । गोपालि

का । अश्वपालिका । सूर्य्याद्देवतायाञ्चाप् । सूर्यस्य स्त्रीदेवतासूर्य्या । देवतायाङ्किम् । सुरीकुन्तीमानुषी यम् ॥ इन्द्रवरुणभवसर्वरुद्रमृडहिमारण्ययवयवनमातु लाचार्य्याणामानुक् ४ १ ४९ ॥ ङीषूच । इन्द्राणी । हिमारण्ययोर्महत्वे । महद्धिमंहिमानी । यवाद्दोषे ॥ दुष्टोयवोयवानी ॥ यवनाल्लिप्याम् । यवनानांलिपि र्यवनानी । मातुलोपाध्याययोरानुग्वा । मातुलानी । मातुली । उपाध्यायानी । उपाध्यायी ॥ आचार्याद णत्वञ्च ॥ अचार्यानी ॥ अर्यक्षत्रियाभ्यांवास्वार्थे ॥ अर्याणी ॥ अर्या ॥ क्षत्रियाणी । क्षत्रिया । पुंयोगेतु । अर्यी । क्षत्रियी ॥ क्रीतात्करणपूर्वात् ४ १ ५० ॥ क्रीतांतादद॑तात्करणादेर्ङीष् । वस्त्रक्रीती । क्वचिन्न । घनक्रीता ॥ वहुव्रीहेश्चान्तोदात्तात् ४ १ ५२ ॥ क्तान्ता न्ङीष् ॥ ऊरुभिन्नी ॥ अस्वांगपूर्वपदाद्वा ४ १ ५३ ॥ पूर्वे णनित्येप्राप्तेविकल्पोयम् ॥ सुरापीति ॥ सुरापीता ॥ स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ४ १ ५४ ॥ असंयोगो पधमुपसर्जनंयत्स्वांगंतदंताद्वाङीष् । अतिकेशी । अ तिकेशा । चन्द्रमुखी ॥ चन्द्रमुखा । संयोगोपधात्तु । सुगुल्फा । अद्रवन्मूर्त्तिमत्स्वांगंप्राणिस्थमविकारजं ॥ अतत्स्थंतत्रदृष्टंचतेनचेत्तत्तथायुतं ॥ १ ॥ सुस्वेदा ॥ द्र वत्वात् ॥ सुज्ञाना ॥ अमूर्त्तत्वात् ॥ सुमुखाशाला । अ प्राणिस्थत्वात् । सुशोफा । विकारजत्वात् ॥ सुकेशी सुकेशावारथ्या ॥ अप्राणिस्थस्यापिप्राणिनिदृष्टत्वात् । सुस्तनीसुस्तनावाप्रतिमा ॥ प्राणिवत्प्राणिशद्वशोऽस्थित

त्वात् ॥ नासिकोदरोष्ठजंघादन्तकर्णशृङ्गाच्च ४ १ ५५ ॥ वाङीप् । तुंगनासिकी । तुंगनासिका ॥ पुच्छाच्च ॥ सुपुच्छी । सुपुच्छा ॥ कवरमणिविषशरेभ्योनित्यम् ॥ कवरपुच्छी ॥ उपमानात्पक्षाच्चपुच्छाच्च ॥ उलूकपक्षी शाला । उलूकपुच्छीसेना ॥ नक्रोडादिवह्वृचः ४ १ ५६ क्रोडादेर्वह्वृचश्चस्वांगान्नङीप् । कल्याणक्रोडा ॥ आकृतिगणोयं ॥ सुजघना ॥ सहनञ्विद्यमानपूर्वाच्च ४ १ ५७ ॥ नङीप् । सकेशा । अकेशा । विद्यमाननासिका ॥ नखमुखात्संज्ञायाम् ४ १ ५८ ॥ ङीप्न शूर्पणखा । गौरमुखा । संज्ञायांकिं । ताम्रमुखीकन्या ॥ वाहः ॥ ४ १ ६१ ॥ वाहन्तान्ङीप् । दित्यौहि ॥ सख्यशिश्वीति भाषायां ४ १ ६२ ॥ सखी । अशिश्वी ॥ जातेरस्त्रीविषयादयोपधात् ४ १ ६३ ॥ जातिवाचियन्नचस्त्रियान्नियतमयोपधंततोङीप् ॥ आकृतिग्रहणाजातिलिंगानांच नसर्वभाक् । सकृदाख्यातनिर्ग्राह्यागोत्रंचचरणैःसह ॥१॥ घटी । वृषली । औपगवी । कठी । जातेःकिं । मुंडा । अस्त्रीविषयात्किम् । वलाका । अयोपधात्किम् । क्षत्रिया ॥ योपधप्रतिषेधेगवयहयमुकयमनुष्यमत्स्यानामप्रतिषेधः ॥ गवयी । हयी । मुकयी । मनुषी । मत्सी ॥ पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च ४ १ ६४ ॥ पाकाद्युत्तरपदाज्जातिवाचिनःस्त्रीविषयादपिङीप् ॥ ओदनपाकी । शंकुकर्णी । शालपर्णी । शंखपुष्पी । दासीफली । दर्भमूली ॥ गोवाली । औषधिविशेषेरूढाः । इतोमनुष्यजातेः ४ १ ६५ ॥ ङीष् । दाक्षी ॥ ऊङुतः

४१६६ ॥ उकारांतादयोपधान्मनुष्यजातिवाचिनऊङ् । कुरूः ॥ पंगोश्च ४ १ ६८ ॥ पंगूः ॥ श्वशुरस्योकाराका रलोपश्च । चादूङ् ॥ पुंयोगलक्षणङीषोपवादः ॥ श्वश्रूः ॥ ऊरूत्तरपदादौपम्ये ४ १ ६९ ॥ उपमानवाचिपूर्वपद मुरूत्तरपदंयत्तस्मादूङ् ॥ करभोरूः ॥ संहितशफलक्षण वामादेश्च ४ १ ७० ॥ संहितोरूः ॥ सहितसहाभ्यांच ॥ सहितोरूः । सहोरूः ॥ शार्ङ्गरवाद्यञोङीन् ४ १ ६३ ॥ शार्ङ्गरवादेरञोयोकारस्तदन्ताच्चजातिवाचिनोङीन् ॥ शार्ङ्गरवी । वैदी । नृनरयोर्वृद्धिश्च । नारी ॥ यङश्चाप् ४ १ ७४ ॥ यङंताच्चाप् ॥ आंवष्ठ्या ॥ कारीषगन्ध्या । षाद्यञश्चाप्वाच्यः ॥ पौतिमाष्या ॥ आवट्याच्च ४ १ ७५ ॥ अस्माच्चाप् ॥ यञश्चेतिङीपोपवादः ॥ अवटश ब्दोगर्गादिः ॥ आवट्या ॥ यूनस्तिः ४ १ ७७ ॥ युव न्शब्दात्तिः ॥ युवतिः ॥ अनुपसर्जनादित्येव ॥ बहवो युवानोयस्यांबहुयुवा । युवतीतितुयौतेःशत्रन्तान्ङीपि बोध्यम् ॥ इतिस्त्रीप्रत्ययाः ॥ षष्ठीयुक्तश्छन्दसिवा १ ४ ९ ॥ पतिशब्दोघिसंज्ञः । क्षेत्रस्यपतिनावयं ॥ इह वेतियोगंविभज्यछंदसीत्यनुवर्त्तते ॥ तेनसर्वेविधयश्छ न्दसिवैकल्पिकाः ॥ बहुलंछन्दसीत्यादिरस्यैवप्रपंचः ॥ अयस्मयादीनिच्छन्दसि १ ४ २० ॥ साधूनि ॥ भप दसंज्ञाधिकाराद्यथायोगंसंज्ञाद्वयंबोध्यम् ॥ तथाचवा र्त्तिकं ॥ उभयसंज्ञान्यपीतिवक्तव्यमिति ॥ ससुष्टुभास ऋक्कतागणेन ॥ पदत्वात्कुत्वंभत्वाज्जश्त्वाभावः ॥ नै नंहिन्वंत्यपिवाजिनेषु ॥ अत्रपदत्वाज्जश्त्वंभत्वात्कु

त्वाभावः ॥ तेप्राग्धात्तोः ॥ छन्दसिपरेपि १ ४ ८१ ॥ व्यवहिताश्च १ ४ ८२ ॥ हरिभ्यांयाह्योकश्चा ॥ आ मन्द्रैरिन्द्रहरिभिर्याहि ॥ तृतीयाचहोश्छन्दसि २ ३ ३ जुहोतेःकर्मणितृतीयास्याद्द्वितीयाच ॥ यवाग्वाग्निहोत्रंजुहोति ॥ मंत्रेश्वेतवहोक्थशस्पुरोडाशोण्विन् ३ २ ७१ ॥ श्वेतवहादीनांडस्पदस्येतिवक्तव्यं ॥ यत्रपदत्वंभावितत्रण्विनोपवादोडस्वक्तव्यइत्यर्थः । श्वेतवाः ॥ श्वेतवाहौ ॥ श्वेतवाहः ॥ उक्थानिउक्थैर्वाशंसतिउक्थशायजमानः ॥ उक्थशासौ ॥ पुरोदास्यतेदीयतेपुरोडाः ॥ अवेयजः ३ २ ७२ ॥ अवयाः ॥ अवयाजौ ॥ अवयाजः ॥ अवयाःश्वेतवाःपुरोडाश्च ८ २ ६७ ॥ एतेसंबुद्धौकृतदीर्घानिपात्यन्ते ॥ चादुक्थशाः ॥ लिङर्थे लेट् ३ ४ ७ ॥ सिब्बहुलंलेटि ३ १ ३४ ॥ इतश्चलोपः परस्मैपदेषु ३ ४ ९७ ॥ लेटस्तिङांवा ॥ लेटोडाटौ ३ ४ ९४ ॥ स्तौवातौचपितौ । सिब्बहुलंणिद्वक्तव्यः ॥ वृद्धिः ॥ प्रणआयुंषितारिषत् ॥ सुपेशसस्करतिजोषिषद्धि ॥ आसाविषदर्शसानाय ॥ सिपइलोपस्यचाभावे ॥ पताातिविद्युत् ॥ प्रियःसूर्य्येप्रियोअग्नाभवाति ॥ सउत्तमस्य ३ ४ ९८ ॥ लेटउत्तमस्यवालोपः । करवावः ॥ करवाव ॥ टेरेत्वं ॥ आतऐ ३ ४ ९५ ॥ लेटआकारस्य ॥ सुतेभिःसुप्रयसामादयैते ॥ आतामित्याकारस्य ऐ ॥ वैतोन्यत्र ३ ४ ९६ ॥ लेटएकारस्यऐःस्याद्वा आतऐइत्यस्यविषयंविना ॥ पशूनामीशै । ग्रहाण्गृह्यांतै ॥ अन्यत्रकिं ॥ सुप्रयसामादयैते ॥ उपसंवादाशङ्कयोश्च

३ ४ ८ ॥ पणवंधेश्राशंकायांचलेट् ॥ अहमेवपशूना मीशे ॥ नेजूजिह्मायंतोनरकंपताम ॥ व्यत्ययोवहुलम् ३ १ ८५ ॥ विकरणानांछन्दसि ॥ आण्डाशुष्मस्यभे दति ॥ भिनत्तीतिप्राप्ते । जरसामरतेपतिः । म्रियतइति प्राप्ते । इन्द्रोवस्तेननेषतु ॥ नयतेलोट् । शप्सिपौद्वौ विकरणौ । इन्द्रेणयुजातरुषेमवृत्रं तरेमेत्यर्थः ॥ तर तेर्विध्यादौलिङ् ॥ उःसिपूशपूचेतित्रयोविकरणाः ॥ सुप्तिङुपग्रहलिंगनराणांकालहलच्स्वरकर्त्तृयङांच ॥ व्य त्ययमिच्छतिशास्त्रकृदेषांसोपिचसिध्यतिवाहुलकेन ॥१॥ धुरिदक्षिणायाः ॥ दक्षिणस्यामितिप्राप्ते ॥ चषालंयेअ श्वयूपायतक्षति ॥ तक्षंतीतिप्राप्ते ॥ उपग्रहःपरस्मैपदा त्मनेपदे ॥ ब्रह्मचारिणमिच्छते । इच्छतीतिप्राप्ते ॥ प्र तीपमन्यऊर्मिर्युध्यति । युध्यतइतिप्राप्ते । मधोस्तृप्ता इवासते । मधुनइतिप्राप्ते ॥ नरःपुरुषः । आसधावी रैर्दशभिर्वियूयाः । वियूयादितिप्राप्ते । कालःकालवा चकाःप्रत्ययाः ॥ श्वोग्निनाधास्यमानेन । लुटोविषये ल्रट् ॥ तमसोगाम्रदुक्षत् । अधुक्षदितिप्राप्ते ॥ मित्र वयंचसूरयः ॥ मित्रावयमितिप्राप्ते । स्वरव्यत्ययस्तुव क्ष्यते ॥ कर्त्तृशब्दःकारकमात्रपरः ॥ तथाचतद्वाचिनां कृत्तद्धितानांव्यत्ययः । अन्नादायः ॥ अणिविषयेअच् । यङोयशब्दादारभ्यलिङ्डाशिष्याङितिङकारेणप्रत्याहारः तेषांव्यत्ययोभेदतीत्यादिरुक्तएव ॥ छन्दस्युभयथा ३ ४ ११७ ॥ धात्वधिकारोक्तःप्रत्ययःसार्वधातुकार्द्धधा तुकोभयसञ्ज्ञःस्यात् ॥ वर्द्धंतुत्वासुष्टुतयः । वर्द्धयन्त्व

त्यर्थः ॥ आर्द्धधातुकत्वास्सिलोपः ॥ विस्तृणिरे ॥ सा र्वधातुकत्वात्श्नुःस्तृणीरश्च ॥ हुश्नुवोरितियण् ॥ तुम र्थेसेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यै न्तवैतवङ्तवेनः ३ ४ ९ ॥ से । वक्षेरायः ॥ सेन् । ता वामेषे । असे । शरदोजीवसेधाः । असेनित्याद्युदात्तः । क्से । प्रेषे । कसेन् । गवामिवश्रियसे । अध्यैअ ध्यैन् । जठरंपृणध्यै । पक्षेआद्युदात्तं । कध्यैकध्यै न् । आहुवध्यै । शध्यै । राधसःसहमादयध्यै । श ध्यैन् । वायवेपिबध्यै । तवै । दातवाउ । तवेङ् । सूतवे । तवेन् । कर्त्तवे । प्रयैरोहिष्यैअव्यथिष्यै ३ ४ १२ ॥ एतेनिपात्यंते ॥ प्रयातुंरोढुंअव्यथितुमित्यर्थः ॥ दृशेविख्येच ३ ४ ११ ॥ निपातौ । द्रष्टुंविख्यातुमित्य र्थः ॥ कृत्यार्थेतवैकेकेन्यत्वनः ३ ४ १४ ॥ धातोरेते स्युः ॥ तवै । अन्वेतवै ॥ केन् ॥ अवगाहे । केन्य ॥ दिदृक्षेण्यः ॥ त्वन् ॥ कर्त्वम् ॥ सृपितृदोःकसुन् ३ ४ १७ ॥ तुमर्थे ॥ पुराक्रूरस्यविसृपोविरप्शिन् । पुरा जतृभ्यआतृदः ॥ प्रकृत्यांतःपादमव्यपरे ६ १ ११५ ॥ ऋक्यादमध्यस्थएङ्प्रकृत्यास्यान्नतुवकारयकारपरेअति उपप्रयंतोअध्वरम् ॥ सुजातेअश्वसूनृते ॥ अन्तःपादं किं । एतासएतेर्चंति ॥ अव्यपरेकिं ॥ तेवदन् ॥ अ व्यादवस्यादवक्रमुरव्रतायमवं त्ववस्युपुच ६ १ ११६ ॥ एषुव्यपरेप्यतिएङ्प्रकृत्या ॥ वसुभिर्नोअव्यात् ॥ मित्र महोअवद्यात् ॥ मासीवासो अवक्रमुः ॥ तेनोअव्रत । शतधारोअयंमणिः । तेनोअवन्तु ॥ कुशिकासोअवस्य

वः ॥ सुपांसुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः ७ ३ ३
ऋजवःसंतुपंथाः ॥ पंथानइतिप्राप्ते ॥ परमेव्योमन् ॥
व्योमनीतिप्राप्ते ॥ धीतीमतीसुष्टुती । धीत्या । मत्या ।
सुष्टुत्येतिप्राप्तेपूर्वसवर्णः ॥ यासुरथारथीतमा । यौसु
रथावितिप्राप्तेआ । नताद्ब्राह्मणम् ॥ नतमितिप्राप्तेआ
त् ॥ यादेवाविद्मतात्वा । यतिमिप्राप्ते ॥ नयुस्मेवा जवं
धवः ॥ अस्मेइन्द्रावृहस्पती ॥ युष्मासुअस्मभ्यमितिप्रा
प्तेशे । उरुयाधृष्णुया । उरुणा । धृष्णुनेतिप्राप्तेया न भा
पृथिव्याः । नाभावितिप्राप्तेडा ॥ ताअनुष्ट्योच्यावयता
त् । आडीड्या । साधुया । साध्वितिप्राप्तेयाच् । वसंताय
जेत । वसंतइतिप्राप्तेआल् ॥ इयाडियाजीकाराणामुपसं
ख्यानम् ॥ उर्विया ॥ उरुणेतिप्राप्तेइया । सुक्षेत्रिया सुक्षे
त्रिणेतिप्राप्तेडियाच् । दृतिंनशुष्कंसरसीशयानं । सर
स्यामितिप्राप्तेई ॥ आज्जसेरसुक् ७ १ ५० ब्राह्मणासः ।
तन्वादीनांवेयड्डवडौ ॥ तन्वंपुषेम । तनुवंपुषेम ॥ विष्वं
पश्य । विषुवंपश्य ॥ स्वर्गोलोकः ॥ सुवर्गोलोकः ॥
त्र्यंबकं ॥ त्रियंबकं ॥ वरेण्यं ॥ वरेणियं ॥ अतोभिस
ऐस् ॥ बहुलंछन्दसि ७ १ १० ॥ अग्निर्देवेभिः ॥ मंत्रे
घ्वाड्यादेरात्मनः ६ ४ १४१ ॥ आत्मन्शब्दस्यादेर्लोप
आङि ॥ त्मनादेवेषु ॥ अपोभिः ॥ मासश्छन्दसीति
वक्तव्यम् ॥ माद्भिः ॥ शरद्भिः ॥ प्रसमुपोदःपादपूरणे
८ १ ६ ॥ एषांद्विस्तः । प्रप्रायमग्निः । संसमिद्युवसे ॥
उपोपमेपरामृश ॥ किन्नोदुदुहर्षसे ॥ षष्ठ्याःपतिपुत्र
पृष्ठपारपदपयस्पोषेषु ८ १ ५३ ॥ विसर्गस्यःसःस्यात् ।

वाचस्पतिंविश्वकर्माणम् ॥ दिवस्पृथ्व्याः । पर्यन्तरिक्षात् ॥ अग्नेस्त्रायस्व ॥ दिवस्पर्यास्य । दिषस्पृष्ठंभंदमानः ॥ तमसस्पारमस्य ॥ परिवीतइलस्य दे ॥ दिवस्पयोदिधिषणाः ॥ रायस्पोषंयजमानेषुधत्त म् । इतिवैदिकप्रक्रिया ॥ धातोः ६.१.१६२ ॥ अन्त उदात्तःस्यात् ॥ अनुदात्तंपदमेकवर्जं । ६ १ १५८ ॥ परिभाषेयंस्वरविधिविषया ॥ यस्मिन्पदेयस्योदात्तःस्व रितोवाविधीयतेतमेकमचंवर्जयित्वाशेषन्तत्पदमनुदा त्ताच्कंस्यात् ॥ गोपायतन्नः ॥ अत्रसनाद्यन्ताधातव इतिधातुत्वेधातुस्वरेणयकाराकारउदात्तः ॥ शिष्टमनु दात्तं ॥ उदात्तादनुदात्तस्यस्वरितः ८ ४ ६६ ॥ इति तकाराकारःस्वरितः ॥ स्वरितात्संहितायामनुदात्तानां १ २ ३९ ॥ एकश्रुतिःस्यात् ॥ इतिनकाराकारःप्रचयः । अनुदात्तस्यचयत्रोदात्तलोपः ६ १ १६१ ॥ यस्मिन्न नुदात्तेउदात्तोलुप्यतेतस्योदात्तः । देवींवाचं ॥ अत्रङी बुदात्तः ॥ आद्युदात्तश्च ३ १ ३ ॥ प्रत्ययस्याद्युदात्तःस्या त् ॥ कर्त्तव्यं ॥ अनुदात्तौसुप्पितौ ३ १ ४ ॥ पूर्वस्या पवादः ॥ यज्ञस्य । नयोयुच्छति ॥ शप्तिपोरनुदात्तत्वे स्वरितप्रचयौ ॥ चितः ३ १ १६३ ॥ अन्तउदात्तःस्यात् ॥ चितःसप्रकृतेर्बह्वकजर्थम् । चितिप्रत्ययेसतिप्रकृतिप्रत्य यसमुदायस्यान्तउदात्तोवाच्यइत्यर्थः ॥ नभन्तामन्यके समे । यकेसरस्वती ॥ तकत्सुते ॥ तद्धितस्य ६ १ १६४ ॥ चितस्तद्धितस्यांतउदात्तः ॥ पूर्वेणसिद्धेजित्स्वरबाधना र्थम् ॥ कौञ्जायनाः ॥ कितः ६ १ १६५ ॥ कितस्तद्धि तस्यांतउदात्तः । यदाग्नेयः ॥ तित्स्वरितम् ६ १ १८५ ॥

क्नूनं ॥ उपोत्तमंरिति ६ १ ११७ ॥ रित्प्रत्ययान्त स्योपोत्तममुदात्तंस्यात् । यदाहवनीये । ञ्नित्यादिर्नित्यम् ६ १ १९७ ॥ ञिदंतस्य निदन्तस्यचादिरुदात्तः । यस्मिन्विश्वानिपौंस्याः ॥ पुंसःकर्मणिब्राह्मणादित्वात्ष्यञ् । सुतेदधिष्वनश्चनः ॥ चायतेरसुन् ॥ चायतेरन्नेह्रस्वश्चेतिचकारादसुनोनुडागमः ॥ लिति ६ १ १९६ ॥ प्रत्ययात्पूर्वमुदात्तंस्यात् ॥ चिकीर्षकः ॥ अत्रईकारस्योदात्तता ॥ इत्यादिप्रयोगमनुसृत्यान्वाख्यातव्यम् ॥ ६३ इतिस्वरप्रक्रिया ॥ ६३ ॥ एषावरदराजेनवालानामुपकारिका ॥ अकारिपाणिनीयानांमध्यसिद्धान्तकौमुदी ॥ १ ॥ कृतिर्वरदराजस्यमध्यसिद्धान्तकौमुदी ॥ तस्या संख्यातुविज्ञेयाखवाणकरवह्निभिः ॥ २ ॥ ३२५० ॥ इतिश्रीचविटकंविटवरदराजकृतामध्यसिद्धान्तकौमुदी समाप्ता । शुभम् ॥ ॥ ॥

लिङ्गम् । स्त्री । अधिकारसूत्रेएते ॥ ऋकारान्तामातृदुहितृस्वसृयातृननन्दरः १ । एते पञ्चैवस्त्रीलिङ्गाः ॥ अन्यूप्रत्ययान्तोधातुः २ । अनिप्रत्ययान्तऊप्रत्यान्तश्चधातुःस्त्रियांस्यात् । अवनिः । चमूः । मिन्यन्तः ३ मिनिप्रत्ययान्तौस्त्रियाम् ॥ भूमिः । ग्लानिः ॥ क्तिन्नन्तः ४ । कृतिरित्यादि । ईप्रत्ययान्तश्च ५ । लक्ष्मीः ॥ ऊङाबन्तश्च ६ । कुरूः । अजा । य्वन्तमेकाक्षरम् ७ । श्रीः । भूः । विंशत्यादिरानवतेः ८ । इयंविंशतिः । तलन्तः ९ । शुक्लता । भाःस्रुक्स्रग्दिगुष्णिगुपानहः १० । इयंभाः । स्थूणोर्णेनपुंसकेच ११ । स्थूणा । स्थूण

म् । शष्कुलिराजिकुट्यशनिवर्त्तिभृकुटित्रुटिवलिपङ्क्तयः १२ । एताः स्त्रियांस्युः । इयंशष्कुलिः ॥ अप्सुमनस्समासिकतावर्षाणांबहुत्वञ्च १३ ॥ अबादीनाम्पञ्चानां स्त्रीत्वंस्याद्बहुत्वञ्च । आपइमाः ॥ ताराधाराज्योत्स्नादयश्च १४ । इयन्तारा ॥ इतिस्त्र्यधिकारः ॥ ॥

पुमान् । अयमधिकारः ॥ घञबन्तः १ । पाकः । करः । भावार्थएवेदम् । घाजन्तश्च २ । विस्तरः । चयः । भयलिङ्गभगपदानिनपुंसके ३ । भयमित्यादि । नहन्तः ४ । पुंसिस्यात् । यज्ञइत्यादि । याञ्चास्त्रियाम् ५ । पूर्वस्यापवादः । क्यन्तोघुः ६ । आधिः । प्रधिः । इषुधिःस्त्रीच ७ । चात्पुंसि । इयमयंवाइषुधिः । द्यौःस्त्रियाम् ८ । क्रतुपुरुषकपोलगुल्फमेघाभिधानानि ९ । क्रतुरध्वरः । अभ्रन्नपुंसकम् १० । पूर्वस्यापवादः । उदंतः ११ । अयंपुंसिस्यात् । प्रभुः । विभुः । धेनुरज्जुकुहुसरयुतनुरेणुप्रियंगवःस्त्रियाम् १२ । इयंधेनुः । रुत्वंतः १३ मेरुः । सेतुः । दारुकसेरुजतुवस्तुमस्तूनिनपुंसकेच १४ इदंदारु दारुः । सक्तुर्नपुंसकेच १५ । सक्तु । सक्तुः । अदंतइत्यधिकृत्य । कोपधः १६ । कोपधोकारान्तःपुंसिस्यात् । स्तबकः । कल्कः । चिबुकादीनिनपुंसके १७ । चिबुकम् । टोपधः १८ । अदन्तःपुंसि । घटः । पटः । किरीटादीनिनपुंसकेच १९ । किरीटम् किरीटः । णोपधः २० अदन्तःपुंसि । गणः । पाषाणः । ऋणादीनिपुंसके २१ ऋणम् । कार्षापणादीनिनपुंसकेच २२ । चात्पुंसि । थोपधः २३ । अदन्तःपुंसि । रथः । यूथः । नोपधः

२४ । अदन्तःपुंसि । इनः । फेनः । जघनादीनिनपुंसके २५ । जघनम् । पोपधः २६ । अदन्तःपुंसि । दीपः । पर्पः । पापादीनिनपुंसके २७ । पापम् । शूर्पकुतपकुणपद्वीपविटपानिनपुंसकेच २८ । चात्पुंसि ॥ भोपधः २९ । कुंभः । सरभः । तलभंनपुंसकम् ३० । जृंभन्नपुंसकेच ३१ । मोपधः ३२ । होमः । घर्मः । रुक्मादीनिनपुंसके ३३ । इदंरुक्ममित्यादि । संग्रामादीनिनपुंसकेच ३४ । चात्पुंसि । संग्रामः । संग्रामम् । योपधः ३५ । हयः । समयः । किसलयादीनिनपुंसके ३६ । गोमयादीनिनपुंसकेच ३७ । रोपधः ३८ । क्षुरः खुरः । अंकुरः । द्वारादीनिनपुंसके ३९ । इदंद्वारम् । शुक्रमदेवतायाम् ४० । देवतायांतुशुक्रः । षोपधः ४१ । वृषः वृक्षः । शिरीषादीनिनपुंसके ४२ । इदंशिरीषम् । सोपधः ४३ । वायसः । महानसः । पनसविसवुससाहसानिनपुंसके ४४ । चमसादीनिनपुंसकेच ४५ । चात्पुंसि । कंसंचाप्राणिनि ४६ । कंसःकंसंवापानपात्रम् ४७ । प्राणिनितुकंसऔग्रसेनिः । रश्मिदिवाभिधानानि ४८ अतइतिनिवृत्तम् । दीधितिःस्त्रियाम् ४९ । दिनाहनीनपुंसके ५० । दिनम् । अहः । मानाभिधानानि ५१ । कुडवः । द्रोणाढकौनपुंसकेच ५२ । चात्पुंसि । खारीमानिकेस्त्रियाम् ५३ । इयंखारिः । दाराक्षतलाजासूनांबहुत्वंच ५४ । इमेदाराः । मरुद्गरुत्तरद्वृत्विजः ५५ । अयंमरुत् । ध्वजगतमुञ्जपुञ्जाः ५६ । एतेपुंसि । वंशांशपुरोडाशाः ५७ । अयंवंशः । ह्रदकन्दकु

न्दवुद्बुदशब्दाः ५८ । अयंहृदः । अर्घपथिमथ्यृभुक्षिस्त
म्बनितम्बपूगाः ५९ । अयमर्घः । सारथ्यतिथिकुक्षि
वस्तिपाण्यञ्जलयः ६० ॥ इतिपुंल्लिंगाधिकारः ॥
पल्लवपल्वलकफरेफकटाहनिर्व्यूहमठमणितरङ्गतुरङ्ग
गन्धस्कन्धमृदङ्गसङ्गसमुद्रपुङ्खाः ६१ । अयंपल्लवइत्यादि ।
ऋषिराशिदृतिग्रन्थिक्रिमिध्वनिबलिकौलिमौलिरविक
विकपिमुनयः ६२ । एतेपुंसिस्युः । अयमृषिः । हस्त
कुन्तान्तव्रातवातदूतधूर्त्तसूतचूतमुहूर्त्ताः ६३ । एतेपुं
सि । अयंहस्तइत्यादि ॥ इतिपुल्लिङ्गाधिकारः ॥
नपुंसकम् अयमधिकारः । भावेल्युडन्तः १ । ज्ञानम्
हसनम् । भावेकिम् । पचनः । निष्ठाच २ । भावेया
निष्ठातदन्तंक्लीवंस्यात् । गीतम् । त्वष्यञौतद्धितौ ३ ।
शुक्लत्वम् । शौक्ल्यम् । षित्वसामर्थ्यात्पक्षेस्त्रीत्वेङीष्
चातुरी । कर्मणिचब्राह्मणादिगुणवचनेभ्यः ४ । ब्राह्म
ण्यम् । यद्यढग्यगञ्वुञ्छाश्चभावकर्मणि ५ । एतानि
क्लीबानि । स्तेयम् । सख्यम् । कापेयम् । सेनापत्यम् ।
औष्ट्रम् । द्वैहायनम् । पितापुत्रकम् । अच्छावाकीय
म् । अव्ययीभावः ६ । अधिहरि । द्वन्द्वैकत्वम् ७ । पा
णिपादम् । अनल्पेछाया ८ । शरच्छायम् । इसुसन्तः ९
हविः । सर्पिः । धनुः । अर्चिःस्त्रियांच १० । इदमि
यंवार्चिः । छदिःस्त्रियामेव ११ । इयंछदिः । मुखनय
नलोहवनमांसरुधिरकार्मुकविवरजलहलधनान्नाभिधा
नानि १२ । एषामभिधायकानिक्लीवंस्युः । मुखमाननंव
क्त्रम् । इत्यादि । सीरार्थोदनाःपुंसि १३ । वक्त्रनेत्रार

णयगांडीवाणिनपुंसिच १४ । चात्क्लीवे । अटवीस्त्रियाम् १५ । पूर्वस्येयंत्रिसूत्रीवाधिका ॥ लोपधः १६ । कुशलम् । शीलादीनिपुंसिच १७ । चातक्लीवे । शीलम् । शतादिःसंख्या १८ । शतम् । सहस्रम् । शतायुतप्रयुताःपुंसिच १९ । लक्षाकोटिःस्त्रियाम् २० । इयंलक्षा । सहस्रःपुंसि २१ । मन्द्व्यच्कोकर्त्तरि २२ । मन्प्रत्ययान्तोद्व्यच्कःपुंसिस्यात्चात्क्लीवेनतुकर्त्तरि । वर्मा । वर्म । अकर्त्तरिकिम् । ददातीतिदामा । ब्रह्मन्पुंसिच २३ । अयंब्रह्मा । इदंब्रह्म । नामरोमणीक्लीवे २४ । पूर्वस्यापवादः । असन्तोद्व्यच्कः २५ । यशः । मनः । तपः । अप्सराःस्त्रियाम् २६ । एताअप्सरसः । त्रन्नन्तः २७ पत्रम् । छत्रम् । यात्रामात्राभस्त्रादंष्ट्रावरत्राःस्त्रियामेव २८ ॥ इतिनपुंसकाधिकारः ॥ स्त्रीपुंसयोः १ । अयमधिकारः । गोमणियष्टिमुष्टिपाटलिवस्तिशाल्मलित्रुटिमसिमरीचयः २ । इयमयंवागौः । अपत्यार्थतद्धिते ३ । औपगवः । औपगवी ॥ इतिस्त्रीपुंसाधिकारः ॥ पुन्नपुंसकयोः । अधिकारोयम् । घृतभूतमुस्तक्ष्वेलितैरावतपुस्तकबुस्तलोहिताः १ । अयंघृतः । इदंघृतम् । कवन्धौषधायुधान्ताः २ । रूपष्टम् दण्डमण्डखण्डशवसैंधवपार्श्वाकाशाङ्कुशकुलिशाः ३ । दंडः । दंडम् ॥ इतिपुंन्नपुंसकाधिकारः ॥ अव्ययमत्तशिष्टलिङ्गम् १ । कतियुष्मदस्मदः २ । ष्णान्तासंख्याशिष्टापरवत् ३ । एकःपुरुषः । एकास्त्री । एकंकुलम् । गुणवचनम् ४ । शुक्लःपटः । शुक्लापटी । शुक्लंवस्त्रम् । कृत्याश्च ५ ।

करणाधिकरणयोर्ल्युट्च ६ । सर्वादीनिसर्वनामानि ७ । स्पष्टार्थयंत्रिसूत्री ॥ इतिश्री भट्टोजिदीक्षित विरचित पाणिनीय लिङ्गानुशासन सारभूता लिङ्गानुशासन सूत्र वृत्तिः समाप्ता ॥　　॥　　॥

॥ इति शुभम् ॥



गयगांडीत्रानिपुंसिच १४ । चात्क्लीवे । अटवीस्त्रियाम् १५ । पूर्वस्येयंत्रिसूत्रीवाधिका ॥ लोपधः १६ । कुशलम् । शीलादीनिपुंसिच १७ । चात्क्लीवे । शीलम् । शतादिःसंख्या १८ । शतम् । सहस्रम् । शतायुतप्रयुताःपुंसिच १९ । लक्षाकोटिःस्त्रियाम् २० । इयंलक्षा । सहस्रःपुंसि २१ । मन्द्व्यच्कोकर्त्तरि २२ । मन्प्रत्ययान्तोद्व्यच्कःपुंसिस्यात्चात्क्लीवेनतुकर्त्तरि । वर्मा । वर्म । अकर्त्तरिकिम् । ददातीतिदामा । ब्रह्मन्पुंसिच २३ । अयंब्रह्मा । इदंब्रह्म । नामरोमणीक्लीवे २४ । पूर्वस्यापवादः । असन्तोद्व्यच्कः २५ । यशः । मनः । तपः । अप्सराःस्त्रियाम् २६ । एताअप्सरसः । त्रन्नन्तः २७ पत्रम् । छत्रम् । यात्रामात्राभस्त्रादंष्ट्रावरत्राःस्त्रियामेव २८ ॥ इतिनपुंसकाधिकारः ॥ स्त्रीपुंसयोः १ । अयमधिकारः । गोमणियष्टिमुष्टिपाटलिवस्तिशाल्मलित्रुटिमासिमरीचयः २ । इयमयंवागौः । अपत्यार्थतद्धिते ३ । औपगवः । औपगवी ॥ इतिस्त्रीपुंसाधिकारः ॥ पुन्नपुंसकयोः । अधिकारोयम् । घृतभूतमुस्तक्ष्वेलितैरावतपुस्तकवुस्तलोहिताः १ । अयंघृतः । इदंघृतम् । कवन्धौषधायुधान्ताः २ । स्पष्टम् दण्डमण्डखण्डशवसैंधवपार्श्वाकाशाङ्कुशकुलिशाः ३ । दंडः । दंडम् ॥ इतिपुंन्नपुंसकाधिकारः ॥ अव्ययमत्रशिष्टलिङ्गम् १ । कतियुष्मदस्मदः २ । ष्णान्तासंख्याशिष्टापरवत् ३ । एकःपुरुषः । एकास्त्री । एकंकुलम् । गुणवचनम् ४ । शुक्लःपटः । शुक्लापटी । शुक्लंवस्त्रम् । कृत्याश्च ५ ।

करणाधिकरणयोर्ल्युट्च ६। सर्वादीनिसर्वनामानि ७। स्पष्टार्थैयंत्रिसूत्री ॥ इतिश्री भट्टोजिदीक्षित विरचित पाणिनीय लिङ्गानुशासन सारभूता लिङ्गानुशासन सूत्र वृत्तिः समाप्ता ॥ ॥ ॥

॥ इति शुभम् ॥

